**Government Oriental Library Series.**

**BIBLIOTHECA SANSKRITA—No. 35.**

# पूर्वमीमांसादर्शनम्

## श्रीखण्डदेवविरचितया भाट्टदीपिकया

श्री-कस्तूरि-रंगाचार्य-विरचितया निवीतान्तसूत्रवृत्त्या च सहितम्.

१म संपुटम्—आदितः ३याध्याय ४र्थ पादान्तम्.



# PŪRVA-MÎMÂMSÂ-DARSANA

**WITH KHANDADEVA'S BHÂTTA-DÎPIKÂ**

## VOL. I.

EDITED BY

A. MAHADEVA SASTRI, B.A.,

*Curator, Government Oriental Library, Mysore.*



PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJA OF MYSORE.

MYSORE

1908

# भूमिका.

भाट्टदीपिकाभिधानोऽयं प्रबन्धः श्रीखण्डदेवविरचितः पूर्वमीमांसाधिकरणार्थप्रकाशकः सुप्रसिद्धः जैमिनीयन्यायसारविविदिषुभिरत्यन्तमपेक्षितोपि क्वाप्यमुद्रितपूर्व इति अत्र ग्रन्थमालायां तस्य प्रकटीकरणमावश्यकमित्युत्पश्यामः ।

अस्मिंश्च ग्रन्थे भट्टकुमारिलस्य वार्तिककारस्य मतमनुसृत्य द्वादशलक्षण्याः पूर्वमीमांसाया अधिकरणार्थास्सर्वे विविच्य प्रतिपाद्यन्ते पूर्वपक्षसिद्धान्तरूपेण । अस्या भाट्टदीपिकायाः नातिसुग्रहार्थायाः व्याख्यानानि त्रीणि समुपलभ्यन्ते चन्द्रिकाप्रभावलीचिन्तामण्याख्यानानि भास्करराजशम्भुभट्टवाञ्छेश्वरप्रणीतानि । ग्रन्थविस्तरभिया तेषामेकतमस्याप्यत्र मुद्रणं न प्रक्रान्तम् ।

यद्यपि मीमांसादर्शनसूत्राणामीषन्न्यूनत्रिसहस्रपरिमितानां प्रत्येकमर्थविचारस्यातिदीर्घकालसाध्यतया तत्तदधिकरणार्था एव बुभुत्स्यन्ते शास्त्रान्तराध्येतृभिः, तथैव च निबध्यन्ते ग्रन्थकारैस्संग्रहीतृभिः खण्डदेवादिभिः । तथाऽपि मूलभूतसूत्रार्थजिज्ञासूनामनुग्रहाय भाट्टमतानुयायिनी नवीनाऽल्पग्रन्था सारबोधिन्याख्या वृत्तिरप्यत्र संयोजिता श्रीमता तर्कतीर्थपण्डितरत्नेत्यादिबिरुदाङ्कितेन कस्तूरीरङ्गाचार्येण विद्वद्वर्येण प्रणीता ।

आचार्येण श्रीमता खण्डदेवेन आधुनिकफक्किकया मीमांसाशास्त्रप्रवर्तयितृषु अग्रगण्येन विरचितौ मीमांसाकौस्तुभभाट्टरहस्याभिधौ प्रबन्धौ वर्तेते. सोऽयं खण्डदेवः श्रीरुद्रदेवतनय इति तदीयवाक्येभ्योऽवधार्यते । अवगम्यते च श्रीजगन्नाथपण्डितराजस्य महाकवेः जनकः पेरुभट्टनामा तन्त्रचतुष्टयविशारदः काश्यां खण्डदेवसकाशे मीमांसाशास्त्रमध्यगीष्टेति पण्डितराजविरचितस्य रसगङ्गाधराभिधालङ्कारप्रबन्धस्यादावुपलभ्यमानाभ्यामाभ्यां पद्याभ्याम् —

श्रीमज्ज्ञानेन्द्रभिक्षोरधिगतसकलब्रह्मविद्याप्रपञ्चः ।<br>
काणादीराक्षपादीरपि गहनगिरो यो महेन्द्रादवेदीत् ॥

देवादेवाध्यगीष्ट स्मरहरनगरे[1] शासनं जैमिनीयं
शेषाङ्कप्राप्तशेषामलफणितिरभूत्सर्वविद्याधरो यः ॥
पाषाणादपि पीयूषं स्यन्दते यस्य लीलया ।
तं वन्दे पेरुभट्टाख्यं लक्ष्मीकान्तं महागुरुम् ॥ इति ॥

एतेनास्य समयोऽपि सुनिर्णेयो भवति, यतः पण्डितरायः सुप्रसिद्ध-जीवितकालस्य षाजिहान्चक्रवर्तिनः सभामलंचकारेति सुविदितमेव । तथाच तज्जनकस्य पेरुभट्टस्य मीमांसाऽध्यापक आचार्यखण्डदेवः ईषन्न्यूनाधिकैः पञ्चाशद्वत्सरैः पण्डितरायापेक्षया प्राचीन इति संभावयितुं शक्यते ॥

एतत्संपुटगतस्य ग्रन्थभागस्य शोधनार्थमादर्शीकृतानि पुस्तकानि प्रदर्शयिष्यन्ते :—

(1) एतस्यां शालायां संगृहीतं कागदमयं कार्णाटाक्षरमध्यायत्रयपरिमितमेकम् (A 30) संख्याङ्कितम्

(2) तथैव—तालपत्रमयमान्ध्राक्षरं (785) संख्यासमलंङ्कृतमपरम्.

(3) श्रीमन्महाराजसदनस्थसरस्वतीभण्डारसंगृहीतं तालपत्रमयमध्यायाष्टकपरिमितमन्यत् (216) संख्यासमलंकृतम्.

(4) आस्थानधर्माधिकारिणां श्रीमतां सुन्दरशास्त्रिणां सकाशादानीतं ग्रन्थाक्षरमयमध्यायनवकपरिमितं तुरीयम्.

(5) एतच्छालायामेव संगृहीतानि कागदमयानि श्रीशम्भुभट्टप्रणीतभाट्टदीपिकाप्रभावल्याख्यानव्याख्यानपुस्तकानि (A 73 – 79) सङ्ख्याङ्कितानि षष्ठदशमैकादशैस्त्रिभिरध्यायैरेव विकलानि.

(6) अत्रैव सगृहीतं भास्करराजकृतचन्द्रिकाभिधानव्याख्यानपुस्तकं आदितः 2ये 2यपादसमाप्त्यन्तं (C 1201) संख्याङ्कितम्.

(7) अत्रैव संगृहीतं वांछेश्वरविरचितचिन्तामण्याख्यानव्याख्यानपुस्तकं 3येऽध्याये पादत्रयपरिमितं (C 1202) संख्यासमलंकृतम्.

अ. महादेवशास्त्री.

---

[1] " देवादेव=खण्डदेवादेव . . . . . . . स्मरहरनगरे=काश्याम् " । इति नागेशभट्टीका.

# भाट्टदीपिका प्रथमसम्पुट विषयसूचिका.



## प्रथमाध्यायस्य प्रथमः पादः.



## प्रथमाध्यायस्य द्वितीयः पादः.

## प्रथमाध्यायस्य तृतीयः पादः

## प्रथमाध्यायस्य चतुर्थः पादः

अधिकरणसङ्ख्या पृष्ठसङ्ख्या

## द्वितीयाध्यायस्य प्रथमः पादः.

अधिकरणसङ्ख्या पृष्ठसङ्ख्या



## द्वितीयाध्यायस्य द्वितीयः पादः.

## द्वितीयाध्यायस्य तृतीयः पादः

# तृतीयाध्यायस्य द्वितीयः पादः.

अधिकरणसङ्ख्या | पुटसङ्ख्या

## तृतीयाध्यायस्य तृतीयः पादः

## तृतीयाध्यायस्य चतुर्थः पादः.

# अशुद्धशोधनम्.

—o—

| पुटे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 3 | 2 | प्रसाङ्गत् | प्रसङ्गात् |
| 5 | 17 | विषयै | विषयौ |
| 15 | 9 | भूयत्स्वात् | भूयस्त्वात् |
| 19 | ,, | पूर्णाहुति | पूर्णाहुतिं |
| ,, | 22 | विशेषाया | विषेषस्य |
| 24 | 11 | तत्सामान्याम् | तत्सामान्यात् |
| ,, | 22 | दवता | देवता |
| 25 | 10 | भावना | भवना |
| 26 | 16 | करणत्व | करण |
| 28 | 23 | सत्रा | सूत्रा |
| 30 | 1 | प्रषमन्त्र | प्रैषमन्त्र |
| ,, | 7 | अचेतनार्थे | अचेतने अर्थे |
| 32 | 13 | विद्यायां | विद्यायाः |
| 34 | 11 | प्रयोग | प्रयोगा |
| 35 | 12 | शेष | शेषि |
| 44 | 13 | स्मृति | श्रुति |
| 55 | 2 | जातश्चे | जातेश्च |
| 56 | 7 | शक्त्यत्व | शक्तत्व |
| 58 | 13 | व्यापारान्तरेण | व्यापारान्तरमन्तरेण |
| 64 | 19 | यागाङ्गतया | याजाङ्गतया |
| 67 | 1 | यवासुद्रव्यं | यवागूद्रव्ये |

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 68 | 16 | शिष्टां | शिष्टाः |
| 69 | 3 | सः | स- |
| 72 | 1 | कपाल | कपालं |
| 86 | 23 | फलभावना | फलभवना |
| 89 | 1 | न वा पूर्वसिद्धिः | नवापूर्वसिद्धिः |
| 90 | 9 | अदृष्टस्यवास्य | अदृष्टस्यावश्य |
| 95 | 22 | शास्त्र | शास्त्रं |
| 244 | 11 | उच्चत् | उच्चैर् |
| 256 | 5 | प्रकाशस्य | प्रकाशकस्य |
| ,, | 6 | इत्युन्तरार्धेन | इत्युत्तरार्धेन |
| 269 | 3 | लोकापि | लोकेऽपि |
| 273 | 21 | एवं | एव |
| 281 | 6 | स्यांप | स्योप |
| 289 | 1 | शास्त्र | शास्त्र |
| 293 | 2 | मनष्य | मनुष्य |
| ,, | 6 | ,, | ,, |
| 297 | 18 | वचन | वचना |
| 311 | 15 | पात्रमी | पात्रैर्मा |
| 336 | 17 | पृथिवायं | पृथिवीयं |
| ,, | 18 | समासयर्थत्वन | समासयर्थत्वेन |
| 349 | 11 | मुख्यस्योत | मुख्यस्येति |
| ,, | 12 | च्छष | च्छेष |
| ,, | 20 | इ | इति |



हरिः ओम्

# पूर्वमीमांसादर्शनम्.

## भाट्टदीपिकासहितम्



विश्वेश्वरं नमस्कृत्य खण्डदेवस्सतां मुदे ।
तनुते तत्प्रसादेन संक्षिप्तां भाट्टदीपिकाम् ॥

इह खलु निखिलपुमर्थानर्थसाधनौ धर्माधर्मौ साङ्गोपाङ्गवेदाध्ययनसमधिगम्यौ । तच्च विचारमन्तरेण न भाव्यायालमिति तत्प्रदर्शनाय परमकारुणिको भगवान् जैमिनिराचार्यः सकलविद्योपकारिधर्ममीमांसां 'अथातो धर्मजिज्ञासा' इत्यारभ्य 'विद्यते वाऽन्यकालत्वात् यथा याज्यासम्प्रैषः' इत्यन्तैस्सूत्रैः बह्वधिकरणगर्भितां षोडशलक्षणीं अभ्यर्हितां विद्यां प्रकटीचकार । अधिकरणं तु वेदवत् षडङ्गम् । यदाहुः—

विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम् ।
प्रयोजनं सङ्गतिश्च प्राञ्चोऽधिकरणं विदुः ॥ इति ।

सङ्गतिस्तु प्रसङ्गादिभेदात् बहुविधा । तत्रेदमाद्यमधिकरणम्—

### (१)—अथातो धर्मजिज्ञासा ॥ १ ॥

श्रियः पतिं संप्रणम्य खण्डदेवमते पथि ।
वृत्तिर्जैमिनिसूत्राणां रङ्गनाथेन तन्यते ॥

अथ गुरुकुलवासपुरस्सरं साङ्गवेदाध्ययनानन्तरं अतः वेदाध्ययनस्य अर्थज्ञानरूपदृष्टफलकत्वाद्धेतोः **धर्मजिज्ञासा** वेदार्थरूपस्य धर्मस्य विचारः कर्तव्यः ॥ १ ॥

अत्र 'स्वाध्यायोऽध्येतव्यः'* इत्यध्ययनविधिवाक्यं विषयः। वेदाध्ययनानन्तरं वेदार्थविचारः कर्तव्यो वा न वेति सन्देहः।

तत्र पूर्वः पक्षः—'अधीत्य स्नायात्' इति स्मृत्याऽध्ययनानन्तरमेव गुरुकुलात्परावर्तनविधानविरोधात् न कर्तव्यः। न चाध्ययनविधित एव अर्थज्ञानभाव्यकत्वावगमात् तत्सिद्धिः। अर्थज्ञानजनकत्वेन अध्ययनस्य लोकसिद्धत्वेन अविधेयत्वात्। तन्नियमस्य च अर्थज्ञाने अनुपयोगात्, अव्यभिचारितक्रतुसम्बन्धाभावेन क्रतुं यावदुपयोगकल्पनानुपपत्तेश्च न विधेयत्वम्। अतः स्वर्गाद्यर्थमेव अध्ययनं विधीयते। लोकतः पूर्वं प्रवृत्त्यङ्गीकारेण यथाश्रुतार्थज्ञानार्थं वा। अध्ययनमेव वा भावनाभाव्यमस्तु। न चैवमिष्टभाव्यकत्वाभावात् प्रवृत्त्यनुपपत्तिः। 'अनधीयाना व्रात्या भवन्ति' इति वचनेन अकरणे प्रत्यवायबोधनेनापि प्रवृत्तिसिद्धेः। तस्मान्नार्थविचारार्थं गुरुकुलेऽवस्थानमिति ॥

सिद्धान्तस्तु—न स्वाध्यायविधिः स्वर्गाद्यर्थमध्ययनं विधत्ते दृष्टे सम्भवत्यदृष्टस्यान्याय्यत्वात्। नापि यथाश्रुतार्थज्ञानार्थम्। तथात्वे व्रात्यताबोधकवाक्येन अध्ययनस्यावश्यकत्वात् गृहीतपदपदार्थसङ्गतिकस्य

'स्थाणुरयं भारहारः किलाभूत्
अधीत्य वेदं न विजानाति योऽर्थम्'

---

*तै. आ. २—१५.

इत्यादिवचनाच्च ज्ञानस्याप्यावश्यकत्वेन यथाश्रुतार्थज्ञानस्य आनुषङ्गिकतयाऽपि सिद्धेः स्वाध्यायविधिवैयर्थ्यप्रसङ्गात् । एतेन—अध्ययनभाव्यकत्वपक्षोऽपि निरस्तः । अतो वैयर्थ्यपरिहारार्थं प्रयोजनवदर्थज्ञानाद्युद्देशेन स्वाध्यायाध्ययनं तव्यप्रत्ययेन लक्षणया विधीयते । प्रयोजनवदर्थज्ञानादिसाधनीभूतस्वाध्यायोद्देशेन वाऽध्ययनमात्रम् । तव्यप्रत्ययेन स्वाध्यायस्य कर्मत्वाभिधानात् । अतश्च गुरूपसदनाध्ययनाक्षरावाप्तितदर्थज्ञानसाधनीभूतस्वाध्यायधर्मानुष्ठानपुत्रस्वर्गविविदिषासु उत्तरोत्तरस्य पूर्वपूर्वभाव्यतायाः श्रुत्यादिसिद्धत्वात् न यावदर्थज्ञानं गुरुकुलात्परावृत्तिः । अतः सिद्धोऽर्थविचारः । उक्तं च—"अतो नित्यः क्रतुविचारस्त्रैवर्णिकमात्रस्य" इति । स्मृतौ क्त्वाप्रत्ययस्तूत्तरकालमात्रपर इति ॥

उपोद्घातः सङ्गतिः । प्रयोजनं तु स्पष्टम् । वेदाध्ययनानन्तरं अर्थविचारो धर्माधर्मज्ञानाय उपनीतैः कर्तव्यः सहकारित्वादिति सूत्रार्थवशादनुबन्धचतुष्कसिद्धिः । एवं प्रत्यधिकरणमङ्गान्युन्नेयानि ॥ १ ॥

## (२)–चोदनालक्षणोऽर्थो धर्मः ॥ २ ॥

चोदना विधायकवाक्यं लक्षणं प्रमाणं यस्य स **चोदनालक्षणः अर्थः** पुरुषैरर्थ्यमानः यः सः **धर्मः** ॥ २ ॥

विचिचारयिषितस्य धर्मस्यालौकिकत्वेन प्रत्यक्षविषयत्वायोगात् तन्मूलकस्यानुमानादेस्तत्र सुतरामप्रवृत्तेः अत एव लक्षणस्याप्यसम्भवान्न धर्मविचारो युक्त इति प्राप्ते—लौकिकप्रमाणानामप्रवृत्तावपि अलौकिकानामेकत्रिंशतस्तत्सहकृतविधेरेकस्यैव वा प्रमाणत्वसम्भवात् अप्रामाण्यस्य परतस्त्वेऽपि प्रामाण्यस्य स्वतस्त्वात् सप्रमाणक एव धर्मः ।

अत एव—वेदैकज्ञाप्येष्टानिष्टसाधनताकत्वे धर्माधर्मत्वे; तथात्वे सति बलवदनिष्टाननुबन्धित्वं वा धर्मलक्षणम् । बलवदनिष्टाननुबन्धित्वे सति यददृष्टद्वारा फलकरणं अदृष्टभिन्नं च स धर्म इति यावत् । वस्तुतो निषिध्यमानत्वमधर्मत्वं, विधीयमानत्वमात्रं धर्मत्वम् । तच्च कृतिव्याप्यकरणेतिकर्तव्यताप्रभृतिषूपादेयतापरपर्यायः प्रेरणारूपविधिविषयताविशेषः । स चास्त्येवाग्नेयप्रयाजद्रव्यदेवतानीचैस्त्वादिषु । नास्ति च फलनिमित्तकर्तृकालादिषु । 'पञ्चमे ब्रह्मवर्चसकामस्य' इत्यत्र फलाय विधीयमानस्य कालस्य धर्मत्वाभावेऽपि न क्षतिः, तदाश्रयस्योपनयनस्यैव धर्मत्वात् । अभिचारार्थमुपादेयस्य श्येनादेस्तु धर्मत्वमिष्टमेव, तामसधर्मत्वेन पुराणादिषु तद्वर्णनात् । विवाहानृतवदनस्य तु न विधिविषयत्वम् । षोडशिग्रहणस्यातिरात्रे तु न निषेधः, तन्नत्यलिङो दोषाभावक्रतुवैगुण्यानापादकत्वलक्षकत्वेन प्रवर्तनानिवर्तनयोः अबोधात् । बोधे वा शुभाशुभफलाक्षेपकविधिनिषेधविषयत्वे धर्माधर्मत्वे । शुभपदं क्रतूपकारस्वर्गादिजनकादृष्टसाधारणम् । अशुभपदं दुःखजनकादृष्टक्रतुवैगुण्यसाधारणम् । अभ्यनुज्ञाविधिविषयस्तु न धर्मो नाप्यधर्मः ।

अत एव पूर्वसूत्रे धर्मपदेन यावत्षोडशलक्षणीगतविचारविषयो लक्ष्यते । अपौरुषेयवाक्यतात्पर्यविषयीभूतवाक्यार्थान्वयित्वस्य लक्ष्यतावच्छेदकत्वात् । सगुणनिर्गुणोपासनाविधिशेषत्वादिना क्रतुविध्यपेक्षितसंसार्यात्मस्वरूपवदेव ब्रह्मणोऽपीह विचार्यत्वमिष्टमेव । लक्ष्यतावच्छेदककोटिनिविष्टवाक्यार्थे संसर्गात्मकत्वं वा विशेषणीयम् ॥ २ ॥

(३)—तस्य निमित्तपरीष्टिः ॥ ३ ॥ सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात् ॥ ४ ॥

**तस्य** धर्मस्य यत् निमित्तं ज्ञानकरणं तस्य परीष्टिः परीक्षा प्रस्तूयते ॥ ३ ॥ **इन्द्रियाणां** चक्षुरादीनां सति वर्तमाने विषये संप्रयोगे सन्निकर्षे सति **पुरुषाणां बुद्धेः जन्म** ज्ञानोत्पत्तिः यत् भवति **तत्** तादृशं **प्रत्यक्षं अनिमित्तं** न धर्मप्रमितिकारणं, **विद्यमानोपलम्भनत्वात्** इन्द्रियाणां वर्तमानवस्तुमात्रप्रत्यायकत्वात् भाविनमपि धर्मं प्रमाणेन प्रतीत्य पुरुषाणां प्रवृत्तेरनुभूयमानत्वादिति भावः ॥ ४ ॥

साङ्ख्यमते वृत्तिविशेषरूपौ धर्माधर्मौ । तार्किकमते तु अदृष्टरूपौ । अतस्तयोश्चाक्षुषाद्यविषयत्वेऽपि अस्मन्मते दध्यादिद्रव्यगुणक्रियारूपत्वेन अलौकिकत्वाभावेन संभवति प्रत्यक्षादिप्रमाणविषयत्वमिति प्राप्ते—न तावद्दध्यादीनां स्वरूपेण धर्मत्वम् । अपि तु फलजनकतावच्छेदकशक्तिमत्त्वेन । तादृशं च रूपं प्रत्यक्षाद्ययोग्यमेव, प्रत्यक्षस्येन्द्रियसन्निकृष्टवर्तमानार्थविषयकत्वनियमात् । अत एव—नानुमानादीनामपि तत्र प्रवृत्तिः, तेषां प्रत्यक्षपूर्वकत्वात् । नापि योगिनां प्रत्यक्षे तौ विषयौ, तेषामनङ्गीकारात् । एतेन ईश्वरप्रत्यक्षमपि व्याख्यातम् । इन्द्रियार्थसन्निकर्षाजन्यत्वेन भगवत्प्रमितेरलौकिकत्वाद्वा । तस्माच्चोदनैव धर्माधर्मयोः प्रमाणं, नान्यत् ॥ ३ ॥

(४)—औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत्प्रमाणं बादरायणस्यानपेक्षत्वात् ॥ ५ ॥

**शब्दस्य** वाचकस्य **अर्थेन** वाच्येन सह **संबन्धः** वाच्यवाचकभावरूपः **औत्पत्तिकस्तु** स्वाभाविक एव न संकेताद्यधीनः। **उपदेशः** आप्तोपदेशः **तस्य** तादृशसंबन्धस्य **ज्ञानं** ज्ञानसाधनम्। आप्तोपदेशः न तादृशसंबन्धस्य कारकः अपि तु ज्ञापक एवेति भावः। यतः **अनुपलब्धे** प्रत्यक्षादिप्रमाणानधिगते **अर्थे** चोदनाप्रतिपाद्ये **अव्यतिरेकः** व्यतिरेकस्य प्रामाण्यव्यतिरेकहेतोरर्थव्यभिचारस्याभावः वर्तते **तत्** तस्मात् चोदना **प्रमाणं** इति **बादरायणस्य** अनुमतं, **अनपेक्षत्वात्** अप्रामाण्यशङ्काहेतुभूतस्य संकेतयितृपुरुषादिसापेक्षत्वस्याप्यभावात् ॥५॥

**देहान्तरैकभोग्यफलकानां अग्निहोत्रादीनां करणत्वोपपादकस्यापूर्वस्य कल्पनेऽपि पश्वादिदृष्टैकफलकानां चित्रादीनां घटजनकदण्डादीना मिव व्यापारत्वेन अपूर्वकल्पनाभावाद्यत्र चित्रेष्ट्यव्यवहितोत्तरक्षणे पशवलाभः तत्र प्रबलप्रत्यक्षविसंवादेन चित्रेष्टिनिष्ठकारणतायाः व्यभिचारित्वेन तद्विधेरप्रामाण्यम्। न चौषधपानादेरिव कालान्तरभाविफलजनकत्वान्न दोष इति वाच्यम्, फले कालान्तरसम्बन्धस्य चित्राविधिप्रामाण्यसिद्ध्युत्तरकालिकत्वेन अन्योन्याश्रयात्। एवं 'स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गं लोकमेति' इत्यनेन सशरीरस्वर्गप्राप्तिकथनमपि प्रत्यक्षविरोधादप्रमाणम्। ततश्च 'तत्सामान्यादितरेषु तथात्वम्' इति न्यायेन सर्वासां चोदनानामप्रामाण्यमिति प्राप्ते—यज्ञायुधशब्दस्य यज्ञात्मकसाधनपरतया शरीरपरत्वाभावेन यज्ञरूपसाधनसद्भावात् स्वर्गं प्राप्नोतीत्यर्थकेन वाक्येनापूर्वसहितात्मनः परलोकप्राप्त्यनुवादान्नाप्रामाण्यम्। चित्रेष्ट्यादेस्तु उत्तराङ्गसान्निध्योपपत्तयेऽपूर्वकल्पनावश्यम्भावादव्यवहितकालकालान्तरयोरन्यतरस्यापि न कार्यतावच्छेदककोटिप्रवेश इति न दोषः। न चान्योन्याश्रयः। अप्रामाण्यकारणाभावादेव स्वतः प्रमाणत्वात्।**

न च पदपदार्थसम्बन्धस्य पुरुषाधीनत्वेन तज्ज्ञानसापेक्षस्य वेदवाक्यार्थज्ञानस्य प्रमात्वनियमो न सम्भवतीति वाच्यम्। सम्बन्धस्याप्यनादित्वेन पौरुषेयत्वाभावात् । तस्य च स्वरूपतो न वाक्यार्थज्ञानंकारणता अपि तु ज्ञानस्यैवेति तदवगमाय व्याकरणादेरिव क्वचिदाप्तपुरुषस्याप्युपयोग इति न तावन्मात्रेण सर्वत्रानाश्वासो युक्तः । तस्माच्चोदना प्रमाणमेव ।

एतत्साधनायैव हि मूले—निरालम्बनवादमाहायानिकवादयोर्निरासौ, अनुमानशब्दोपमानार्थापत्त्यभावप्रमाणानां सपरिकरं निरूपणम्, स्वरूपनिरूपणाय स्फोटनिरासः, नित्याकृतिसाधनम्, अपोहनिरासः, वनवादात्मवादौ चेत्यादिकं निरूपितम् ॥ ४ ॥

(५)—कर्मैके तत्र दर्शनात् ॥६॥ अस्थानात् ॥७॥ करोतिशब्दात् ॥८॥ सत्त्वान्तरे यौगपद्यात् ॥ ९ ॥ प्रकृतिविकृत्योश्च ॥ १० ॥ वृद्धिश्च कर्तृभूम्नाऽस्य॥११॥ समं तु तत्र दर्शनम् ॥ १२ ॥ सतः परमदर्शनं विषयानागमात् ॥ १३ ॥ प्रयोगस्य परम् ॥ १४ ॥ आदित्यवद्यौगपद्यम् ॥ १५ ॥ शब्दान्तरमविकारः ॥१६॥ नादवृद्धिपरा वा ॥१७॥ नित्यस्तु स्याद्दर्शनस्य परार्थत्वात् ॥ १८ ॥ सर्वत्र यौगपद्यात् ॥ १९ ॥ संख्याऽभावात् ॥ २० ॥ अनपेक्षत्वात् ॥२१॥ प्रख्याभावाच्च योग्यस्य॥२२॥ लिङ्गदर्शनाच्च ॥ २३ ॥

**एके** अक्षपादादयः कर्म कार्यं शब्दं मन्वते । **कुतः?—तत्र** तस्मिन् शब्दे विषये कण्ठताल्वादिव्यापारे सत्येव शब्दस्य **दर्शनात्** हेतोः ॥ ६ ॥ हेत्वन्तराण्याह—**अस्थानात्** अस्थिरत्वात् ॥ ७ ॥ **करोतिशब्दात्** शब्दं करोतीति व्यवहारात् 'घटं करोति' इति-वत् ॥ ८ ॥ **सत्त्वान्तरे** प्राण्यन्तरे शब्दस्य प्राण्यन्तरशब्देन सह **यौगपद्यात्** समानकालिकत्वदर्शनात् । तथाच शब्दस्य नित्यता-मते एकत्वस्यापि स्वीकारात् नानादेशेषु एकदा अनेकपुरुषैरुच्चार णसमये शब्दस्य साक्षात्कारो विरुद्ध्येत. एकस्य नानादेशस्थत्वासंभवा-दिति भावः ॥ ९ ॥ **प्रकृतिविकृत्योः**. प्रकृतिविकारभावापन्नयोः शब्दयोः दध्यत्रेत्यादौ इकारयकारादिरूपयोः शास्त्रे उपदेशाच्चेत्यर्थः ॥ १० ॥ **कर्तृभूम्ना** उच्चारयितृबाहुल्येन **अस्य** शब्दस्य **वृद्धिः** महत्त्वं यतोऽ-नुभूयते अतोऽपि शब्दोऽनित्यः । उच्चारणस्य शब्दजनकत्वमनङ्गी-कृत्य शब्दव्यञ्जकत्वस्वीकारपक्षे व्यञ्जकवृद्धौ व्यङ्ग्यवृद्धेरसंभवात् ॥ ११ ॥ सिद्धान्तमाह—**तत्र दर्शनं** ताल्वादिव्यापारे सत्येव शब्दस्य दर्शनं **समं तु** कार्यत्वनित्यत्वपक्षसाधारणमेव. उच्चारणस्य व्यञ्जकतयाऽपि तदुपपत्तेः । तथा च स हेतुरनैकान्तिकः ॥ १२ ॥ **सतः** विद्यमानस्यैव शब्दस्य **परं अदर्शनं** उच्चारणपूर्वोत्तरकालयोः **विषयानागमात्** वि-षयं शब्दं प्रति व्यञ्जकस्यानागमात् । तथाचास्थिरत्वहेतुस्स्वरूपासिद्धः ॥ १३ ॥ शब्दं करोतीति व्यपदेशः **प्रयोगस्य** शब्दप्रयोगस्य **परं** भवति औपचारिकतया शब्दप्रयोगविषयकः. 'गोमयं कुरु' इति यथा गोमयपिण्ड-विषयकः ॥ १४ ॥ **आदित्यवत्** यथा आदित्यस्य एकस्यापि नाना-देशेषु युगपदुपलब्धिः तथा शब्दस्य एकस्यापि व्यापकतया. नाना-देशेषु नानापुरुषोच्चारणवशात् **यौगपद्यं** युगपदुपलब्धिरुपपद्यते ॥ १५ ॥ दध्यत्रेत्यादौ इकारस्य यकारो विकृतिरिति नोपदिश्यते शास्त्रे । अपि तु इकारप्रयोगे प्रसक्ते यकारः प्रयोज्य इत्युपदिश्यते, तथा च इकाराद्यकारः

**शब्दान्तरं अविकारः** नेकारविकारः ॥ १६ ॥ उच्चारणकर्तृपुरुषबाहुल्ये या 'महान् शब्दः' इति प्रतीतिः सा **नादवृद्धिपरा** संयोगविभागरूपनादबाहुल्यविषयिण्येव ॥ १७ ॥ एवं शब्दानित्यतासाधकहेतूनामन्यथासिद्धिमुक्त्वा स्वमतेन शब्दनित्यतां हेतुभिस्साधयति—शब्दः नित्य एव स्यात् **दर्शनस्य** व्यञ्जकस्य उच्चारणस्य **परार्थत्वात्** परप्रत्यायनार्थत्वात् । शब्दस्यानित्यत्वे चार्थप्रतिपत्तिपर्यन्तमनवस्थानात् परस्यार्थप्रतीतिरेव न स्यात् ॥ १८ ॥ **सर्वत्र** सकलेषु गोशब्देषु **यौगपद्यात्** स एवायं गकार इति बहूनां अबाधितप्रत्यभिज्ञाया युगपदुत्पत्तेः. न ह्यनेकेषां युगपद्भ्रान्तिकल्पनं युक्तम् ॥ १९ ॥ दशकृत्वः गोशब्द उच्चरित इत्येव व्यवहारो भवति न तु दशगोशब्दा उच्चरिता इति. अतः **संख्याऽभावात्** शब्दे द्वित्वादिसंख्याव्यवहाराभावात् शब्दस्य एकतया नित्यत्वम् ॥ २० ॥ **अनपेक्षत्वात्** अपेक्षा शब्दापगमहेतोरीक्षादर्शनं तद्रहितत्वात् । लोके घटादेरिदं नाशकमित्यनुभूयते. तथा शब्दविनाशकारणमिदमिति न किंचिदपि केन चिदनुभूयते. तस्मात् नित्यः शब्दः ॥ २१ ॥ **योग्यस्य** श्रोत्रजसाक्षात्कारयोग्यस्य शब्दस्य **प्रख्याभावात्** प्रख्यायास्साक्षात्कारस्य सद्भावात् नित्यश्शब्दः. न तु वायुसंयोगजन्यतया वायुविकारः शिक्षाकृदुक्तरीत्या ; तथा सति वायुवत् श्रावणसाक्षात्काराभावप्रसङ्गात् ॥ २२ ॥ "तस्मै नूनमभिद्यवे वाचा विरूप नित्यया । वृष्णे चोदस्व सुष्टुतिम् ।"* इति वाचो नित्यत्वे लिङ्गं दृश्यते । अतोऽपि नित्यश्शब्दः ॥ २३ ॥

**शब्दस्य नित्यत्वे तद्गतः प्रत्यायकत्वात्मा सम्बन्धोऽनादिः स्यात् । तदेव न संभवति, ताल्वादिव्यापारपूर्वापरकालयोर्गकारादेरश्रवणेनोत्पादविनाशयोरङ्गीकर्तव्यत्वात् ' स एवायं ग-**

---

*ऋक्सं. ६. अ. ५. अ. २५.

कारः ' इति प्रत्यभिज्ञायास्साहश्यविषयकत्वेन गौणत्वात् । न च तात्वादिव्यापारस्य अभिव्यञ्जकत्वमात्रं संभवति । तच्च श्रोत्रशब्दान्यतरनिष्ठग्रहणयोग्यताजनकसंस्कारोत्पादकत्वेन, तद्ग्रहणप्रतिबन्धकदोषनिरासेन वा स्यात् । उभयथाऽपि दिगादिरूपश्रोत्रस्य नित्यव्यापकशब्दस्य वा संस्कृतत्वात्सर्वैर्ग्रहणापत्तिः । किञ्च — नित्यत्वपक्षे गकारादिव्यक्तेरेकैकत्वान्नानादेशेषूच्चारणेन देशभेदो नोपलभ्येत । तेन प्रतिदेशं भिन्ना एव शब्दा अनित्याश्चेति प्राप्ते — व्यक्तिबाहुल्यस्य तत्तत्प्रागभावध्वंसानां च कल्पने अतिगौरवापत्त्या उक्तप्रत्यभिज्ञायाः गौणत्वायोगेनावच्छेदककर्णशष्कुल्यामेव संस्कारोत्पत्त्यङ्गीकारेण अभिव्यक्तेरपि निर्दोषतया गकारादिव्यक्तय एकैका नित्या विभ्व्यश्च । उत्पादविनाशप्रतीतिस्तु ध्वनिविषया । एकस्यैव नानादेशोपलम्भ आदित्यस्येवाविरुद्धः । तस्मान्नित्यः शब्दो वर्णात्मकः । ध्वन्यात्मकोऽपि रथन्तरादिरूपो नित्य एव । अत एव ':सेयं गूर्जरी ' इति प्रत्यभिज्ञाऽपि न गौणीत्यन्यत्र विस्तरः ॥ ५ ॥

## (६)–उत्पत्तौ वाऽवचनास्स्युरर्थस्यातन्निमित्तत्वात् ॥ २४ ॥ तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात् ॥ २५ ॥ लोके सन्नियमात् प्रयोगसन्निकर्षस्स्यात् ॥ २६ ॥

पदपदार्थसंबन्धस्य **उत्पत्तौ वा** औत्पत्तिकत्वेऽपि चोदनाः **अवचनाः** अप्रमाणभूतास्स्युः **अर्थस्य** वाक्यार्थज्ञानस्य **अतन्निमित्तत्वात्** पदपदार्थसंबन्धातिरिक्तवाक्यवाक्यार्थसंबन्धनिमित्तकत्वात् ताद-

शसंबन्धस्य शक्तिरूपत्वे तात्पर्यरूपत्वे वा पुरुषसंबन्धापेक्षाया दुर्निवारत्वात् ॥ २४ ॥ **तद्भूतानां** तेषु पदार्थेषु भूतानां वर्तमानानां पदानां क्रियार्थेन क्रियावाचकेन पदेन सह **समाम्नायः** सम्यक् परस्परान्वितस्वार्थबोधकत्वेन उच्चारणं भवति **अर्थस्य** वाक्यार्थप्रतिपत्तेः **तन्निमित्तत्वात्** पदार्थप्रतिपत्तिनिमित्तकत्वात् । तथा च वाक्यानां वाक्यार्थे शक्तेर्ज्ञानं नापेक्ष्यते, तात्पर्यं च न पुरुषेच्छाघटितमिति तत्तत्पदसमभिव्याहृतक्रियापदरूपं वाक्यं पदार्थज्ञानसहकारेण तत्तत्पदार्थान्वितभावनारूपं वाक्यार्थं बोधयतीति न चोदनानामप्रामाण्यमिति ॥ २५ ॥ **लोके सन्नियमात्** सतः वर्तमानात् ‘ प्रसिद्धपदसमवधानमप्रसिद्धपदार्थमपूर्वमपि बोधयति ’ इति नियमात् वेदेऽपि **प्रयोगसन्निकर्षः** अप्रसिद्धस्वर्गहेतुभावनावाचिपदघटितस्य अग्निहोत्रं जुहुयात्स्वर्गकाम इत्यादेर्वाक्यस्य प्रयोगादाधुनिकानामपि अर्थाववोधसंबन्धस्स्यात् ॥ २६ ॥

**पदपदार्थसम्बन्धानां नित्यत्वेऽपि वाक्यार्थानां वाक्यैस्सह सम्बन्धस्य सङ्केतितत्वेन तद्ग्रहसापेक्षतया वक्त्रिच्छाघटिततात्पर्यज्ञानसापेक्षतया च पुरुषसम्बन्धेन भ्रमप्रमादसम्भवान्न विधिवाक्यानामैकान्तिकं प्रामाण्यम्, अनन्तवाक्यार्थसाधारणपदानां वाक्यार्थविशेषे सम्बन्धासम्भवाच्चेति प्राप्ते—पदैरभिहिता एव पदार्थास्स्वबोध्यसम्बन्धरूपया लक्षणया वाक्यार्थभूतां भावनां समभिव्याहारविशेषबलाद्विशिष्य बोधयन्ति । तथाच—‘ यजेत स्वर्गकामः ’ इत्यादौ स्वर्गकामनिष्ठा यागकरणिका स्वर्गभाव्यिका प्रवर्तनाविषयो भावनेत्यादिरीत्या भावनाविशेष्यकबोधस्य सर्वविधिष्वैकरूप्येण न तदानन्त्यप्रयुक्तसम्बन्धाग्रहः । तात्पर्यं च शब्दगत एव धर्मविशेषः । तद्ग्राहकश्चाध्ययनविध्यादिरेवेति न पुरुषसम्बन्धप्रयुक्तं विधीनामप्रामाण्यम् ॥**

स च विधिस्त्रिविधः—परिसङ्ख्याविधिर्नियमविधिरपूर्वविधिश्चेति । शब्दतः फलतो वा यस्य शास्त्रस्यान्यनिवृत्तिर्विषयस्स परिसङ्ख्याविधिः । यथा—‘ नानृतं वदेत् ’* ‘ इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते ’† इत्यादौ अत्रानृतवदननिवृत्तेर्गर्दभरशनारूपशेषितो मन्त्रनिवृत्तेश्च विधेयत्वात् । अत्र चैतद्विध्यभावे प्रायश औत्सर्गिकी तत्र चान्यत्र च प्राप्तिः न तु साऽपि लक्षणघटिकेति ध्येयम् । अत एव एकस्मिन् कार्येऽनृतस्य सत्येन सह पाक्षिकप्राप्तावपि ‘ नानृतं वदेत् ’* इति परिसङ्ख्यैवेयं न तु नियमविधिः । अत एव—यस्य शब्दतः फलतो वा पाक्षिकायोगव्यावृत्तिरूपो नियमश्शास्त्रविषयस्स नियमविधिः । यथा—“ सत्यमेव वदेत् ” “ व्रीहीनवहन्ति ” इत्यादौ । अत्र नियमस्यैवायोगव्यावृत्त्यर्थकेनैवकारेण विधेयत्वात्, आक्षेपतः पूर्वप्रवृत्तस्यावघातविधेर्नियमफलकत्वाच्च । नियमे पाक्षिकायोगश्च तन्मात्रविध्यप्रवृत्तिनिमित्तको विध्यन्तराप्रवृत्तिसंहितैतद्विध्यप्रवृत्तिनिमित्तकश्चेत्यादिप्रकारेण बोध्यः । “ व्रीहीनवहन्ति ” “ उत्तरेऽहन्द्विरात्रस्य गृह्यते ” इत्यादौ आद्यः, एतद्विध्यभावे आक्षेपणातिदेशेन वाऽवहननस्य षोडशिग्रहणस्य च पक्षप्राप्तत्वात् । “ व्रीहिभिर्यजेत ” इत्यादौ द्वितीयः, यवविध्यभावसहितैतद्विध्यभावे व्रीहीणामाक्षेपेण पक्षप्राप्तत्वात् । एवंविधभेदसत्त्वेऽप्ययोगव्यावृत्तिमात्रस्य लक्षणे प्रवेशान्न कोऽपि दोषः । यत्तु—दृष्टार्थत्वं नियमविधिलक्षणं कैश्चिदुक्तं—तत् “ उत्तरेऽहन् ” इत्यादावव्याप्तत्वादुपेक्षितं, षोडशिग्रहणाभ्यासस्यादृष्टार्थत्वात् । अत एव—नियमपरिसङ्ख्यातिरिक्तफलको विधिरपूर्वविधिः । यथा—“ व्रीहीन् प्रोक्षति ” इत्यादौ । अत्र प्रोक्षणादिप्राप्तेरेव फलत्वात् ।

*तै. सं. २-५-५. †तै. सं. ५-१-२.

एतेषां चोपाधीनां क्वचिदुदाहरणे साङ्कर्येऽपि न दोष इति न विधिरसायनोक्ततत्तल्लक्षणदूषणावकाशः। विस्तरेण चैतदस्मन्मीमांसाकौस्तुभे द्रष्टव्यम्। उत्पत्तिविध्यादयस्तद्भेदास्तत्रतत्र विवेचयिष्यन्ते ॥ ६ ॥

**(७)—वेदांश्चैके सन्निकर्षं पुरुषाख्याः ॥ २७ ॥ अनित्यदर्शनाच्च ॥ २८ ॥ उक्तं तु शब्दपूर्वत्वम् ॥ २९ ॥ आख्या प्रवचनात्॥ ३० ॥ परन्तु श्रुतिसामान्यम् ॥ ३१ ॥ कृते वा विनियोगस्स्यात्कर्मणस्संबन्धात् ॥ ३२ ॥**

**एके**, दार्शनिकाः केचित् **वेदान् सन्निकर्षं** सन्निकृष्टकालतां कृतकतां गमयन्ति हेतुभिः. यतस्ते वेदाः **पुरुषाख्याः** काठकं कालापकमिति पुरुषेण समाख्यायमाना दृश्यन्ते ॥ २७ ॥ "तेभ्यस्तेपानेभ्यस्त्रयो वेदा अजायन्त" इति वेदानामनित्यत्वदर्शनादपि कृतको वेदः ॥ २८ ॥ **शब्दपूर्वत्वं** शब्दे सामान्यतः नित्यत्वं मन्त्रादिरूपेऽपि शब्दे नित्यत्वं च "लिङ्गदर्शनाच्च" (१-१-२३) इति सूत्रे उक्तमेवास्माभिः। अतो न कृतकत्वमभ्युपगन्तुं युक्तम् ॥ २९ ॥ **आख्या** काठकं कालापकमित्यादि समाख्या तु **प्रवचनात्** प्रकृष्टाध्ययननिमित्तका आख्येयनित्यत्वेऽप्युपपन्ना ॥ ३० ॥ "त्रयो वेदा अजायन्त" इत्यत्र **परं** श्रुतेः जनिधातुश्रुतेस्समानत्वं उत्पत्त्याविर्भावोभयार्थसाधारणत्वम्। तथा च तत्र जनिधातोराविर्भाव एवार्थः, "अनादिनिधना" इत्यादि स्मृत्यनुरोधात् ॥ ३१ ॥ "गावो वा एतत्सत्रमासताशृङ्गास्सतीश्शृङ्गाणि नो जायन्तै"* इत्यादीनामापाततोऽसम्बन्धार्थकतया प्रतीतानामपि **कृते** क-

*तै. सं. ७-५-१.

र्मणि संवत्सरसत्रादिरूपे **विनियोगः** प्राशस्त्यतात्पर्यकत्वेनान्वयः स्यात्. कर्मणः कर्मप्रतिपादकवाक्यस्य " य एवं विद्वांसस्संवत्सरमुपयन्त्यृध्नुवन्त्येव "* इत्यादेः **सम्बन्धात्** सन्निधानात् । शक्यते हि प्राशस्त्ये तद्वाक्यस्य तात्पर्यं कल्पयितुं-- गावः जडा अपि एतत्कर्मानुष्ठाय फलमलभन्त किमुत विद्वांसः इति रीत्या ॥ ३२ ॥

इति जैमिनिसूत्रवृत्तौ सारबोधिन्यां प्रथमाध्यायस्य प्रथमः पादः.

**वेदानां भारतादिवाक्यवत्पौरुषेयत्वमेव वाक्यत्वाद्युक्तं, कर्तुरस्मरणस्य चिरकालिककूपादाविवानादरेणोपपत्तेः; अन्यथा छन्दोगप्रसिद्धोहग्रन्थस्यापि तथात्वापत्तेः; " तेभ्यस्तेपानेभ्यस्त्रयो वेदा अजायन्त " इति श्रुतावेवोत्पत्तिकथनाच्च काठकादिसमाख्यावशादपि पौरुषेयत्वमेवेति प्राप्ते—वाक्यत्वहेतुकानुमानस्याप्रयोजकत्वेन जन्यज्ञानमूलकत्वेन सोपाधिकत्वाच्च कर्तुरस्मरणाच्चापौरुषेयत्वम् । न चानादरात्कर्तुरस्मरणं; अक्षरशो विस्मरणाभावाय शिक्षाच्छलाक्षरादीन्प्रचितवतामृषीणां तदधीनप्रामाण्यकस्मृतिकर्तृसामान्यमप्यविस्मरतां सर्वज्ञानां वेदकर्त्रनादरोक्तेरतिसाहसत्वात् । ऊहग्रन्थस्य पौरुषेयत्वं तु नवमे वक्ष्यते । समाख्या तु प्रवचननिमित्तैव । " तेभ्यस्तेपानेभ्यः " इति श्रुतिस्तु ' छन्दाꣳसि जज्ञिरे तस्मात् '+ इति मन्त्रवर्णविरोधादन्यार्थिकैव । अत एव—" अनादिनिधना वेदवागुत्सृष्टा स्वयम्भुवा " इत्यादिस्मृतय उपपद्यन्ते । सृष्टिप्रलयेश्वराद्यङ्गीकारे तु कल्पादौ प्रवचननिमित्ता श्रुतिस्सम्भवतीत्यपौरुषेया एव वेदा इति ॥ ७ ॥**

**इति खण्डदेवकृतायां भाट्टदीपिकायां प्रथमाध्यायस्य प्रथमः पादः.**

---

*तै. सं. ७-५-१. +तै. आ. ३-१२.

(१)—आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते ॥ १ ॥ शास्त्रदृष्टविरोधाच्च ॥ २ ॥ तथा फलाभावात् ॥ ३ ॥ आनर्थक्यात् ॥ ४ ॥ अभागिप्रतिषेधात् ॥ ५ ॥ अनित्यसंयोगात् ॥ ६ ॥ विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः ॥ ७ ॥ तुल्यं च सांप्रदायिकम्॥८॥ अप्राप्ता चानुपपत्तिः प्रयोगे हि विरो धस्स्याच्छब्दार्थस्त्वप्रयोगभूतस्तस्मादुपपद्येत ॥ ९ ॥ गुणवादस्तु ॥१०॥ रूपात्प्रायात् ॥११॥ दूरभूयस्त्वात् ॥१२॥ स्त्र्यपराधात्कर्तुश्च पुत्रदर्शनम् ॥ १३ ॥ आकालिकेप्सा ॥ १४ ॥ विद्याप्रशंसा ॥ १५ ॥ सर्वत्वमाधिकारिकम् ॥ १६ ॥ फलस्य कर्मनिष्पत्तेस्तेषां लोकवत्परिमाणतः फलविशेषस्स्यात्॥१७॥ अन्त्ययोर्यथोक्तम् ॥ १८ ॥

विधिरूपस्य वेदभागस्य धर्माधर्मयोः प्रामाण्यं पूर्वपादे सिद्धम् । विध्यतिरिक्तवेदवाक्यप्रामाण्यव्यवस्थापनार्थमयं पाद आरभ्यते—**अतदर्थानां** इष्टानिष्टसाधनविषयकप्रवृत्तिनिवृत्त्यन्यतररूपक्रियायास्तदन्वयिनो वाऽर्थस्याप्रतिपादकानां "वायुर्वै"* इत्याद्यर्थवादवाक्यानां **आनर्थक्यं** अर्थप्रमितिजनकत्वाभावः अप्रामाण्यमिति यावत् । कुतः?—

*तै. सं. २-१-१.

आम्नायस्य धर्माधर्मप्रमाणभूतस्य वेदस्य क्रियार्थत्वात् इष्टानिष्टसाधनविषयकप्रवृत्तिनिवृत्त्यन्यतररूपक्रियाप्रतिपादकत्वनैयत्यात् । तस्मात्— अर्थवादानामप्रामाण्यात् आम्नायस्य प्रामाण्यं अनित्यं अनियतं उच्यते पूर्वपक्षिभिः । अप्रामाण्यस्य वेदत्वावच्छेदेनासंभवेऽपि प्रामाण्यमपि वेदत्वावच्छेदेन न संभवतीति भावः ॥ १ ॥ तदेवं सर्वेषामर्थवादानामप्रामाण्ये साधारणं हेतुमुक्त्वा अर्थवादविशेषाणामप्रामाण्ये हेतूनाह—शास्त्रदृष्टविरोधाच्च शास्त्रं च दृष्टं च ताभ्यां विरोधात् "स्तेनं मनः" "अनृतवादिनी वाक्" इत्यादीनामर्थवादानां स्तेयं कर्तव्यम्, "मृषोद्यं कर्तव्यं" इत्यादिविधिपरताकल्पनया प्रामाण्योपपादने शास्त्रेण "नानृतं वदेत्"* इत्यादिना विरोधः । तस्मान्न तद्वाक्यस्य धर्माधर्मयोः प्रामाण्यम् । एवं "तस्माद्धूम एवाग्नेर्दिवा ददृशे नार्चिः । तस्मादर्चिरेवाग्नेर्नक्तं ददृशे न धूमः" इत्यस्य वाक्यस्य दिवावह्निदर्शनादिरूपं यद्दृष्टं प्रत्यक्षं तद्विरुद्धतया न कथंचिदपि स्वार्थे प्रामाण्यम् । एवं—"न चैतद्विद्मो वयं ब्राह्मणा वा स्मोऽब्राह्मणा वा" इत्यादेरपि ब्राह्मण्यानिर्णयप्रतिपादकस्य दृष्टविरोधान्न कथं चिदपि स्वार्थे प्रामाण्यम् । ब्राह्मण्यं हि प्रत्यक्षेण दृश्यते विशुद्धमातापितृजन्यत्वव्यञ्जकसहकारेण । एवं शास्त्रेण दृष्टं शास्त्रदृष्टमिति व्युत्पत्त्या शास्त्रसिद्धार्थविरोधोऽप्यत्र विवक्षितः । यथा— "को हि तद्वेद यद्यमुष्मिन् लोकेऽस्ति वा न वेति"† वाक्यस्य आमुष्मिकलोकसद्भावेन "स्वर्गकामो यजेत" इत्यादिशास्त्रदृष्टेन विरोधान्न कथं चिदपि स्वार्थे प्रामाण्यमिति ॥ २ ॥ तथा इति दूषणान्तरसमुच्चायकम् । फलाभावात् गर्गत्रिरात्रब्राह्मणप्रकरणे 'शोभतेऽस्य मुखं य एवं वेद' इति श्रुतस्य गर्गत्रिरात्रब्राह्मणाध्ययनफलस्य मुखशोभायाः तद्ब्राह्मणाध्यायिन्यपि कुमुखे अदर्शनात् न तद्वाक्यस्य स्वार्थे प्रामाण्यम् ॥ ३ ॥ आनर्थक्यात् पूर्णाहुतेरेव सर्वफलावाप्तिसाधनत्वे तदि-

*तै. सं. २-५-५. †तै. सं. ६-१-१.

तरेषामग्निहोत्रादीनामनुष्ठाननैष्फल्यप्रसङ्गात् " पूर्णाहुत्या सर्वान्कामानवाप्नोति " इत्यादीनां न प्रामाण्यसंभवः । एवं " पशुबन्धयाजी सर्वान् लोकानभिजयति " इत्यस्यापि न प्रामाण्यं, इतरेषामानर्थक्यप्रसङ्गात्॥४॥ 'न पृथिव्यामग्निश्चेतव्यः नान्तरिक्षे न दिवि '[1] इत्यादीनां न प्रामाण्यं **अभागिप्रतिषेधात्** भागी प्रतिषेधभागी प्रतिषेधार्हः प्रसक्त इति यावत् स न भवतीत्यभागी अप्रसक्तः तस्य अन्तरिक्षचयनादेः प्रतिषेधस्य प्रत्यायकत्वात् ॥५॥ 'बबरः प्रावाहणिरकामयत '[2] इत्यादीनां न प्रामाण्यं **अनित्यदर्शनात्** अनित्यानां जन्मप्रायणवतां प्रवाहणतदपत्यबबरादीनां तत्र प्रतीयमानत्वात् तद्वाक्यानां तत्तत्पुरुषानन्तरभावित्वावश्यकतया पौरुषेयत्वेन भ्रमप्रमादादिशङ्काकलङ्कितत्वात् ॥ ६ ॥ सिद्धान्तमाह—**विधीनां** विधेयानां **स्तुत्यर्थेन** स्तुतिरूपार्थेन विधेयान्वयिस्तुतिरूपार्थप्रतिपादकत्वेन अर्थवादानां 'वायुर्वै क्षेपिष्ठा '[3] इत्येवमादीनां **विधिना** 'वायव्यं श्वेतमालभेत '[3] इत्यादिना **एकवाक्यत्वात्** अर्थवादाः धर्माधर्मयोः प्रमाणानि **स्युः** । अर्थवादवाक्यानां स्वातन्त्र्येण धर्माधर्मप्रतिपादकताविरहेऽपि विधिवाक्यार्थे शब्दभावनायां सहकारित्वरूपेतिकर्तव्यतात्वेनान्वयिस्तुत्युपस्थापकतया विधिवाक्यसहकारेण धर्माधर्मप्रामाण्यं नानुपपन्नमिति भावः ॥ ७ ॥ एवं प्रथमसूत्रोक्तं प्रामाण्यासंभवहेतुं निराकृत्य प्रामाण्यसाधनायाह—विध्यर्थवादयोः **सांप्रदायिकं** संप्रदायसिद्धं अध्यायानध्यायगुरुमुखाधिगमादिकं **तुल्यं च** समानमेव । तथा च 'तत्सामान्यादितरेषु तथात्वं' इति न्यायेन विधिसाधर्म्येण हेतुनाऽर्थवादेषु प्रामाण्यं सिद्ध्यतीति भावः ॥ ८ ॥ द्वितीयसूत्रोक्तानुपपत्तिं परिहरति—'शास्त्रदृष्टविरोधात्' इत्युक्ता **अनुपपत्तिः अप्राप्ता च** असंबद्धा । **प्रयोगे हि** 'स्तेनं मनः' इत्यादितः स्तेयाद्यनुष्ठाने विधीयमाने हि 'नानृतं '[4] इत्यादिना **विरोधः**

---

[1] त. सं. ५-२-७. [2] तै. सं. ७-१-१०. [3] तै. सं. २-१-१. [4] तै. सं. २-५-५.

**स्यात्** । **शब्दार्थस्तु** 'स्तेनं मनः' इत्यादिशब्दप्रतिपाद्यत्वेनाभिमतार्थस्तु **अप्रयोगभूतः** न स्तेयाद्यनुष्ठानविधिरूपः किन्तु. स्तुतिनिन्दाऽन्यतररूप एव । **तस्मात्** तत्तदर्थवादानां प्रामाण्यं **उपपद्येत** ॥९॥ क्वचिदर्थवादे 'आपो वै शान्ताः'[1] इत्यादौ 'वेतसशाखया चावकाभिश्चाग्निं विकर्षति'[1] इत्यादिविधिसन्निहिते विधेययोः वेतसशाखावकयोस्स्तुतेरदर्शनेऽपि विधयाधारभूतानामपां स्तुतिरपि **गुणवादस्तु** विधेयगुणवाद एव अभिजनसंस्तवेन अभिजातस्तुतेः पर्यवसानस्य लोकसिद्धत्वात् ॥ १० ॥ 'हिरण्यं हस्ते भवति अथ गृह्णाति' इति विधिसन्निहिते 'स्तेनं मनः' इत्यत्रार्थवादे **रूपात्** प्रच्छन्नसंचारत्वेन रूपेण स्तेनसारूप्यात् स्तेनत्ववादः । तथा तद्विधिसन्निहिते 'अनृतवादिनी वाक्' इत्यर्थवादे **प्रायात्** अनृतवादित्वबाहुल्यात् अनृतवादित्ववादः । उच्यते हि "प्रायेणानृतवादित्वात्पुंसां" इत्यादि । तथा च विधेयभूतस्य हस्तस्य तदुभयविलक्षणत्वाद्भवति स्तुतिः ॥ ११ ॥ "अग्निर्ज्योतिर्ज्योतिरग्निस्स्वाहेति सायं जुहोति"[2] इत्यादेः मन्त्रनियमविधेः सन्निहिते "तस्माद्धूम एवाग्नेर्दिवा ददृशे नार्चिः"[3] इत्याद्यर्थवादे दिवा वह्न्यदर्शनस्य रात्रौ धूमादर्शनस्य च प्रतिपादनं **दूरभूयस्त्वात्** . दूरभूयस्त्वमभिप्रेत्य । अतिदूरदेशस्थत्वे हि दिवाऽपि वह्निर्न दृश्यते धूमः परं दृश्यते । एवं रात्रौ दूरदेशस्थत्वे अग्निरेव दृश्यते न धूमः इति न दृष्टविरोधप्रसंगः ॥१२॥ "प्रवरे प्रव्रियमाणे देवाः पितर इति ब्रूयात्" इति विधिसन्निहिते "न चैतद्विद्मो वयमब्राह्मणा ब्राह्मणा वा" इत्यर्थवादे अज्ञानवचनं दुर्ज्ञानत्वे गौणं, दुर्ज्ञानता च यतः **स्त्र्यपराधात्कर्तुश्च पुत्रदर्शनं** दृश्यते हि स्त्र्यपराधात् अब्राह्मणनिरूपितमपि पुत्रत्वं यागकर्तरि । प्रवरानुमन्त्रणेन चाब्राह्मणोऽपि ब्राह्मणस्संपद्यत इति प्रवरानुमन्त्रणस्य विधेयस्य स्तुतिर्भवति ॥ १३ ॥ "दिक्ष्वतीकाशान्करोति"[4] इत्ययं ज्योति-

---

[1] तै. सं. ५-४-४. [2] तै. ब्रा. २-१-९. [3] तै. ब्रा. २-१-२. [4] तै. सं. ६-१-१.

ष्टोमे प्राग्वंशशालायाश्चतुर्दिक्षु द्वारकरणविधिः। तत्सन्निधौ "को हि तद्वेद यद्यमुष्मिन् लोकेऽस्ति वा न वेति"[1] इत्याम्नातेऽर्थवादे आमुष्मिकस्य सान्दिग्धतया निन्दनं तात्कालिकधूमव्याप्त्यादिजन्यखेदप्रतिबन्धकस्य द्वारकरणस्य आवश्यकत्वेन स्तुत्यर्थं. यतः **आकालिकेप्सा** आकालिके तात्कालिके फले ईप्सा उत्कटेच्छा भवति ॥ १४ ॥ गर्गत्रिरात्रविधिसन्निधावाम्नातः 'शोभतेऽस्य मुखं य एवं वेद' इत्यर्थवादः **विद्याप्रशंसा** गर्गत्रिरात्रविधिवेदनप्रशंसारूपः क्रतोर्वेदनमेवेदृशं किमुत तदनुष्ठानमिति क्रतुं स्तोतुम् । अतो न 'फलाभावात्' इत्युक्तो दोषः ॥ १५ ॥ आधानप्रकरणे पठितस्य 'पूर्णाहुतिं जुहुयात्' इत्यस्य विधेस्सन्निधावाम्नाते "पूर्णाहुत्या सर्वान्कामानवाप्नोति" इत्यर्थवादे श्रुतं **सर्वत्वं आधिकारिकं** अधिकारः प्रकरणम् । प्रक्रान्तक्रतुसाध्यफलगतयावत्स्वरूपम् । यथा 'सर्वे ब्राह्मणा भोजयितव्याः' इत्यत्र सर्वत्वं गृहागतब्राह्मणगतयावत्स्वरूपम् । अतो नेतरक्रतूनामानर्थक्यम् ॥ १६ ॥ **फलस्य** स्वर्गादिरूपस्य **कर्मनिष्पत्तेः** कर्मभिर्निष्पत्तेः **तेषां** कर्मणां **परिमाणतः** लघुगुरुभावेन **फलविशेषः** फलेऽपि तत्तत्कर्मजन्ये लघुगुरुभावः स्यात् । तथा च "पशुबन्धयाजी सर्वाल्लोकानभिजयति" इत्यत्र पशुयागस्य सर्वफलकत्वाम्नानेऽपि न यागान्तरवैयर्थ्यम् । यागान्तरेण फले गौरवस्य संपाद्यमानत्वात् । **लोकवत्** यथा लोके निष्केण खारीपरिमितान्व्रीहीन्विक्रीय निष्कान्तरेण पुनः क्रये सति परिमाणाधिक्यं भवति ॥१७॥ अन्त्ययोः पञ्चमषष्ठसूत्रोक्तयोराक्षेपयोः यथोक्तं उक्तप्रकारेण दूषणं वेदितव्यम् । तत्र "न पृथिव्यामग्निश्चेतव्यो नान्तरिक्षे न दिवि"[2] इत्यस्यार्थवादस्य "हिरण्यं निधाय चेतव्यम्" इति विधिशेषाया तद्विध्याकांक्षितस्तुतिबोधकत्वमिति "स्तुत्यर्थेन विधीनां स्युः" इति सूत्रोक्त एव परिहारः । "बबरः प्रावाहणिरकामयत"[3] इत्यत्र प्रावाहणिशब्दस्य प्रवाहणापत्यप्रकृष्ट-

---

[1] तै. सं. ६-१-१. [2] तै. सं. ५-२-७. [3] तै. सं. ७-१-९.

वहनशीलोभयसाधारणतया प्रकृष्टवहनशीलः बबरध्वनियुक्तः वायुरकामयत इत्यर्थस्यैव विवक्षणात् नानित्यसंयोगप्रसंग इति "परन्तु श्रुतिसामान्यं" इति सूत्रोक्त एव परिहारः ॥ १८ ॥

"वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति"[1] इत्याद्यर्थवादानां विधिप्रतिषेधवदेव कर्तृस्मरणाभावादपौरुषेयत्वे पूर्वाधिकरणेन सिद्धे सम्प्रति तद्वदेव धर्माधर्मयोः प्रामाण्यमस्ति न वेति विचार्यते। तत्र विधिप्रतिषेधवाक्याभ्यां स्वशक्त्या साध्यसाधनेतिकर्तव्यताविशिष्टभावनाविषयकविधिप्रतिषेधयोः प्रतिपादनात् अर्थाच्च विधिप्रतिषेधविषययागादेरिष्टानिष्टसाधनत्वाक्षेपाद्युक्तं तयोरिष्टानिष्टसाधनरूपधर्माधर्मप्रमाजनकत्वम्। अर्थवादानां तु शक्त्या सदसद्रूपसिद्धार्थबोधकत्वान्न धर्माधर्मयोः प्रामाण्यसम्भवः। न च शक्त्या तदसम्भवेऽपि लक्षणाध्याहारादिना तत्प्रतिपादनम्। यथाश्रुतार्थप्रतिपादनेनैव उपपत्तावन्वयानुपपत्त्यभावेन तदसम्भवात्। न च तात्पर्यानुपपत्त्या तत्कल्पनं तात्पर्यग्राहकाभावेन तस्या अप्यसम्भवात्। न हि शब्दः प्रमाणमात्रं वा प्रयोजनवद्विषयमेवेत्येवंनियमे प्रमाणमस्ति, येन स एव तात्पर्यग्राहकश्शङ्क्येत। निष्प्रयोजनानामपि बहुशो दर्शनेन व्यभिचारात्। न च "स्वाध्यायोऽध्येतव्यः"[2] इति स्वाध्यायविधिरेव अर्थज्ञानोद्देशेन अध्ययनं विदधत् निष्प्रयोजनस्यार्थज्ञानस्य भाव्यत्वानुपपत्तेरर्थस्य प्रयोजनवत्त्वमाक्षिपतीति वाच्यम्। अर्थज्ञानजनकत्वेनाध्ययनस्य लोकसिद्धत्वेनाविधेयत्वात्। तन्नियमस्यार्थज्ञानेऽनुपयोगादव्यभिचरितक्रतुसम्बन्धाभावेन क्रतुं यावदुपयो-

[1] तै. सं. २-१-१.

[2] तै. आ. २-१५.

गकल्पनानुपपत्तेश्च न विधेयत्वम् । अतः स्वाध्यायविधिना स्वर्गाद्यर्थमेवाध्ययनं विधीयते । लोकतः पूर्वं प्रवृत्त्यङ्गीकारेण यथाश्रुतार्थज्ञानार्थं वा । अध्ययनमेव भावनायां भाव्यमस्तु । न चैवमिष्टभाव्यकत्वाभावात्प्रवृत्त्यनुपपत्तिः । 'अनधीयाना व्रात्या भवन्ति' इति वचनेनाकरणे प्रत्यवायबोधनेनापि प्रवृत्तिसिद्धेः । अतस्तस्य वेदत्वावच्छेदेन प्रयोजनवद्विषयकत्वानाक्षेपकत्वान्नार्थवादेषु तद्बलेनं लक्षणासिद्धिरित्यप्रमाणमर्थवादा धर्माधर्मयोरिति प्राप्ते—

न स्वाध्यायविधिः स्वर्गाद्यर्थमध्ययनं विधत्ते, दृष्टे सम्भवत्यदृष्टकल्पनाया अन्याय्यत्वात् । नापि यथाश्रुतार्थज्ञानार्थम्, तथात्वे व्रात्यत्वबोधकवाक्येन अध्ययनस्यावश्यकत्वाद्गृहीतपदपदार्थसङ्गतिकस्यं

स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम् ।
योऽर्थज्ञ इत्सकलं भद्रमश्नुते स नाकमेति ज्ञानविधूतपाप्मा ॥

इत्यादिवचनाच्च ज्ञानस्यावश्यकत्वेन यथाश्रुतार्थज्ञानस्यानुषङ्गिकतयाऽपि सिद्धेः स्वाध्यायविधिवैयर्थ्यप्रसङ्गात् । एतेनाध्ययनभाव्यकत्वपक्षोऽपि निरस्तः । अतो वैयर्थ्यपरिहारार्थं प्रयोजनवदर्थज्ञानाद्युद्देशेन स्वाध्यायाध्ययनं विधीयते प्रयोजनवदर्थज्ञानादिसाधनीभूतस्वाध्यायोद्देशेन वाऽध्ययनमात्रं; तव्यप्रत्ययेन स्वाध्यायस्य कर्मत्वाभिधानात् । अतश्च जिज्ञासाधिकरणोक्तरीत्या स्वाध्यायार्थस्य प्रयोजनवत्त्वसिद्धौ तात्पर्यग्राहकवशेन लक्षणासिद्धिरर्थवादेषु ।

लक्षणीयश्चार्थस्सन्निहितविधिनिषेधापेक्षितत्वात् स्तुतिनिन्दा-

स्वरूपः। तथा हि—लिङाद्यर्थो लोके पुरुषाशयः। वेदे च तदभावाल्लिङादिनिष्ठ एव कश्चिद्धर्मः। वाच्यतावच्छेदकं चोभयसाधारणं व्यापारत्वम्। न तु प्रवृत्तिनिवृत्तिप्रयोजकत्वमपि, तस्यान्यलभ्यत्वात्। तत्र नञोऽभावे आख्यातार्थप्रवृत्तिप्रयोजकत्वं तत्सत्त्वे तु तदर्थप्रवृत्त्यभावप्रयोजकत्वं संसर्ग इति विशेषः। प्रयोजकत्वं चात्र प्रवृत्तितदभावकारणीभूतेष्टानिष्टसाधनताज्ञानजनकज्ञानविषयत्वम्। अभावकारणता च योगक्षेमसाधारणी। तत्त्वं च प्रवृत्तिसामग्रीविघटकत्वमित्यन्यत्र विस्तरः। स च लिङाद्यर्थो विधिवाक्ये प्रवर्तनाप्रेरणाविध्यपरपर्यायः। निषेधवाक्ये निवर्तनानिवारणानिषेधप्रतिषेधापरपर्यायः। इयं च द्विविधाऽपि शाब्दी भावना। तस्याश्च भाव्ये यथायोगं प्रवृत्तिनिवृत्ती। शब्दभावनाज्ञानं करणम्। करणत्वं चात्र भावनाभाव्यनिष्पादकत्वम्। इतिकर्तव्यता च यथायोगं स्तुतिनिन्दे। स्तुतिनिन्दाज्ञानस्य हि प्रवृत्तिनिवृत्तिप्रयोजकसहकारित्वं रुच्यरुच्युत्पादनद्वारा लोकसिद्धम्। स्तुतिनिन्दापदवाच्ये प्राशस्त्याप्राशस्त्यापरपर्याये बलवदनिष्टाननुबन्धित्वानुबन्धित्वयोग्यत्वरूपे। ते च यथायोगं विधिनिषेधापेक्षितत्वात्तत्तत्समभिव्याहृतार्थवादैर्लक्षणया प्रतिपाद्येते। तत्र 'वायुर्वै क्षेपिष्ठा'[1] इत्यादौ स्वशक्यक्षेपिष्ठत्वादिगुणैरेव लक्षणा। 'यजमानः प्रस्तरः'[2] इत्यादौ गौणीगम्यस्वकार्यकरत्वादिगुणैरिति वक्ष्यते। अतस्सिद्धं भावनान्वितस्तुतिनिन्दाविषयकप्रमाजनकत्वेन अर्थवादानां धर्माधर्मयोः प्रामाण्यमिति।

प्रयोजनं—पूर्वपक्षे अर्थवादानुपस्थितप्राशस्त्यज्ञानादपि प्रवृत्तौ फलसिद्धिः। सिद्धान्ते तु मन्त्रवदर्थवादानामेव

---

[1] तै. सं. २-१-१. [2] तै. सं. १-७-४.

प्ररोचकत्वनियमात्तदुपस्थितप्राशस्त्यज्ञानादेव प्रवृत्तौ सेति द्रष्टव्यम् ॥ १ ॥

**(२)–विधिर्वा स्यादपूर्वत्वाद्वादमात्रं ह्यनर्थकम् ॥ १९ ॥ लोकवदिति चेत् ॥ २० ॥ न पूर्वत्वात् ॥ २१ ॥ उक्तं तु वाक्यशेषत्वम् ॥ २२ ॥ विधिश्चानर्थकः क्वचित्तस्मात्स्तुतिः प्रतीयेत तत्सामान्यादितरेषु तथात्वम् ॥ २३ ॥ प्रकरणेन संभवन्नपकर्षो न कल्प्येत विध्यानर्थक्यं हि तं प्रति ॥२४॥ विधौ च वाक्यभेदस्स्यात् ॥ २५ ॥**

"औदुम्बरो यूपो भवति "[1] इत्यादिविधिसन्निधावाम्नातः "ऊर्ग्वा उदुम्बर ऊर्क्पशव ऊर्जैवास्मा ऊर्जं पशूनवरुन्धे "[1] इत्यादिरर्थवादो विधिवन्निगदः **विधिर्वा** पश्वादिफलोद्देशेन औदुम्बरत्वादिविधिरूप एव **स्यात्** **वादमात्रं हि** अर्थवादमात्ररूपं चेत्तद्वाक्यं प्राशस्त्यलक्षणया स्वार्थपरित्यागात् **अनर्थकं** स्यात् विधेरिव अर्थवादस्य साक्षात्प्रवृत्तिहेतुभूतार्थज्ञानजनकत्वाभावात् ॥ १९ ॥ एवं पूर्वपक्षे सिद्धान्ती शंकते—**लोकवदितिचेत्** यथा लोके " इयं गौः क्रेतव्या त्वया " इति वाक्यसन्निधौ प्रयुज्यमानं " इयं किल गौस्संपन्नक्षीरा स्वयपत्या " इत्यादि वाक्यं विधिपरत्वाभावेऽपि स्तुतिपरतयैव सफलं तथा वेदेऽप्युपदर्शितो विधिवन्निगदः विध्यपेक्षितस्तुतिपरतयैव सार्थको भवतीति चेत् ॥ २० ॥ इमां सिद्धान्तिशङ्कां पूर्वपक्षी निराकरोति—**न पूर्वत्वात्** न इदं युक्तं **पूर्वत्वात्** संपन्नक्षीरत्वादेः प्रत्यक्षादिरूपप्रमाणान्तरावगतत्वात् । तथा च

[1] तै. सं. २-१-१.

प्रमाणान्तरावगतार्थप्रतिपादकस्यागत्या लक्षणया स्तुतिपरताकल्पनेपि प्रमाणान्तरानवगतं यत्पश्वादिफलजनकत्वं तत्प्रतिपादकस्य उपदर्शितविधिवन्निगदस्य स्तुतिपरत्वकल्पनमयुक्तं विधिरूपताया एव संभवादिति भावः ॥२१॥ सिद्धान्तमाह—**उक्तं तु वाक्यशेषत्वं** "विधिना त्वेकवाक्यत्वात्" इत्यत्रोपपादितरीतिकं विधिवाक्यशेषत्वमेव "ऊर्ग्वै"[1] इत्यादेः युक्तं विधिरूपत्वसंभवात् । गुणफलविधित्वं हि भवतामभिमतं न चैतत्संभवति आश्रयाभावात् ॥ २२ ॥ **क्वचित्** "वायव्यं श्वेतमालभेत"[1] इत्यादिविधिसन्निहिते "वायुर्वै क्षेपिष्ठा"[1] इत्यादिवाक्ये विधिः "वायुः क्षिप्रगामी कर्तव्यः" इत्यादिरीत्या विधित्वस्वीकारः **अनर्थकः** असंभवदर्थकः । **तस्मात्** विध्यसंभवाद्धेतोः **स्तुतिः** विधेयप्रशंसैव लक्षणया **प्रतीयेत**। तत्सामान्यात् असंभवद्विधित्वेन रूपेण तादृशार्थवादसादृश्यात् **इतरेषु** उपदर्शितविधिवन्निगदेष्वपि **तथात्वं** स्तावकतया विधिवाक्यशेषत्वम्॥ २३॥ दर्शपौर्णमासप्रकरणाम्नाते 'यो विदग्धस्स नैरृतो योऽशृतस्स रौद्रो यश्शृतस्स सदेवस्तस्मादविदहता शृतंकृत्यस्सदेवत्वाय"[2] इत्येतद्वाक्ये 'यो विदग्धस्स नैरृतः' इत्यादेः 'अविदहता' इत्यादिविधिशेषतयाऽर्थवादरूपश्चेत् **प्रकरणे** स्वीये दर्शपूर्णमासप्रकरण. एव **संभवन्** सन् निविशेत । **अपकर्षः** प्रकरणादन्यत्र निवेशश्च **न कल्प्येत** नैरृतयागानुवादेन विदग्धत्वविधाने हि तत्र स्वीक्रियमाणेऽपकर्षस्स्यादेव। **हि** यतः **तं प्रति** प्रकरणसन्निहितं दर्शपूर्णमासयागमुद्दिश्य **विध्यानर्थक्यं** विदग्धत्वविधेरसंभवदर्थकत्वं स्यात् प्रकृतयोगे निरृतिदेवताविरहेण नैरृतपदेन प्रकृतकर्मानुवादासंभवात् ॥ २४ ॥ **विधौ च** 'यो विदग्धः' इत्यादिवाक्ये गुणविधौ विदग्धद्रव्यकनिरृतिदवताकयागान्तरविधौ वा स्वीक्रियमाणे **वाक्यभेदस्स्यात्** 'तस्मादविदहता' इत्यादिवाक्यात्पूर्ववाक्ये भेदस्स्यात् । स च न युक्तः तस्मादित्यनेनैकवाक्यत्वावगमात् ॥२५॥

---

[1] तै. सं. २-१-१.

[2] तै. सं. २-६-३.

'औदुम्बरो यूपो भवत्यूर्ग्वा उदुम्बर ऊर्क्पशव ऊर्जैवास्मा ऊर्जं पशूनाप्नोत्यूर्जोऽवरुद्ध्यै' [1]इत्याद्यर्थवादेषु न स्तुतिलक्षणा. शक्त्यैव पशुरूपफलसम्बन्धविधायकत्वेन प्रामाण्योपपत्तेः। पशूनिति द्वितीयया "ऊर्जोऽवरुद्ध्यै"[1] इति चतुर्थ्या वा पशूनां साध्यत्वेऽवगते साधनापेक्षत्वादौदुम्बरत्वं साधनं सन्निधानादूर्जेति तृतीयाश्रवणाच्च भवतीत्याख्यातेन च लक्षणया शक्त्यैव वा भावनाभिधानात् भूधातोश्च यूपोत्पादकच्छेदनानुवादकत्वादप्राप्तार्थकत्वेन च लेट्त्वनिश्चयादुभयविशिष्टभावनाविधायकत्वोपपत्तिरित्याक्षेपे प्राप्ते—

यूपकर्तृकभावनाक्षिप्तायां भावनायां यूपस्यैव भाव्यत्वौचित्यात्सान्निधानाच्च यूपोद्देशेनैवौदुम्बरत्वविधिः न तु फलोद्देशेन कामशब्दाद्यभावेन फलत्वस्य तथाऽनुपस्थितेः। किञ्च—भवन्मते गुणफलसम्बन्धोऽयम्। न चास्य सम्भवति, आश्रयाभावात्। 'सोमापौष्णं त्रैतमालभेत पशुकामः'[1] इति प्रकृतस्य यागस्याश्रयत्वे हि यूपग्रहणानर्थक्यम्। यूपस्य त्वप्रकृतत्वादेवाश्रयत्वानुपपत्तिः। अतिदेशेन तस्योपस्थितिस्तु जुह्वादिपात्रान्तरसाधारणीति तेषामप्याश्रयत्वे तथैव यूपग्रहणानर्थक्यम्। वाक्येनाश्रयदाने च वाक्यभेदः। तस्मात् "ऊर्ग्वै"[1] इत्यादिरर्थवाद एवौदुम्बरत्वस्येति सिद्धम्।

प्रयोजनं यागफलात्फलान्तरकामनायामौदुम्बरो यूपः इतरथा खादिरः पूर्वपक्षे। सिद्धान्ते तु औदुम्बर एवेति ॥ २ ॥

## (३)-हेतुर्वा स्यादर्थवत्त्वोपपत्तिभ्याम् ॥ २६ ॥

[1] तै. सं. २-१-१.

**स्तुतिस्तु शब्दपूर्वत्वादचोदना च तस्य ॥ २७ ॥ व्यर्थे स्तुतिरन्याय्येतिचेत् ॥ २८॥ अर्थस्तु विधिशेषत्वाद्यथालोके ॥ २९ ॥ यदि च हेतुरवतिष्ठेत निर्देशात् ॥ ३० ॥ सामान्यादितिचेत् ॥ ३१ ॥ अव्यवस्था विधीनां स्यात् ॥ ३२ ॥**

चातुर्मास्ये वरुणप्रघासपर्वणि श्रुतः " शूर्पेण जुहोति "[1] इत्यादिविधिसान्निहितः " तेन ह्यन्नं क्रियते " इत्यादिर्हेतुवन्निगदः **हेतुर्वा** हेतुत्वविधिः हेतुत्वांशे अज्ञातज्ञापनरूप एव **स्यात् अर्थवत्त्वोपपत्तिभ्यां** भवति हि तदा अर्थवत्त्वं अर्थबोधकत्वरूपं कृञःशक्तिलक्षकतया तेन हि अन्नं कर्तुं शक्यत इत्येवंरीत्या । लटो वा भूतभविष्यत्काललक्षणया कृञो यथाश्रुतार्थकतयैव तद्वाक्यस्यार्थवत्त्वम् । एतेन होमकाले वर्तमानकालीनान्नकरणहेतुत्वाभावेन न हेतुत्वविधिपरतया अर्थवत्त्वसंभव इति शङ्कानिरासः ॥ उपपत्तिश्चान्नकरणत्वस्य शूर्पे साक्षादन्नकरणत्वाभावेऽपि परम्परयाऽन्नकरणसाधनत्वात्, लाङ्गलाद्यपेक्षया साधकतमत्वाच्च । तथा च " करम्भपात्राणि जुहोति " इत्यनेनैव होमस्य प्राप्तत्वात् भाव्यतया तदन्वितभावनायां अन्नकरणत्वसाधनत्वहेतुकायाश्शूर्पनिष्ठकरणताया अन्वये दर्विपिठरादेरप्यन्नकरणसाधनतया होमसाधनत्वं सिद्ध्यतीत्याशयः ॥ २६ ॥ सिद्धान्तमाह—**स्तुतिस्तु** स्तुतिपर एव स हेतुवन्निगदः कुतः? **शब्दपूर्वत्वात्** शब्दो विधिशब्दः तेन तद्गता स्तुत्यपेक्षा लक्ष्यते । तत्र विध्यनपेक्षितहेतुपरत्वकल्पनातो विध्यपेक्षितस्तुतिपरत्वाश्रयणमेव न्याय्यमित्यर्थः । **तस्य** अन्नकरणत्वगतहेतुत्वस्य **अचोदना च** न विधिः दर्विपिठरादेस्साधकतमत्वविरहेण तद्गतान्नकरणत्वस्य हेतुत्वविधेरसंभवात् पाकादेस्साधकतम-

[1] तै. ब्रा. १-६-५.

त्वेऽपि तद्गताग्निकरणत्वस्य होमकरणत्वहेतुत्वासंभवादिति ॥ २७ ॥ पूर्वपक्षी शङ्कते—शूर्पेऽपि साधकतमत्वाभावेन **व्यर्थं** स्तुत्यालम्बनरूपार्थरहिते **स्तुतिः अन्याय्या** अनुपपन्ना **इति चेत्** ॥ २८ ॥ समाधत्ते—**अर्थस्तु** स्तुत्यालम्बनभूतार्थस्तु भवत्येव सिद्धान्ते **विधिशेषत्वात्** विध्यपेक्षितस्तुतिप्रतिपादनाय मानान्तरप्राप्तार्थानुवादकत्वात्तद्वाक्यस्य । शूर्पस्य स्थाल्यपेक्षया साधकतमत्वाभावेऽपि लाङ्गलाद्यपेक्षया **यथा** साधकतमत्वं **लोके** दृश्यते तथाविधसाधकतमत्वस्यैव लक्षणया प्रतिपादनेन **विधिशेषत्वात्** स्तावकतया विध्येकवाक्यत्वात् । हेतुविधिपक्षे तु प्रमाणान्तरसिद्धार्थानुवादकत्वविरहाद्यथाश्रुतादीषदप्यन्यथात्वकल्पनं दोष एवेति ॥२९॥ तुष्यत्विति न्यायेन हेतुविधित्वमभ्युपेत्याह—**यदि च** अयं **हेतुः** हेतुविधिस्स्यात् तदाऽपि शूर्पगतस्यैवाग्निकरणत्वस्य हेतुत्वं **अवतिष्ठेत** न दर्विपिठरादिगतस्यापि शूर्पस्यैव होमसाधनत्वेन निर्देशात् । न हि शूर्पगतहोमसाधनत्वे साध्ये अन्यगताग्निहेतुत्वस्य हेतुता संभवति वैयधिकरण्यात् । सन्निहितपरामर्शिसर्वनामोत्तरतृतीयाश्रवणेन पदश्रुत्या तद्गतस्यैवान्नकरणत्वस्याभिधानाच्च ॥ ३० ॥ पूर्वपक्षी शङ्कते—**सामान्यादिति चेत्** तृतीयाश्रुतेः सामान्यात् करणसामान्यवाचित्वात् तया च प्रबलया दुर्बलश्रुतिबाधादन्नकरणसामान्यस्यैव हेतुत्वं स्यादितिचेत् ॥ ३१ ॥ समाधत्ते—**अव्यवस्था विधीनां स्यात्** "व्रीहिभिर्यजेत" इत्यादिविधिष्वपि प्रत्ययश्रुत्या पदश्रुतिबाधप्रसङ्गेन द्रव्यविशेषविधिषु द्रव्यसामान्यस्यैव परिग्रहप्रसङ्गाद्द्रव्यव्यवस्था न स्यात् । तथा च द्रव्यविधीनां वैयर्थ्यमेवान्ततः प्रसज्यते । अतश्च आनर्थक्यप्रतिहतन्यायेन तृतीयाश्रुतेर्दुर्बलपदश्रुत्यनुरोधोऽपि न दोषायेति ॥ ३२ ॥

**चातुर्मास्ये "शूर्पेण जुहोति"[1] इति शूर्पकरणकहोमं विधाय श्रुते "तेन ह्यन्नं क्रियते" इत्यर्थवादे न स्तुतिलक्षणा।**

[1] तै. ब्रा. १-६-५.

अपि तु होमसाधनत्वे साध्ये अन्नकरणत्वस्य हेतुत्वं विधीयते । न ह्यत्र पूर्ववत् भाव्यत्व इव किञ्चित्कल्पनीयमस्ति, हिशब्दश्रुत्यैव हेतुत्वाभिधानात् । हेतुश्च व्याप्तिमन्तरेणानुपपन्नः यद्यदन्नकरणं तेनतेन होतव्यमिति व्याप्तिवचनं कल्पयति । ततश्च शूर्पादन्यस्यापि दर्वीपिठरादेर्होमसाधनत्वप्रतीतेः विधौ शूर्पपदमुपलक्षणम् । अवयुत्यानुवादो वा । यद्वा—तच्छब्देन शूर्पस्यैव परामर्शात् तद्गतमेवान्नकरणत्वं हेतुः । तेन च विशिष्यैव व्याप्तिकल्पनात् अन्नकरणासमर्थशूर्पव्यावृत्तावपि न विधिस्थं शूर्पपदमन्यथा नेयमिति पूर्वः पक्षः ।

सिद्धान्तस्तु—क्रियत इति लडन्तनिर्देशात् वर्तमानान्नकरणत्वस्य हेतुत्वं वाच्यम् । न च होमकाले अन्नकरणत्वं सम्भवति । अतो लटः भूतभविष्यत्कालान्तरलक्षणा विधौ तवाप्यावश्यकी । यद्यपि चेयं प्राशस्त्यलक्षणोपयोगिगुणघटकतया ममाप्यावश्यकी तथाऽप्यनुवादस्थत्वात् प्राशस्त्योपपादकत्वाच्च न दोषः, वर्तमाननिर्देशं विना तदप्रतीतेः । किञ्च—अपेक्षितप्राशस्त्यपरत्वे सम्भवति नानपेक्षितहेतुपरत्वाङ्गीकारो युक्तः। अतस्सिद्धं सर्वेषामर्थवादानां स्तावकत्वेन प्रामाण्यम् ॥ ३ ॥

## (४)—तदर्थशास्त्राद्वाक्यनियमाद्बुद्धशास्त्रादविद्यमानवचनादचेतनेऽर्थबन्धनादर्थविप्रतिषेधात्स्वाध्यायवदवचनादविज्ञेयादनित्यसंयोगान्मन्त्रानर्थक्यम्* ॥ ३३ ॥ अविशिष्टस्तु वाक्यार्थः ॥ ३४ ॥

*“ मन्त्रानर्थक्यमित्यन्तस्यैकसूत्रत्वेऽपि व्याख्यासौकर्यार्थं खण्डशः प्रत्येकं पञ्चम्यन्तसत्रावयवोपन्यासः ” इति कौस्तुभानुसारादेकसूत्रमेवेदमिह कृतम्.

**गुणार्था वा पुनश्श्रुतिः ॥ ३५ ॥ परिसंख्या ॥ ३६ ॥ अर्थवादो वा ॥ ३७ ॥ अविरुद्धं परम्॥ ३८ ॥ संप्रैषे कर्मगर्हानुपलम्भस्संस्कारत्वात् ॥ ३९ ॥ अभिधानेर्थवादः ॥ ४० ॥ गुणादविप्रतिषेधस्स्यात् ॥ ४१ ॥ विद्यावचनमसंयोगात् ॥ ४२ ॥ सतः परमविज्ञानम् ॥ ४३ ॥ उक्तश्चानित्यसंयोगः ॥ ४४ ॥ लिङ्गोपदेशश्च तदर्थवत् ॥ ४५ ॥ ऊहः ॥ ४६ ॥ विधिंशब्दश्च ॥ ४७ ॥**

स्तावकतया विध्येकवाक्यत्वं अर्थवादप्रामाण्यहेतुः पूर्वाधिकरणे । तत्प्रत्युदाहरणसंगत्या मन्त्राणां प्रामाण्यमत्र विचार्यते । **मन्त्रानर्थक्यं** मन्त्रस्याविवक्षितार्थकत्वम् । कुतः तदर्थशास्त्रात् तस्य मन्त्रस्य योऽर्थः अभ्र्यादानादिस्तद्विषयक शास्त्रदर्शनात् । " देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां गायत्रेण छन्दसाऽऽददे त्रैष्टुभेन जागतेन त्वा छन्दसाऽऽददे पाङ्क्तेन छन्दसाऽऽददे "[1] इतिमन्त्रास्सन्त्यभ्र्यादानार्थाः । तत्रैवार्थे विधिरपि दृश्यते " तां चतुर्भिरभ्रिमादत्ते "[2] इति । मन्त्रस्य विवक्षितार्थत्वे च लिङ्गेनैव तत्र मन्त्रस्य प्राप्तिसंभवात् तदर्थे मन्त्रविधायकं तच्छास्त्रं व्यर्थं स्यात् अविवक्षितार्थकत्वे तु विधिस्सार्थकः ॥ एवं **वाक्यनियमात्** " अग्निर्मूर्धा दिवः "[3] इत्यादिमन्त्रवाक्यपाठक्रमनियमात् मन्त्रानर्थक्यम् । मन्त्रस्य विवक्षितार्थकत्वे तु ' दिवो मूर्धा ' इत्यादिव्युत्क्रमपाठेऽप्यर्थप्रत्यायनसंभवात्पाठक्रमनियमो विफलस्स्यात् । एवं **बुद्धशास्त्रात्** आग्नीध्रेण अग्निविहरणादिके स्वकर्तव्यत्वेन अध्ययनकाल एव बुद्धे " अग्नीदग्नी न्विहर "[4]

[1] तै. सं. ४-१-१. [2] तै. सं. ५-१-१. [3] तै. सं. ४-४-४. [4] तै. सं. ६-३-१

इत्यादिप्रैषमन्त्ररूपस्य शासनस्य सत्त्वात् । तन्मन्त्रस्य विवक्षितार्थकत्वे बुद्धार्थबोधकत्वप्रसङ्गेन बुद्धार्थबोधकस्य तन्मन्त्रस्य वैयर्थ्यं स्यात् ॥ एवं **अविद्यमानवचनात्** क्रतावविद्यमानस्यैव चतुश्शृङ्गत्वाद्युपेतस्य वस्तुनः "चत्वारि शृङ्गा त्रयो अस्य पादाः"[1] इति मन्त्रे वचनात् बोधनात् । क्रत्वसमवेतार्थप्रतिपादकस्य अर्थप्रतिपादनद्वारा क्रत्वर्थत्वासंभवात् अविवक्षितार्थ एव स मन्त्रः अदृष्टद्वारैव क्रत्वर्थ इति बोध्यम् ॥ एवं **अचेतनार्थे बन्धनात्** "शृणोत ग्रावाणः"[2] "स्वधिते मैनं हिंसीः"[3] इत्यादौ अचेतनानां ग्रावादीनां बन्धनात् संबोधनात् अचेतनस्याभिमुखीकरणासंभवेन तत्संबोधकवाक्यस्य निरर्थकत्वात् तन्मन्त्रनिरर्थकत्वमेव युक्तम् । एवं—**अर्थविप्रतिषेधात्** ."अदितिर्द्यौरदितिरन्तरिक्षं"[4] इत्यादौ प्रतिपाद्यमानयोः अर्थयोः द्युत्वान्तरिक्षत्वयोरेकत्र आदितौ देवतायां विरोधात् । तथा च विरुद्धार्थप्रतिपादकत्वस्वीकारादनर्थकत्वस्वीकार एव श्रेयान् । एवं—**स्वाध्यायवद्वचनात्** अध्ययनकाले स्वाध्यायस्य वेदस्य यथाऽभ्यासः तथा अर्थज्ञानस्य अवचनात् अनभ्यासात् । मन्त्रार्थस्य विवक्षितत्वे हि मन्त्रस्यानुपयोगात् अर्थज्ञानमेवाभ्यस्येत ॥ एवं—**अविज्ञेयात्** 'अम्यक्सात इन्द्र ऋष्टिरस्मे'[5] 'सृण्येव जर्फरी तुर्फरी तू' इत्यादौ अविज्ञेयार्थकानामम्यगादिपदानां विद्यमानत्वात् । तस्मादीदृशपदघटितस्याविवक्षितार्थकत्वमेव युक्तम् ॥ एवं—**अनित्यसंयोगात्** 'किन्ते कृण्वन्ति कीकटेषु गावो नाशिरं दुह्रे न तपन्ति घर्मम् । आ नो भर प्रमगन्दस्य वेदो नैचाशाखम्मघवन्रन्धयानः'[6] इत्यादौ अनित्यस्य नैचाशाखरूपनगरस्य प्रमगन्दरूपस्य राज्ञश्च संयोगात् प्रतिपादनात् । तथाच पौरुषेयत्वप्रसञ्जकादनित्यार्थबोधकत्वस्वीकारात् तन्मन्त्रे अविवक्षितार्थकत्वस्वीकार एव वरम् ॥ तन्मन्त्रस्य च विश्वामित्र

---

[1] तै. उ. ४-१२. [2] तै. सं. १-३-१३. [3] तै. सं. १-२-१.

[4] तै. आ. १-१३. [5] ऋक्सं. २-४-८, [6] ऋक्सं. ३-३-२१.

अग्निः तेन किलेन्द्रः प्रार्थतः । भो मघवन् ! कीकटेषु देशविशेषेषु या गावस्ताः ते तव किं कृण्वन्ति यतः आशिरं सोमसंस्कारार्थं पयो न दुहे । न च घर्मं तपन्ति । अतः प्रमगन्दस्य राज्ञः नैचाशाखं नाम नगरं वेदो धनं च नः अस्माकं आभरेत्येतमो मघवन्नन्धय साधयेति हि तन्मन्त्रस्यार्थो वर्णनीयः ॥ ३३ ॥ सिद्धान्तमाह—**अविशिष्टस्तु वाक्यार्थः** वाक्यस्यार्थः वेदे लोके चाविशिष्ट एव । तथा च पदानामर्थबोधकतायाः लोकसिद्धत्वेन अर्थज्ञानरूपं दृष्टमेव फलं मन्त्राणां कल्पयितुमुचितं नादृष्टं "दृष्टे संभवति" इत्यादिन्यायादिति भावः ॥ ३४ ॥ "तदर्थशास्त्रात्" इत्यनेनोक्तामनुपपत्तिं परिहरति—**गुणार्था वा पुनःश्रुतिः** लिङ्गेन प्राप्तस्याप्यर्थस्य "तां चतुर्भिः" इति पुनःश्रुतिः गुणार्था चतुस्संख्यारूपगुणविधानार्था ॥ ३५ ॥ **परिसंख्या** "इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्ते"[1] इत्यत्र लिङ्गेनैव रशनादाने प्राप्तस्य मन्त्रस्य विधानं गर्दभरशनातः मन्त्रस्य परिसंख्यार्थम् ॥ ३६ ॥ **अर्थवादो वा** "उरुप्रथा उरुप्रथस्वेति पुरोडाशं प्रथयति" इति वाक्ये लिङ्गेनैव पुरोडाशप्रथने प्राप्तस्यापि मन्त्रस्योपादानं न तद्विधानार्थं अपि तु "यज्ञपतिमेव तत्प्रजया पशुभिश्च प्रथयति" इत्यर्थवादकृतयज्ञपतिप्रथनफलकत्वरूपप्रथनस्तुत्यालम्बनस्फुटोपपादनार्थमनुवादः । अध्वर्युर्हि मन्त्रेण पुरोडाशं प्रथस्वेति ब्रूते । यश्चैवं प्रथस्वेति ब्रूते स प्रथयत्येव । यथा यः कुर्विति ब्रूते स कारयत्येवेति ॥ ३७ ॥ **परं मन्त्रेषु** नियतक्रमाम्नानं मन्त्राणामर्थपरत्वे सति नियमादृष्टकल्पनयाऽपि **अविरुद्धम्** ॥ ३८ ॥ **संप्रैषे** "अग्नीदग्नीन्विहर"[2] इत्यादौ **कर्मगर्हा** बुद्धबोधनरूपस्य कर्मणः मन्त्रकार्यस्य गर्हा दूषणं **अनुपालम्भः** अदूषणमेव. कुतः ? **संस्कारत्वात्** बुद्धस्यापि पुनर्मन्त्रेण बोधनं आग्नीध्रे संस्कारविशेषं जनयतीति व्रीहिप्रोक्षणादिवत् बुद्धस्मरणस्य संस्का-

---

[1] तै. सं. ५-१-२. [2] तै. सं. ६-३-१.

रकर्मत्वाङ्गीकारात् ॥ ३९ ॥ **अभिधाने** "चत्वारि शृङ्गा"[1] इत्यादाव-विद्यमानाभिधायकत्वेन शङ्किते मन्त्रे **अर्थवादः** अर्थवादवत् गौण्या वृत्त्या देवतास्तुतिः । यद्यपीयमृक् भाष्यकारेण यागस्तुतिपरतया व्याख्याता । तथाऽपि वार्तिककृता विषुवत्संज्ञकैकाहे "आग्नेय्या होता शंसति" इति विनियोगानुसारेणादित्यरूपेणाग्निस्स्तूयते इत्युक्तम् । यथा—चत्वारो दिवसयामास्त्रयश्शीतोष्णवर्षाकालाः द्वे अयने शीर्षे सप्त अश्वाः हस्ता यस्य सः त्रिधा सवनत्रये बद्धः वृष्टिहेतुत्वाद्वृषभः रोरवीति गर्जितेन महो देवः मर्त्यानुत्साहयन्नाविवेशेति । एवं "शृणोत ग्रावाणः"[2] इत्यादौ अचेतनसंबोधनमपि चैतन्यारोपेण अचेतनस्तुत्यर्थमेवेति न दोष इति बोध्यम् ॥ ४० ॥ "अदितिर्द्यौरदितिरन्तरिक्षं"[3] इत्यादौ एकत्रैवादितौ प्रतिपाद्यमानयोर्द्युत्वान्तरिक्षत्वरूपयोः **अविप्रतिषेधः** अविरोधः **स्यात्** कथं ? **गुणात्** गुणवृत्त्या स्तुतिविवक्षणात् "त्वमेव माता त्वमेव पिता" इत्यादिवत् ॥ ४१ ॥ अध्ययनकाले **विद्याऽवचनं** विद्यायां अर्थज्ञानस्य अवचनमनभ्यसनं **असंयोगात्** अभ्यासरूपसंयोगं विनाऽपि कर्मकालिकस्यार्थज्ञानस्य सुकरत्वात् । दुर्ग्रहत्वात्तु अक्षराभ्यास इति भावः ॥ ४२ ॥ "अभ्यक्सात इन्द्रः"[4] इत्यादिमन्त्रेषु **सतः** विद्यमानस्यैवार्थस्य **परं अविज्ञानं** प्रमादालस्यादिनाऽनवबोधः । तत्रतत्र सदर्थावधारणं तु निगमनिरुक्तव्याकरणार्थप्रकरणऋषिदेवतास्मरणादिना संपादनीयम् । तथा च कृतात् भाष्यादितस्तदर्थोऽवगन्तव्यः ॥ ४३ ॥ यश्च **अनित्यसंयोगः** "किन्ते कृण्वन्ति"[5] इत्यादिमन्त्रे **उक्तः** तत्तत्परीहारोऽपि "परन्तु श्रुतिसामान्यं" इत्यत्रोक्त एव । अनित्यसंयोगास्पृष्टस्तदर्थस्तु भाष्यादिषु द्रष्टव्यः ॥ ४४ ॥ एवं मन्त्रार्थविवक्षायां बाधकान्युद्धृत्य साधकान्याह—लिङ्गोपदेशश्च "आग्नेय्याऽऽग्नीध्रमुपतिष्ठते" इत्यत्र

---

[1] तै. आ. ४-१२. [2] तै. सं. १-३-१३. [3] तै. आ. १-१३.
[4] ऋक्सं. २-४-८. [5] ऋक्सं. ३-३-२१.

" अग्ने नय "[1] इत्यस्या ऋचः अग्निदेवताप्रकाशकत्वेन लिङ्गेनोपदेशः **तत् अर्थवत्** तन्मन्त्रवाक्यमर्थवदिति गमयति ॥ ४५ ॥ **ऊहः** ऊहदर्शनमपि मन्त्रवाक्यमर्थवदिति गमयति । यथा प्रकृतौ " अन्वेनं माता मन्यतामनुपिताऽनुभ्राता "[2] इत्ययं पशुविषयको मन्त्रः । एतन्मन्त्रविषयकं ब्राह्मणमेवमाम्नायते—" न माता वर्धते न पिता " इति । तन्मन्त्रे मातृपितृशब्दयोः द्विवचनबहुवचनान्तत्वेन प्रयोगरूपा शब्दवृद्धिः विकृतौ न भवतीति तदर्थः । तेन विकृतौ पश्वाधिक्ये " अन्वेनौ माता मन्यतां " " अन्वेनान्माता मन्यतां " इत्यादिरूहो भवत्येवेति गम्यते । स चोहो मन्त्रस्यार्थवत्त्वं विना नोपपद्यत इति भावः ॥ ४६ ॥ **विधिशब्दश्च** " शतं हिमा इत्याह शतं त्वा हेमन्तानिन्धिषीयेति वावैतदाह "[3] इत्यादिब्राह्मणरूपः तन्मन्त्रवाक्यमर्थवदिति गमयति । शतं हिमा इति यद्यजुराह तत् शतं हेमन्तानित्यर्थमेवाह इति तद्ब्राह्मणवाक्यार्थः । तदिदं सर्वं मन्त्राणामर्थवत्त्व एवोपपद्यते । एतद्विचारप्रयोजनं तु प्राच्यैरुक्तं—अग्निहोत्रपदं नाम आघारे यागकल्पनम् । मुख्येऽर्थे विनियोगो य आमिक्षा पय एव च । मन्त्रक्रमबलीयस्त्वं छागस्य नियमस्तथा । अग्नौ पृष्ठपदं मन्त्रलक्षणार्थं वदिष्यते । अभिमर्शनमन्त्राणां विकल्पस्सौर्य इष्यते । ऊहोऽथ नवमे यस्तु आघारे मन्त्रवाधनम् । मन्त्रावृत्तिर्दीक्षितस्याभिवृष्ट्यादिदर्शने । तथा करणमन्त्राणां विकल्पो द्वादशेऽपि यः । सर्वमेतत्तदा सिद्ध्येन्मन्त्रार्थश्चेद्विवक्षितः ॥ इति ॥ ४७ ॥

इति जैमिनिसूत्रवृत्तौ सारबोधिन्यां प्रथमस्य द्वितीयः.

---

[1] तै. सं. १-१-१४. [2] तै. सं. १-२-४. [3] तै. सं. १-५-८.

मन्त्राणां धर्माधर्मयोः प्रामाण्यमस्ति न वेति चिन्तायां न तावद्विधित्वेन प्रामाण्यं, तस्य द्वितीये निराकरिष्यमाणत्वात्। नापि स्तावकत्वेन अर्थवादवत्, तेषां हि सन्निहितेन विधिना पदैकवाक्यत्वात् युक्तं स्वसमर्पितप्राशस्त्यान्वितभावनाविषयकशाब्दज्ञानजनकत्वम्। मन्त्राणां तु दूरस्थत्वेन पदैकवाक्यत्वानुपपत्तेः न तद्विधया प्रामाण्यसम्भवः। नापि प्राशस्त्यं स्वातन्त्र्येण वाक्यार्थः, पदार्थविधयोपस्थितत्वात्। नाप्यर्थस्मारकत्वेन प्रामाण्यं, अनधिगतार्थबोधकत्वाभावेन तदसम्भवात्। साममन्त्राणामर्थाभावेन याथार्थ्यस्याप्यनुपपत्तेश्च। न च प्रामाण्याभावेऽपि स्मारकत्वादिना प्रयोजनवत्त्वमात्राङ्गीकारः, ध्यानाद्युपायान्तरेणापि स्मृतिसिद्धौ नियतमन्त्राम्नानवैयर्थ्यात्। प्रयोगसमवेतार्थस्मारकेषु स्मृतिवैयर्थ्याच्च। अतोऽधिकाराख्यप्रकरणादिनाऽवगतक्रत्वङ्गभावनायां मन्त्राणामुच्चारणमात्रमदृष्टार्थं विधीयते। स्वाध्यायविधिश्चोच्चारणोपयोगिप्रयोगप्राशुभावफलकतयैव अध्ययनं विधत्त इति न कश्चिद्दोषः। इति प्राप्ते—

अभिधीयते—दृष्टे सम्भवत्यदृष्टकल्पनाऽनुपपत्तेः प्रयोगसमवेतार्थस्मृतिरेव सम्भवतां मन्त्राणां प्रयोजनम्। असम्भवतां कामं भवत्वदृष्टं प्रयोजनम्। शक्यते तु तत्रापि मन्त्रा अर्थप्रकाशनार्थाः प्रकाशनं परमदृष्टार्थमिति वक्तुम्। साम्नां तु—ऋगक्षराभिव्यक्तिरेव दृष्टं प्रयोजनमर्थाभावेऽप्यव्याहतम्। अनृक्साम्नां त्वदृष्टार्थत्वमेवेत्यन्यत्र विस्तरः। न त्वेतावता सर्वत्रैवादृष्टार्थत्वम्। न च मन्त्राणां नियमेन पाठवैयर्थ्यं, तद्बलेन मन्त्रैरेव स्मर्तव्यमिति नियमकल्पनात्। तस्य चादृष्टफलकत्वेऽपि न दोषः। न चैवं सामर्थ्यादेव तत्रतत्र

मन्त्राणां विनियोगासिद्धौ पुनस्तेषां क्वचिद्विनियोगकरणं व्यर्थमिति वाच्यम् । गुणपरिसङ्ख्याद्यर्थकत्वेन सार्थक्यात् । तथा हि—अर्थप्राप्ते अभ्र्यादाने विकल्पेन चतुर्णां मन्त्राणां लिङ्गेन प्राप्स्यमानानां प्रापकप्रमाणात् पूर्वमेव प्रवृत्तेन "तां चतुर्भिरभ्रिमादत्ते"[1] इति वचनेन मन्त्रसङ्ख्योभयविशिष्टादानभावनायां विहितायां एतद्वचनाभावेऽपि मन्त्राणां आदानस्य च प्राप्तिसम्भवे एतद्वचनप्रवृत्तिफलजिज्ञासायां समुच्चयफलकचतुस्सङ्ख्यारूपगुणप्राप्तिरिति निश्चीयते । तथा लिङ्गादेवाग्निचयनाङ्गभूताश्वरशनादाने प्राप्स्यमानस्य मन्त्रस्य ततः पूर्वप्रवृत्तेन "इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते"[2] इत्यनेन वचनेन मन्त्रविशिष्टादाने अश्वरशनाङ्गत्वेन विहिते पूर्ववत् फलजिज्ञासायां गर्दभरशनानिवृत्तिरूपशेषपरिसङ्ख्या फलम् । न च फलतः परिसंख्यायां स्वार्थहानिः परार्थकल्पनं प्राप्तबाध इति त्रैदोष्यम् । अश्वाभिधानीसम्बन्धरूपस्वार्थस्यैव विधेयत्वात्, अन्यनिवृत्तिरूपपरार्थस्यार्थसिद्धत्वेन अकल्पनीयत्वात्, प्रापकप्रमाणस्याप्रवृत्ततया प्राप्तबाधाभावाच्च । अत एव यत्र प्रापकप्रमाणप्रवृत्त्युत्तरमेव परिसङ्ख्याशास्त्रस्य प्रवृत्तिः यथा—'पञ्च पञ्चनखा भक्ष्याः' इत्यादौ रागतः प्राप्तपञ्चनखभक्षणे पञ्चातिरिक्तपरिसङ्ख्याकरणं तत्रैव तत् । यत्रापि च श्रौती परिसङ्ख्या यथा—'नानृतं वदेत्'[3] इत्यादौ तत्रापि न तत्। तदेवं मन्त्राणामर्थस्मारकत्वेऽपि न क्वचिद्विनियोगवैयर्थ्यम् । न चैवमपि प्रामाण्यायोगः; याथार्थ्यलक्षणस्याविघातात् । सामादिसर्वमन्त्रसाधारण्येन तु पदार्थविधया । यथा हि शाब्दबोधं प्रति कारणीभूतज्ञानविषयत्वाच्छब्दः प्रमाणमिति सर्वद-

[1] तै. सं. ५-१-१. [2] तै. सं. ५-१-२. [3] तै. सं. २-५-५.

र्शनमतं तथा पदार्थज्ञानस्यापि कारणत्वात् पदार्थोऽपि तथेत्यपि वक्तुं शक्यते । अतश्च मन्त्रविनियोगविधौ मन्त्राणां पदार्थत्वात् युक्तं प्रामाण्यमिति । अस्तु वा प्रामाण्याभावेऽपि प्रयोजनवत्त्वलाभमात्रेण स्वाध्यायविध्युपपत्तेर्न कश्चिद्दोषः । प्रयोजनमर्थवादवदेव स्पष्टम् ॥ ४ ॥

इति श्रीखण्डदेवकृतायां भाट्टदीपिकायां प्रथमस्याध्यायस्य द्वितीयः पादः.

---

## (१)—धर्मस्य शब्दमूलत्वादशब्दमनपेक्षं स्यात् ॥ १ ॥ अपि वा कर्तृसामान्यात्प्रमाणमनुमानं स्यात् ॥ २ ॥

वेदातिरिक्तधर्मप्रमाणप्रामाण्यव्यवस्थापनमेतत्पादार्थः । वेदातिरिक्तं च धर्मप्रमाणं स्मृतिशिष्टाचारश्च । तत्रादौ स्मृतिप्रामाण्यं परीक्ष्यते । **धर्मस्य शब्दमूलत्वात्** अपौरुषेयशब्दप्रमाणकत्वात् **अशब्दं** अनुपलभ्यमानस्वमूलभूतापौरुषेयशब्दकं "अष्टकाः कार्याः" इति स्मृत्यादिकं **अनपेक्षं** भ्रान्त्यादिमूलकतयाऽप्युपपत्त्या सन्मूलकल्पनापेक्षारहितं अप्रमाणं **स्यात्** । अनपेक्ष्यमिति पाठे अशब्दमनादरणीयं स्यादित्यर्थः ॥१॥ सिद्धान्तमाह—**अपि वा** इति निपातः पूर्वपक्षव्यावृत्तिं द्योतयति । **अनुमानं** अनु पश्चात् स्वमूलभूतवेदवाक्यप्रत्यक्षानन्तरप्रवृत्तं अष्टकास्मृत्यादिकं **प्रमाणं स्यात्** एव **कर्तृसामान्यात्** कर्त्रोः स्मृतिकर्तृकर्मानुष्ठानकर्त्रोरैकत्वात् । तथा च धर्मबुद्धया वैदिककर्मकर्तृभिर्मन्वादिभिर्निबद्धानां स्मृतीनां न भ्रान्त्यादिमूलकत्वं संभवतीति वेदमूलकतया प्रामाण्यं सिद्धम् ॥ २ ॥

शिष्टत्रैवर्णिकपरिगृहीतानां मन्वादिस्मृतीनां धर्माधर्मयोः प्रामाण्यमस्ति नवेति सन्देहे सन्मूलकत्वनिश्चायकाभावात् अप्रामाण्यम् । न ह्यत्र प्रत्यक्षादि मूलं; तेषां धर्माधर्मयोः अप्रवृत्तेः । वेदस्य च प्रत्यक्षपठितस्यानुपलम्भात् । उपलम्भे वा स्मृतिप्रणयनवैयर्थ्यात् । इदानीमुच्छेदस्य च वैदिकैर्यथापरिगणनं शाखानां मात्रामात्रापरित्यागेन पाल्यमानतया कल्पयितुमशक्तेः । न च नित्यानुमेयो वेदो मूलम् । स्मृतेर्मूलसामान्यव्याप्तत्वेऽपि वेदव्याप्तत्वाभावेन अनुमानानुपपत्तेः । मनोरप्यनुमेयत्वकल्पने अन्धपरम्परापत्तेश्च । अतश्च सन्मूलत्वासम्भवात् भ्रान्त्यादिमूलत्वेन अप्रामाण्यमिति प्राप्ते—

शिष्टानामद्य यावदविगीतपरम्परया ज्योतिष्टोमादिष्विव अष्टकाकळञ्जभक्षणादिष्वपि धर्मत्वेनाधर्मत्वेन च परिग्रहात् मन्वादीनां त्रैवर्णिकत्वेन वेददर्शनसम्भवाच्च तन्मूलकत्वमेव युक्तं, न तु भ्रान्त्यादिमूलकत्वम् । तत्करणस्य अद्य यावत्तदज्ञानस्य च कल्पने गौरवाच्च । श्रुतिश्च प्रत्यक्षपठितैव मूलम् । न च स्मृतिप्रणयनवैयर्थ्यम् । शाखान्तरोपसंहारेण अर्थवादार्थोद्धारेण न्यायसिद्धार्थकथनेन च स्मृतिप्रणयनस्य सार्थक्यात् । अतो मूलश्रुत्युपस्थापकतयैव धर्माधर्मप्रमाप्रयोजकत्वं स्मृतीनामिति सिद्धम् ॥ १ ॥

## (२)–विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम् ॥ ३ ॥ हेतुदर्शनाच्च ॥ ४ ॥

"औदुम्बरीं स्पृष्ट्वोद्गायेत्" इति प्रत्यक्षश्रुत्या "औदुम्बरी सर्वा वेष्टयितव्या" इत्यादिस्मृतेः विरोधे सति तु तादृशमनुमानं

प्रत्यक्षश्रुतिविरुद्धस्मृतिरूपं **अनपेक्षं** सन्मूलानपेक्षं सदप्रमाणं स्यादेव। **असति हि** विरोधे **अनुमानं** स्मृतेस्सन्मूलकल्पकमनुमानं प्रवर्तेत॥३॥ श्रुतिविरुद्धस्मृतिषु दीर्घवस्त्रलाभलोभादिसमाविष्टपुरुषकर्तृकत्वरूपस्य दृष्टस्यैव हेतोः दर्शनात् अवधारणाच्च न तत्र वेदमूलकत्वकल्पनसम्भवः ॥ ४ ॥

अथवा—वेदविद्वेषरूपे विरोधे सति वेदविद्वेषिणां शाक्यादीनां अनुमानं स्मरणं अनपेक्षं सन्मूलानपेक्षं सदप्रमाणम्. असति हि तस्मिन्विरोधे अनुमानं प्रमाणम् ॥ ३ ॥ हेतुदर्शनाच्च मन्वादिस्मृतिषु वेदमूलकत्वकल्पनाहेतोः शिष्टवैदिकपरिगृहीतत्वस्य दर्शनात् शाक्यादिनिबन्धेषु तददर्शनात् वेदविद्वेषिपरिग्रहमात्रस्यैव दर्शनाच्च न तेषु वेदमूलकतया प्रामाण्यसंभवः ॥ ४ ॥

श्रुतिविरुद्धानामपि 'औदुम्बरी सर्वा वेष्टयितव्या' इत्यादिस्मृतीनां श्रुतिमूलकत्वाविशेषात् प्रामाण्यम् । न च 'औदुम्बरीं स्पृष्ट्वोद्गायेत्' इति प्रत्यक्षश्रुतिविरोधात् तदनुपपत्तिः । परस्परविरुद्धार्थकानामपि ग्रहणाग्रहणादिश्रुतीनां बहुशो दर्शनेन विरोधे सत्यपि तत्कल्पने बाधकाभावात्; तद्वदेव विकल्पेन विरोधस्य परिहर्तुं शक्यत्वाच्च । न ह्यत्र प्रत्यक्षश्रुत्या स्मृतेर्मूलाकांक्षा निवर्तते, येन कल्पनामूलोच्छेदनात् विरुद्धप्रत्यक्षश्रुत्या लिङ्गस्येव स्मृतेर्बाधः स्यात् । न वा शैत्योष्णत्वयोरिवात्र विषययोरत्यन्तविरोधः, येनौष्ण्यप्रत्यक्षेणेव शैत्यानुमानस्य प्रकृते प्रमेयापहारलक्षणबाधः स्यात् । न त्वेतदस्ति, विकल्पेन द्वयोस्सम्भवात् इति प्राप्ते—

भाष्यकारैरेवं सिद्धान्तितम्—सर्वत्रानुमाने अनुमेयजिज्ञासायाः कारणत्वात् प्रत्यक्षश्रुत्या च स्पर्शविधानेनावेष्टितत्वरू-

पेण औदुम्बर्याः परिच्छिन्नत्वात् जिज्ञासाभावेन नौदुम्बरीवेष्टनविषयकश्रुत्यनुमानसम्भवः । तथा प्रत्यक्षश्रुतिविरोधाभावेऽपि यत्रलोभादिदर्शनं यथा "वैसर्जनहोमीयं वासोऽध्वर्युः परिगृह्णाति" इत्यादौ तत्रापि न श्रुतिकल्पनम्, क्लृप्तहेतोरेव मूलतोपपत्तेरिति ॥

वार्तिककारस्तु—न जिज्ञासाया अनुमित्यङ्गत्वं अग्न्याद्यजिज्ञासायामपि तदुदयात् सत्यपि वा तस्याः कारणत्वे अनुमितिविषयश्रुतेर्जिज्ञासितत्वाच्च प्रत्यक्षश्रुतिविरोधाभावेऽपि लोभादिमूलकत्वाङ्गीकारे च अष्टकादिस्मृतेरपि तदापत्तेः ॥ अतश्च प्रत्यक्षश्रुतिविरोधेऽपि स्मृतेः शिष्टत्रैवर्णिकपरिग्रहाविशेषेण श्रुतिमूलकत्वकल्पनोपपत्तेर्युक्तमेव प्रामाण्यम् । परन्तु यावच्छ्रुतिदर्शनं वेष्टनं नानुष्ठेयं, अर्थवादाद्युन्नीतविधिमूलकत्वस्यापि स्मृतिषु दर्शनेन प्रकृतेऽपि तन्मूलकत्वस्य सम्भावितत्वात् । तस्य चोन्नयनस्य प्रत्यक्षश्रुतिविरोधे आभासत्वसम्भवात् । अतश्च यावच्छ्रुतिदर्शनं अननुष्ठानलक्षणमप्रामाण्यमित्याभिप्रायं सूत्रमिति प्राह ॥

यद्वा— शाक्यादीनामपि क्षत्रियत्वप्रसिद्धेर्वेददर्शनसम्भवेन तत्प्रणीतस्मृतीनामपि वेदमूलकत्वं तन्मूलभूतवेदश्चेदानीं प्रलीन इति प्राप्ते— शिष्टत्रैवर्णिकानां धर्मत्वेन परिग्रहस्य पूर्वाधिकरणमुख्यहेतोरभावात् प्रत्युताप्रमाणत्वेनैव तेषां स्मरणात् वेदाप्रामाण्यवादिभिरेव च तत्प्रामाण्यस्वीकारात् वेदमूलकत्वकल्पनाऽनुपपत्तेरप्रामाण्यमिति सूत्रार्थः ॥ २ ॥

**(३)–शिष्टाकोपेऽविरुद्धमिति चेन्न शास्त्रपरिमाणत्वात् ॥ ५ ॥ अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन् ॥ ६ ॥**

शिष्टानां श्रुतिविहितानां वेदवेदिकरणादिरूपाणां पदार्थानामविरोधे सति **अविरुद्धं** "क्षुत आचामेत्" इत्यादिस्मृतिवचनमपि प्रमाणमेवेति वेदकरणाद्यनन्तरं कदाचित् क्षुतादिनिमित्तसंपाते आचमनादिकं स्मृतिविहितमपि कार्यमेव । यत्र हि श्रुतिविहितस्य औदुम्बरीस्पर्शादिरूपपदार्थस्य विरोधप्रसक्तिः तत्रैव सर्ववेष्टनस्मृत्यादिवचनमप्रमाणं स्यात् **इति चेत्** सिद्धान्ती त्वं पश्यसि **न** इदं युक्तं श्रुतिविहितपदार्थानां **शास्त्रपरिमाणत्वात्** शास्त्रेण क्रमबोधकश्रुत्यादिना अवगतं यत्परिमाणं कालादिपरिच्छेदः अव्यवधानादिरूपं तद्वत्त्वात् । तथा च श्रुतिप्रमितक्रमबाधप्रसङ्गेन उदाहृतस्मृत्यादिकमप्रमाणमेवेति ॥ ५ ॥ सिद्धान्तमाह— **अपि वा कारणाग्रहणे** अप्रामाण्यकारणानां तत्तत्स्मृतिकारेष्वदर्शने सति **प्रयुक्तानि** स्मृतिवचनविहितान्याचमनादीनि पदार्थरूपतया तद्धर्मभूतक्रमापेक्षया प्रबलानीति **प्रतीयेरन्** ज्ञायेरन् नयज्ञैः ॥ ६ ॥

अथवा—शिष्टाकोप इत्यादि सूत्रद्वयमेकमधिकरणम् । शाक्यादीनां यत् वैराग्यध्यानसत्यवचनदमदयाऽहिंसादिवचनं तत् **शिष्टाकोपे** शिष्टत्रैवर्णिकाविरोधाभावे सति **अविरुद्धं** सत् प्रमाणतया ग्राह्यमिति चेत् **न** इदं युक्तं **शास्त्रपरिमाणत्वात्** शास्त्राणां धर्मप्रमाणानां इयन्त्येवेति परिमाणवत्त्वात् शाक्यादिवचनस्य च तदनन्तःपातित्वात् न प्रामाण्यमिति ॥ ५ ॥

तथा—अपिवेतिसूत्रमधिकरणान्तरम्— अनिबन्धनानां वसन्तोत्सवाद्याचाराणामप्रामाण्यमित्युत्सूत्रपूर्वपक्षे सिद्धान्तमाह—**अपि वा का-**

रणाग्रहणे वसन्तोत्सवाद्यनुष्ठातॄणां शिष्टानां विप्रलिप्सादिरूपाप्रामाण्यकारणादर्शने सति प्रयुक्तानि तदनुष्ठितानि वसन्तोत्सवादीनि कर्तव्यानीत्येव प्रतीयेरन् ॥ ६ ॥

स्मार्तानामाचमनादीनां श्रौतैः क्रमकालपरिमाणादिभिर्विरोधे श्रौतत्वात् क्रमादीनामेव प्राबल्यात् तद्विषयस्मृतीनामप्रामाण्यम्। न हि 'क्षुते आचामेत्' इति विहितस्य स्मार्ताचमनस्य वेदवेदिकरणमध्येऽनुष्ठाने 'वेदं कृत्वा वेदिं करोति' इति श्रुतिविहितः क्रमः अनुष्ठातुं शक्यते । स्मार्तपदार्थानां च बहुत्वात् पूर्वाह्णादिकालः प्रयोगसिद्ध्यवगतं च परिमाणं न शक्यते अनुग्रहीतुम्। न च श्रौतत्वेऽपि क्रमादेः पदार्थधर्मत्वात् पदार्थभूतेभ्य आचमनादिभ्यः दौर्बल्यम् । प्रमाणपूर्वकत्वात् प्रमेयावगमस्य प्रथमावगतप्रमाणबलाबलापेक्षया प्रमेयबलाबलस्य दौर्बल्यादिति प्राप्ते—

पदार्थप्राप्त्यपेक्षत्वात् क्रमादेरौत्तरकालिकस्य यावत्प्रमाणगम्यपदार्थाविरोधेनैव कल्पनीयत्वात् न तावत्पदार्थविरोधित्वम्। परिमाणं तु न कस्य चिच्छास्त्रस्यार्थ इति न तस्य श्रौतत्वम्। विरोधेऽप्याचमनादीनां पदार्थत्वात् प्राबल्यमेव । प्रमाणानां हि न स्वरूपतो विरोधः । अपि तु प्रमेयविरोधनिबन्धनः । तद्यदैव प्रमेयविरोध आलोच्यते तदैव तद्गतेन बलाबलेन निर्णीते शास्त्रार्थे न प्रमाणबलाबलस्य नियामकमिति प्रमाणमेव तत्स्मृतिः॥

यद्वा—यच्छाक्यग्रन्थेषु वेदाविरुद्धं दानादिवचनं तस्य भवतु प्रामाण्यमिति प्राप्ते—

"स्वाध्यायोऽध्येतव्यः"* "वेदोऽखिलो धर्ममूलम्। तद्विदां च स्मृतिशीले"†

---

*तै. आ. २-१५.     †गौतमध. १

"पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥"*

इत्यादिवचनैर्नियतप्रमाणप्रतिपाद्यानामेव धर्मत्वप्रतीतेः अन्यतः प्रमितस्य फलसाधनत्वाभावात् तेषामप्रामाण्यमिति ॥ ॥

अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन् ॥

अनिबद्धानां वसन्तोत्सवाद्याचाराणां प्रामाण्यमप्रामाण्यं वेति सन्देहे एतेषां वेदमूलकत्वे अष्टकादिवत् मन्वादिभिर्निबन्धनापत्तेः सामान्यतः "तद्विदां च स्मृतिशीले" इत्यादिना निबन्धनेऽपि विशेषतोऽनिबन्धनेन तेषां श्रुतिदर्शनाभावादप्रामाण्यमिति प्राप्ते—

धर्मबुद्ध्या वैदिकैरनुष्ठीयमानत्वात् स्मृतिवदेव वैदिकत्वम् । विशेषतोऽनिबन्धनं तु गौरवभीत्या न दोष इति । व्यतिक्रमसाहसदर्शनं तु धर्मबुद्ध्या वैदिकैरननुष्ठीयमानत्वान्न वैदिकम् । न चैतावता सर्वेषयाप्यवैदिकत्वम् । अत आचाराणामपि धर्माधर्मयोः प्रामाण्यमिति ॥ ३ ॥

## (४)—तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिस्स्यात् ॥ ७ ॥ शास्त्रस्था वा तन्निमित्तत्वात् ॥८॥

तेषु यवादिशब्दव्यवहारेषु आर्यानार्यकृतेषु विप्रतिपत्तिः विशिष्टा प्रतिपत्तिः शक्त्यवगतिः समा तुल्या स्यात् यथा आर्यव्यवहाराद्यवादिपदे दीर्घशूकादिरूपेऽर्थे शक्तिग्रहः तथा अनार्यव्यवहारात् यवादिपदे कङ्ग्वादिरूपेऽर्थेपि शक्तिग्रहस्स्यात् कुतः? विरोधस्य एकतरबाधहेतुभूतस्य प्रबलदुर्बलभावस्य अदर्शनात् अनुपलम्भात् ॥ ७ ॥

*याज्ञवल्क्यस्मृ—१-३.

**शास्त्रस्था वा** वेदशास्त्रानुसारिणां आर्याणां व्यवहारेषु या अर्थाभिधानप्रतिपत्तिस्सैव प्रबला. कुतः? धर्मप्रतिपत्तेः **तन्निमित्तत्वात्** ॥८॥

अथवा—**तेषु** स्मृतिविरुद्धाचारपरिगृहीतेषु मातुलसुताविवाहादिषु विप्रतिपत्तिः विशिष्टा प्रतिपत्तिः धर्म्यत्वावगतिः **समा** तुल्या **स्यात्** स्मृत्याचारयोरुभयोरपि श्रुतिकल्पकतया प्रामाण्यात् विरोधस्य एकतरबाधहेतुभूतस्य प्रबलदुर्बलभावस्य अदर्शनात् ॥७॥ **शास्त्रस्था वा** विधिप्रत्ययघटितस्मृतिवाक्यानुसारिणी प्रतिपत्तिरेव बलीयसी आचारस्य **तन्निमित्तत्वात्** स्मृतिरूपशास्त्रकल्पनहेतुत्वात् ॥८॥

यद्वा—त्रिवृदादिशब्देषु वाक्यशेषलोकव्यवहाराभ्यां समा तुल्या विप्रतिपत्तिः शक्त्यवगतिः स्यात् । तयोः विरोधस्य प्रबलदुर्बलभावस्य अदर्शनात् ॥७॥ शास्त्रस्था वा वाक्यशेषाधीनैव शक्तिप्रतिपत्तिः बलीयसी धर्मप्रतिपत्तेः तन्निमित्तत्वात् वाक्यशेषसहकृतविधिवाक्यनिमित्तकत्वेन वाक्यशेषस्य प्रबलत्वात् ॥८॥

**प्रयोगरूपाचारस्य यत्रार्यम्लेच्छयोः परस्परमर्थविप्रतिपत्तिः यथा पीलुशब्दस्य वृक्षविशेष आर्याणां अन्येषां हस्तिनि तत्र तुल्यबलत्वम्, व्यवहारे आर्याणामिव म्लेच्छानामप्यभियुक्तत्वाविशेषात् । अवध्यस्मरणस्योभयत्रापि समानत्वादिति प्राप्ते—अभिधीयते—शक्यतावच्छेदकभेदेनानेकशक्तिकल्पनाप्रसङ्गात् एकत्रैव शक्तिः नोभयत्र । न च विनिगमनाविरहः; आर्यप्रसिद्धेरेव नियामकत्वात् । आर्या हि शब्दैकसमधिगम्यधर्माधर्मयोरविप्लुतिलिप्सया शब्दार्थतत्त्वं विविच्य परिपालयन्ति न म्लेच्छाः । दृष्टार्थव्यवहारस्य यथाकथञ्चिदपि सिद्धेः । अतस्तत्प्रसिद्ध्या वृक्षविशेष एव शक्तिः । गजप्रतीतिस्तु लक्षणया शक्तिभ्रमाद्वा । यत्र तु नियामकाभावः तत्रागत्या भक्षादिवा-**

ब्देषु उभयत्रापि शक्तिः, आर्याणामेवोभयत्रापि प्रयोगात् । तत्राऽपि कदाचिद्वाक्यशेषस्य नियामकता । "यत्रान्या ओषधयो म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्ति" इत्यनेनैव यवशब्दस्य दीर्घशूकविशिष्टे शक्तिः, प्रियङ्गुषु तु लक्षणया प्रयोगः ॥

एवं वा—यत्र मातुलकन्यापरिणयनादौ स्मृत्याचारयोर्विरोधः तत्रोभयोरपि श्रुतिकल्पकत्वात् तुल्यबलत्वमिति प्राप्ते—स्मृतीनां सप्रत्ययप्रणीतत्वात् स्मृतिषु कर्तव्यतावाचिविधिप्रत्ययश्रवणाच्च बलीयस्त्वम् । आचारेषु तु आचरितॄणां जनानां मन्वाद्यपेक्षया तथा प्रत्यायिततत्वाभावात् इतस्ततो विप्रकीर्णपरप्रकरणादिगतश्रुत्यवगमस्याशक्यत्वात् परकीयाचारमात्रदर्शनेन कर्तव्यतावाचिविधिप्रत्ययस्यावश्यकल्पनीयत्वाच्च दौर्बल्यम् । अत एवेदानींतनाचारदर्शनेन श्रुतिद्रष्टुः स्मृतिकारस्य स्मृतिं तदुपदेशं वा कल्पयित्वा स्मृतिकल्पनं; स्मृतीनां तु साक्षादेवेति विशेषः। अतश्च स्मृतिविरोधे आचारस्य यावच्छ्रुतिदर्शनं स्मृतिदर्शनं वा अननुष्ठानम् ॥

एवं वा—त्रिवृच्चर्वश्ववालादिशब्देषु यत्र लोकवाक्यशेषयोरर्थविप्रतिपत्तिः तत्र पदपदार्थसम्बन्धे लोकाद्वेदस्याधिक्ये प्रमाणाभावात् तुल्यबलत्वमिति प्राप्ते—विषयैक्याभावे विधिस्तुत्योरेकवाक्यताऽनुपपत्तेः विधिर्वाक्यशेषस्यैव शक्तिग्राहकत्वमनुमन्यते । अतश्च लौकिकप्रमाणावगतेऽर्थे अनेकशक्तिकल्पनाभिया न शक्तिः अपि तु लक्षणादिनैव बोधः। अत एव यत्र वाक्यशेषो नास्ति तत्रापि त्रिवृदादिपदार्थो वैदिक एव ग्रहीतव्य इति वक्ष्यते । अतश्च त्रिवृच्छब्दस्य स्तोत्रगतऋङ्नवकं शक्यं न तु त्रैगुण्यम् । चरुशब्दस्योदनः न तु स्थाली । अश्ववालशब्दस्य काशाः नाश्वकेशाः । वाक्यशेषास्तु कौस्तुभे द्रष्टव्याः ॥ ४ ॥

## (५)–चोदितं तु प्रतीयेताविरोधात्प्रमाणेन ॥९॥

यत्र पिकादिशब्देषु आर्याणां न क्वचिदर्थविशेषे व्यवहारः तत्र चोदितं तु अनार्यैर्व्यवहृतमेव तत्तत्पदार्थस्वरूपं प्रतीयेत बलवता प्रमाणेन अविरोधात् विरोधविरहात् ॥ ९. ॥

यत्र पिकनेमसततामरसादिशब्दानां नार्याणामर्थविशेषे प्रसिद्धिः म्लेच्छेषु तु पिकः कोकिलः नेम अर्धं सतं बृहत् परिमण्डलं शतच्छिद्रं दारुपात्रं तामरसं कमलमित्येवं प्रसिद्धिः तत्र तत्प्रसिद्धार्थस्यैव ग्रहणं; न तु निगमनिरुक्तादिना तत्कल्पनम् । न च म्लेच्छेषु शब्दार्थयोर्विप्लुतिदर्शनात् तत्प्रसिद्धेरविस्रम्भणीयता; पिकादिशब्दानां वेद एव दृश्यमानत्वेन अविप्लुतत्वात् । अतश्च तेषां वाच्याकांक्षायां तत्प्रसिद्धेरपि क्लृप्ततया शक्तिग्राहकत्वम् । अत एव निगमादिप्रसिद्धेरप्यार्यप्रसिद्धित्वेन प्राबल्येऽपि कल्प्यत्वेन दौर्बल्यम्, म्लेच्छप्रसिद्धेश्च म्लेच्छप्रसिद्धित्वेन दौर्बल्येऽपि क्लृप्तत्वेन प्राबल्यं; प्रमाणबलाबलापेक्षया प्रमेयबलाबलबलीयस्त्वस्य स्थापितत्वात् । अत एव नात्र विशेषेण पूर्वः पक्षः कथितः ॥ ५ ॥

## (६)–प्रयोगशास्त्रमिति चेत् ॥ १० ॥ नासन्नियमात् ॥ ११ ॥ अवाक्यशेषाच्च ॥ १२ ॥ सर्वत्र प्रयोगात्सन्निधानशास्त्राच्च ॥ १३ ॥

कल्पसूत्रादिकं प्रयोगशास्त्रं प्रयोगस्य धर्मानुष्ठानस्य साक्षाद्विधायकं सत् साक्षादेव वेदवत् प्रमाणं वेदमूलकतया प्रामाण्यकल्पने

गौरवात् इति चेत् ॥ १० ॥ न इदं युक्तं असन्नियमात् पूर्वमसतामेव माशकबौधायनादिकल्पसूत्रादीनां नियमात् निबन्धनात् तत्र स्पष्टमेव पौरुषेयत्वोपलब्धेः न लाघवमूलकवेदतुल्यप्रमाणत्वकल्पनसंभवः ॥ ११ ॥ अवाक्यशेषाच्च प्रायशो वेदे अर्थवादवाक्यानि दृश्यन्ते तथा कल्पसूत्रादिषु वाक्यशेषस्य अर्थवादादेरदर्शनात् अपि न तेषां वेदवदपौरुषेयतया स्वतःप्रामाण्यकल्पनसंभवः ॥ १२ ॥ कल्पसूत्राणां वेदमूलकत्वेन प्रामाण्यस्य सिद्धान्त्यभिमततया वेदमूलकत्वेन प्रामाण्ये स्वतः प्रामाण्ये वा विशेषादर्शनादेतद्विचारस्य वैफल्यमित्याशङ्कायामाह— सर्वत्र वेदविरुद्धेऽप्यर्थे प्रयोगात् कल्पकारैः स्ववाक्यस्य प्रयुक्तत्वात् सन्निधानशास्त्राच्च तादृशकल्पकारवाक्यविरुद्धस्य सन्निहितस्य प्रत्यक्षस्य श्रुतिवाक्यरूपस्य शास्त्रस्य सत्त्वाच्च विचारोऽयं सफल इत्यर्थः ॥ कल्पसूत्रादीनां स्वतः प्रामाण्ये प्रत्यक्षश्रुतिविरोधे सति तद्विषये विकल्पः स्यात् । वेदमूलकत्वेन प्रामाण्ये तु प्रत्यक्षश्रुतेः प्राबल्यात् यावन्मूलभूतश्रुतिवाक्यदर्शनमननुष्ठानलक्षणमप्रामाण्यमेवं तादृशकल्पसूत्रवाक्यस्येति भावः ॥ १३ ॥

**स्मृतीनां कल्पसूत्राणां वा षडङ्गानामेव वा शाक्यादिग्रन्थानां वा वेदत्वं वेदतुल्यत्वं वा भवतु । न श्रुत्यादिमूलकत्वं गौरवात् नित्यब्रह्मयज्ञविधिविषयत्वानुपपत्तेश्च । अङ्गानां तु 'षडङ्गमेके' इति स्मृतेरपि वेदत्वम् । बुद्धबौधायनशाक्यादिसमाख्या तु काठकादिवत् प्रवचननिमित्तत्वेनाप्युपपद्यत इति प्राप्ते—**

**दृढकर्तृस्मरणात् काठकादिवत् प्रवचननिमित्तत्वानुपपत्तेः नैषां वेदत्वं वेदतुल्यत्वं वा । प्रतिमन्वन्तरं च एवंविधानां ग्रन्थानां सत्त्वान्नित्यब्रह्मयज्ञविधिविषयत्वोपपत्तिः । 'षडङ्गमेके' इति तु परमतोपन्यासः, एकपदश्रवणात् । तस्मादेतेषां स्मृत्यधिकरण-**

न्यायेन वेदमूलकत्वमेव । शाक्यादिग्रन्थानां तु तदसम्भवादाभासत्वमेव ।

प्रयोजनं—पूर्वपक्षे कल्पसूत्रादीनां वेदत्वे वेदतुल्यत्वे वा यत्र प्रत्यक्षश्रुतिविरोधः तत्र विकल्पः यत्र वा प्रत्यक्षश्रुतिविरोधाभावेऽपि न्यायाभासमूलकं वचनं तत्रापि वचनत्वादेव तदनुष्ठानम् । न्यायोपन्यासस्तु हेत्वधिकरणन्यायेनार्थवादः । सिद्धान्ते तु—प्रत्यक्षश्रुतिविरोधे वा न्यायविरोधे वा यावच्छ्रुतिदर्शनमननुष्ठानलक्षणमप्रामाण्यम् । श्रुतिदर्शनोत्तरं तु विकल्पादि । यत्र तु न्यायोपन्यासरहितं मीमांसान्यायविरुद्धं च स्मृतिवचनं तत्र श्रुतिमूलत्वसंभवेन वचनविरोधे न्यायस्यैव आभासत्वात् तदर्थ एवानुष्ठेय इति । अत्र सर्वत्रोदाहरणानि मूलोक्तोदाहरणदूषणानि चास्मत्कृतकौस्तुभे द्रष्टव्यानि ॥ ६ ॥

(७)—अनुमानव्यवस्थानात्तत्संयुक्तं प्रमाणं स्यात् ॥ १४ ॥ अपि वा सर्वधर्मस्स्यात्तन्न्यायत्वाद्विधानस्य ॥ १५ ॥ दर्शनाद्विनियोगस्स्यात् ॥ १६ ॥ लिङ्गाभावाच्च नित्यस्य ॥ १७ ॥ आख्या हि देशसंयोगात् ॥ १८ ॥ न स्याद्देशान्तरेष्विति चेत् ॥ १९ ॥ स्याद्योगाख्या हि माथुरवत् ॥ २० ॥ कर्म धर्मो वा प्रवणवत् ॥ २१ ॥ तुल्यं तु कर्तृधर्मेण ॥ २२ ॥

अनुमानव्यवस्थानात् अनुमानस्य स्वमूलभूतप्रमाणानुमापकस्य गौतमधर्मशास्त्रादिरूपस्मरणस्य होलाकाद्याचारस्य च व्यवस्थानात् व्यव-

स्थितत्वात् तत्तत्स्मृतौ छन्दोगादिरूपाध्येतृध्येयत्वनियमस्य तत्तदाचारे प्राच्योदीच्यादिरूपकर्त्रनुष्ठेयत्वनियमस्य च दर्शनात् तत्तन्मूलतया कल्पनीयं **प्रमाणं** वेदवाक्यमपि **तत्संयुक्तं** छन्दोगप्राच्यादिरूपाधिकारिविशेषवाचकपदसंबद्धमेव **स्यात्** ॥ १४ ॥ **अपि वा** इति पूर्वपक्षो व्यावर्तते तत्तत्स्मृत्याचारावगतोऽर्थः **सर्वधर्मः** छन्दोगत्वाद्यनादरेण सर्वेषामेव धर्मः **स्यात् विधानस्य** विधायकस्य तत्तन्मूलप्रमाणस्य **तन्न्यायत्वात्** सर्वधर्मताग्राहकन्यायवत्त्वात् । विधायकवाक्ये कर्तरि छन्दोगत्वादिविशेषणविशिष्टत्वग्राहकप्रमाणाभावे सर्वविषयत्वमेव तद्वाक्यस्येति हि न्यायः॥१५॥ यत्र तु शिखाकर्मादिषु "मुण्डा भृगवः" इत्यादि व्यवस्थापकवचनं दृश्यते तत्र तादृशवचनस्य **दर्शनात् विनियोगः** भृग्वादिरूपाधिकारिविशेषान्वयः **स्यात्** । न चेह गौतमधर्मशास्त्राद्यवगते सर्वधर्मे विशेषव्यवस्थापकं किंचिद्दृश्यत इति ॥ १६ ॥ "लिङ्ग" इत्यविभक्तिको निर्देशस्सौत्रः । **नित्यस्य** तत्तत्कर्मकर्तृनियतस्य **लिङ्गस्य** रूपस्य कस्य चिदपि **अभावात् च** । तादृशरूपसत्त्वे हि तद्विशिष्टस्यैव अधिकारिता विधाने प्रतीयेत । "शुक्लो होता" इत्यादौ तु प्रत्यक्षमेव श्रुतौ शुक्लत्वादि लिङ्गं श्रूयते । शुक्लत्वश्यामत्वादिकं तु नात्र लिङ्गं कर्तृविशेषणं भवितुमर्हति, अनेवंविधैरपि तत्तत्कर्मानुष्ठानात्॥१७॥ **आख्या** प्राच्यादिसमाख्या **हि देशसंयोगात्** प्राच्यां भव इत्यादिव्युत्पत्त्या प्रागादिदेशसंबन्धप्रवृत्तिनिमित्तका । तथा च प्राग्देशं परित्यज्य दक्षिणापथमागतानां पुत्रपौत्रादिभिरपि प्राच्यत्वाद्यभिमानेन तत्तदाचारानुष्ठानात् "प्राच्या होलाकोत्सवं कुर्युः" इति श्रुतिकल्पने तदनुपपत्तिः त्यक्तप्राग्देशेषु प्राच्यपदवाच्यत्वासंभवात् ॥ १८ ॥ प्राच्यादिसमाख्यानां प्रागादिदेशसंबन्धनिमित्तकत्वे **देशान्तरेषु** प्राग्देशादिकं परित्यज्य दक्षिणापथादिदेशस्थेषु प्राच्यादिव्यवहारो **न स्यात्** । अतः प्राच्यत्वादिकं जातिविशेषस्तन्निमित्तिका च प्राच्यादिसमाख्येत्याश्रयणीयं **इति चेत्**

॥१९॥ नेदं युक्तं **योगाख्या** प्राच्यादियौगिकसमाख्या **हि माथुरवत्** मथुरां परित्यज्य नगरान्तरमागते "तत आगतः" इत्यनुशिष्टाणन्तमाथुरशब्दवत् प्राचीत आगतः प्राच्य इति योगनिमित्ता उपपन्ना **स्यात्**। तेन जातिकल्पकाभावान्न जातिप्रवृत्तिनिमित्तकत्वं तत्समाख्यायाः ॥२०॥ कर्तृविशेषवाचिपदघटितश्रुतिकल्पनाया उक्तरीत्या असंभवेऽपि "कृष्णमृत्तिकाप्राये अह्नीनैवुकापरपर्यायं करञ्जवृक्षपूजनं कुर्युः" इत्यादिरीत्या श्रुतिकल्पनं संभवत्येवेति शङ्कते—"प्राचीनप्रवणे वैश्वदेवेन यजेत" इत्यादौ प्राचीन**प्रवणवत्** कृष्णमृत्तिकाप्रायादिदेशविशेषः **कर्मधर्मो वा** अह्नीनैवुकादिकर्माङ्गमेव स्यात् ॥ २१ ॥ समाधत्ते—देशविशेषः कर्मधर्मतयोक्तः **कर्तृधर्मेण** प्राच्यत्वश्यामत्वादिना तुल्य एव. अन्यूनानतिप्रसक्तत्वाभावस्य उभयत्राविशिष्टत्वात् । कृष्णभूमिं परित्यज्य रक्तमृत्तिकाप्रायदेशनिवासिभिरपि तदनुष्ठानात् तथा श्रुतिकल्पनं न संभवतीति ॥ २२ ॥

अथ यत्र स्मृतिषु पाठव्यवस्था यथा गौतमीयाः छन्दोगैरेव तथा आचारेषु कर्तृव्यवस्था यथा होळकादि प्राच्याद्यभिमानिभिरेव तत्र तदनुमेयश्रुतिरप्यनुमापकस्य नियतविषयत्वात् नियताधिकारिकैवेति नान्यैस्तदनुष्ठेयमिति प्राप्ते—

यद्यप्यनुमापकं नियतविषयकं तथाऽपि नानुमेयश्रुतौ विशेषणं प्राच्यत्वादि दातुं शक्यम् । न हि प्राच्यत्वं नाम सर्वाचरित्रनुगतं, जातिव्यक्तिगुणसंस्थानादिभिर्निर्वक्तुं शक्यम् । तत्र तद्देशगतानामप्यनाचरणात् चिरनिर्गतपुत्रपौत्राणामप्याचरणाच्च । अतो विशेषणाभावात्सर्वविषयत्वम् । गौतमीयादिस्मृतेस्तु न छन्दोगाधिकारस्मरणं, येन श्रुतावपि तत्सम्भाव्येत । पाठमात्रं तु तेषां स्मृतिकर्तुस्तच्छाखीयत्वादुपपन्नम् । कर्ता हि छन्दोगः स्वशिष्यान् छन्दोगान् ग्रन्थमध्यापयामास । तेऽप्यन्यानित्येवं पाठः तन्मात्रे व्यवस्थित इति तत्रापि सर्वविषयत्वमेव ॥ ७ ॥

**(८)–प्रयोगोत्पत्त्यशास्त्रत्वाच्छब्देषु न व्यवस्था स्यात् ॥ २३ ॥ शब्दे प्रयत्ननिष्पत्तेरपराधस्य भागित्वम् ॥ २४ ॥ अन्यायश्चानेकशब्दत्वम् ॥ २५ ॥ तत्र तत्त्वमभियोगविशेषात्स्यात् ॥ २६ ॥ तदशक्तिश्च तदनुरूपत्वात् ॥ २७ ॥ एकदेशत्वाच्च विभक्तिव्यत्यये स्यात् ॥ २८ ॥**

व्याकरणस्य **प्रयोगोत्पत्त्यशास्त्रत्वात्** प्रयोगे साधुशब्दप्रयोगे उत्पत्तौ औत्पत्तिक इत्यादौ उत्पत्तिपदस्य स्वभावपरतया साधुत्वरूपे स्वभावे च अशास्त्रत्वात् अनियामकत्वात् **शब्देषु** गोगाव्यादिषु **व्यवस्था** साध्वसाधुविभागः **न स्यात्** । साधूनेव प्रयुञ्जीतेति प्रयोग॰ नियमस्य वा गवादिशब्दा एव साधव इति स्वभावनियमस्य वा साधुत्वनिर्वचनाद्यसंभवेन व्याकरणेन कर्तुमशक्यत्वान्न व्याकरणं प्रमाणमिति भावः ॥ २३ ॥ समाधत्ते—**शब्दे** गवादिशब्दे **प्रयत्ननिष्पत्तेः** कण्ठताल्वादिप्रयत्नेन निष्पत्तेर्दर्शनात् गाव्यादिशब्दानां **अपराधस्य** करणापाटवादिजन्यापभ्रंशस्य **भागित्वं** गम्यते । तथा च गोशब्दोच्चिचारयिषया करणापाटवादिना गावीशब्दः केनचिदुच्चरितः प्रयोज्येन च तदभिप्रायज्ञेन गौरानीता । तद्दृष्ट्वा पार्श्वस्थश्च गावीशब्दस्य गवि शक्तिं गृह्णन् स्वयमपि व्याजहारेत्येवंरीत्या गाव्यादिशब्दानां गवाद्यपभ्रंशरूपतावगतेः गवादिशब्दानामेव वाचकत्वमनपभ्रष्टत्वं साधुत्वम् । एतज्ज्ञापकं च व्याकरणमिति भवति व्याकरणं प्रमाणम् ॥ २४ ॥ गोशब्दवत् गावीशब्दस्यापि वाचकत्वकल्पनं एकस्यार्थस्य गवादेः **अनेकशब्दत्वं** गोगाव्याद्यनेकशब्दवाच्यत्वं **अन्यायश्च** न्यायभिन्नं हि अन्याय्यं प्रसज्यते । हस्तादिषु तु हस्तकरपाण्याद्यनेकशब्दवाच्यत्वमभियुक्तोपदेशबलात्स्वीक्रियते ॥ २५ ॥

**तत्र तत्त्वं** गवादिशब्देषु साधुत्वं इतरेष्वपभ्रष्टत्वं च **अभियोगविशेषात्** अभियुक्तानां व्याकरणप्रणेतॄणां यः अभियोगविशेषः उपदेशविशेषः सूत्रादिरूपः तस्मादवगन्तुं शक्यं **स्यात्** ॥ २६ ॥ **तदशक्तिश्च** गाव्यादिशब्दानामवाचकत्वं च तेषां गाव्यादिशब्दानां **तदनुरूपत्वात्** गवादिशब्दानुरूपत्वात् । तथा च गाव्यादिशब्दानां कथंचिद्वर्णसाजात्येन वाचकगवादिशब्दोपस्थापकतयैवार्थबोधोपपत्तेः न वाचकत्वकल्पनमावश्यकमिति भावः ॥ २७ ॥ एकदेशविकारेऽपि उपदर्शितरीत्या अर्थप्रत्ययस्वीकारादेव **विभक्तिव्यत्यये** "अश्मकेभ्य आगच्छति" इति वक्तव्ये अश्मकैरागच्छतीति विभक्तिव्यत्ययप्रयोगेऽपि **एकदेशत्वाच्च** विभक्तिरूपैकदेशविकारादेव च अर्थप्रत्यय उपपन्नः **स्यात्** ॥ २८ ॥

स्मृत्यधिकरणन्यायेन सिद्धमपि व्याकरणप्रामाण्यमाक्षिप्यते । नियमद्वयार्थं हि तत् । साधूनेव प्रयुञ्जीत नासाधूनित्येकः । गवादय एव साधवः न गाव्यादय इत्यपरः । न च नियमद्वयस्य मूलं सम्भवति; प्रतिगवादिशब्दमनेकश्रुतिवाक्यपाठासम्भवात्, साधुत्वस्य पूर्ववन्निर्वचनासम्भवेन अनुगतैकश्रुतिकल्पनानुपपत्तेश्च न हि साधुत्वं नाम अर्थप्रत्यायकत्वं अनादित्वे सति वाचकत्वं वा । गाव्यादिष्वपशब्देष्वपि सत्वात् । अपशब्दानां कचित् वाचकत्वाभावे गवादिषु गौणत्वस्याप्यसम्भवाच्च । अतो वाचकत्वाविशेषात् न व्याकरणेन नियमस्सम्भवतीति प्राप्ते—

प्रयोगप्रत्यययोस्साधुशब्दापभ्रंशजानां गाव्यादिशब्दानां साधुशब्दोपस्थापनद्वारा उपपत्तेः न वाचकत्वकल्पकता, अनेकशक्तिकल्पनापत्तेः । इदानींतनानां च शक्तिभ्रमात्तौ प्रयोगप्रत्ययौ । न च घटकलशादिपदवद्विनिगमनाविरहः; पाणिन्यादिप्रणीतव्याकरणस्यैव नियामकत्वात् । न चामूलत्वम्; प्रयोगनियमे साधू-

नैव प्रयुञ्जीतेत्येवंविधाया एकस्या एव श्रुतेर्मूलत्वात् । साधुत्वं चानादिवाचकत्वम्, अनपभ्रष्टत्वं वा, व्याकरणाभ्यासजनितसंस्कारव्यङ्ग्या जातिर्वा, प्रमितवृत्त्या अर्थप्रत्यायकत्वं वेति कौस्तुभ एवातिक्षुण्णम् । तदभावश्चासाधुत्वम् । प्रत्यक्षैव श्रुतिः "न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा एष यदपशब्दः" इत्यादि मूलम् । अयं च निषेधः प्रकरणात् ज्योतिष्टोमाङ्गम् । यज्ञमात्रेऽपि च निषेधः, "याज्ञे कर्मणि नियमोऽन्यत्रानियमः" इति महाभाष्यानुसारात् । साधुप्रयोगनियमात् परं फलोदय इत्यपि "एकश्शब्दस्सम्यग्ज्ञातस्सुष्ठु प्रयुक्तः स्वर्गे लोके कामधुग्भवति" इति वचनात् । अत्र हि प्रयोगाश्रितसाधुशब्दनियमः फलोद्देशेन विधीयते । रागप्राप्तस्यापि साधुप्रयोगस्य "तस्मादियं व्याकृता वागुद्यते"* इति वचनादाश्रयत्वसिद्धिरिति स्पष्टं कौस्तुभे । गवादय एव साधवः न गाव्यादय इति साधुस्वरूपनियमस्य तु अनादिप्रयोगपरम्परैव मूलम् । अतः प्रमाणं व्याकरणम् । यत्तु—न्यायमूलकं स्फोटादि तत्रोच्यते श्रुतिविरुद्धं च तन्न्यायश्रुतिविरोधे कामं भवत्वप्रमाणम् ॥ ८ ॥

## (९)—प्रयोगचोदनाभावादर्थैकत्वमविभागात्स्यात् ॥ २९ ॥

उत्तराधिकरणोपोद्घाततया लोकवेदयोश्शब्दार्थैकत्वमिहाभिधीयते—**प्रयोगचोदनाभावात्** प्रयोगेषु ज्योतिष्टोमादिकर्मप्रयोगेषु याश्चोदनाः "ज्योतिष्टोमेन स्वर्गकामो यजेत" "गां दद्यात्" इत्याद्याः तासां भावात्सद्भावात् **अविभागात्** प्रत्यभिज्ञया "त एवामी गवादयश्शब्दाः ये लोकेऽस्माभिर्दृष्टाः" इत्यादिकया अभेदस्य गृह्यमाणत्वाच्च **अर्थैकत्वं** अर्थस्य वैदिकगवादिशब्दार्थस्य लौकिकगवादिशब्दार्थेन सहाभिन्नत्वं **स्यात्**। भेदे हि वैदिकशब्दार्थसम्बन्धस्य

* तै. सं. ६-४-७-

दुरधिगमतया चोदनानां निरर्थकत्वप्रसङ्गेन सद्भाव एव नोपपद्येत। तथा वैदिकलौकिक शब्दार्थाभेदावगाहिनी प्रत्यभिज्ञाऽपि नोपपद्येत। अभेदे च लोकावगतशब्दार्थसंबन्धवशादेव वैदिकगत्रादिपदादिभ्योऽप्यर्थप्रत्ययसंभवात्सफलाश्चोदनाः। लोकाप्रसिद्धानां गृपादिशब्दानां तु प्रसिद्धपदसन्निधानवशादेव शक्तिग्रहस्सुलभ इति ॥ २९ ॥

वाचकशब्दप्रसङ्गाद्वाच्यं किं घटत्वादिजातिः उत व्यक्तिरिति चिन्ता। तदर्थं च लोकवेदयोश्शब्दानामन्यत्वमुत नेति चिन्तनीयम्। अन्यत्वे ह्युपायाभावेन वैदिकशब्दशक्तिग्रहस्याप्यसम्भवात् नाद्या चिन्ता आरम्भणीया। एकत्वे तु लोकवृद्ध व्यवहारानुसारेण गृहीता शक्तिर्वेदेऽपि फलिष्यतीति युक्ता आद्या चिन्ता। तत्र वर्णाभेदेऽपि स्वरच्छान्दसवर्णागमलोपविकाराध्यायानध्यायादिधर्मभेदात् सरोरस इत्यादिपदयोरिव लोकवेदयोः पदानामन्यत्वमिति प्राप्ते—

यत्रार्थभेदप्रतीत्यनुगुणधर्मभेदस्तत्र पदभेदः यथा सरो रस इत्यादौ क्रमात्। ब्रह्मब्राह्मणेति न्यूनातिरिक्तत्वात्। स्थूलपृषतीमित्यत्र कर्मधारयबहुव्रीह्योस्स्वरात् अन्तोदात्ताद्युदात्तत्वरूपात्। पचते दक्षिणां देहि, भोजनार्थं पचत इत्यत्र व्यधिकरणपदसन्निधिरूपात् वाक्यात्। यातः पुनरायाति यातो देवदत्तयज्ञदत्तावित्यत्र समानाधिकरणपदसन्निधिरूपया श्रुत्या। अश्व इत्यगम इत्यर्थे व्याकरणस्मृत्या तदभिज्ञस्य पदभेदानुभवात्। यत्र तु नार्थभेदप्रतीतिः तत्र सत्यपि धर्मभेदे दृढतरप्रत्यभिज्ञाबलेन एकत्वावधारणात् न पदान्यत्वं लोकवेदयोरिति युक्ता आद्या चिन्ता ॥ ९ ॥

## (१०)—अद्रव्य शब्दत्वात् ॥ ३० ॥ अन्यदर्श-

**नाच्च ॥ ३१ ॥ आकृतिस्तु क्रियार्थत्वात् ॥ ३२ ॥ न क्रिया स्यादिति चेदर्थान्तरे विधानं न द्रव्यमिति चेत् ॥ ३३ ॥ तदर्थत्वात्प्रयोगस्याविभागः ॥ ३४ ॥**

गवादिपदानां किं व्यक्तौ शक्तिः उत जातौ इत्ययं वाचकशब्दविचारप्रसङ्गायातो वाच्यसंशयः । तत्र जातिवाचकत्वं निराकुर्वन् पूर्वपक्षी आह—प्रयोगचोदनाभावादित्येतत् पूर्वाधिकरणे सिद्धान्तसूत्रमपीह तन्त्रेण पूर्वपक्षसूत्रमपि । जातौ **प्रयोगचोदनाभावात्** व्रीहीन्प्रोक्षतीत्यादिप्रोक्षणाद्यनुष्ठानविधेरसंभवात् **अविभागात्** क्वचिद्व्यक्तिः क्वचिच्च जातिरर्थ इति विभागस्यान्याय्यत्वाच्च **अर्थैकत्वं** व्यक्तेरेव पदार्थत्वं न जातेरिति **स्यात्** । **अद्रव्यशब्दत्वात्** गवादिपदानां जातिवाचकत्वे सति द्रव्यवाचकशब्दत्वाभावात् "एकां गां दद्यात्"* इत्यादौ व्यक्ताविव लिङ्गसंख्याकारकान्वयो वाच्यः, स च न घटते द्रव्यस्यैव तद्योगसंभवात् जातेस्तदसंभवात् । तस्माद्व्यक्तिरेव पदार्थः ॥३०॥ **अन्यदर्शनाच्च** "यदि पशुरुपाकृतः पलायेतान्यं पशुमुपाकुर्यात्" इत्यादौ अन्यपदसमभिव्याहारदर्शनादपि पदानां न जातिवाचित्वम् । जातेः पशुपदार्थत्वे तत्र प्रक्रान्तपशुपदार्थान्यत्वान्वयायोगात् । व्यक्तिवाचित्वे तु पदानां उपाकृतपशुव्यक्त्यन्यत्वं पशुव्यक्त्यन्तरे संभवत्येवेति नैषा नुपपत्तिः ॥ ३१ ॥ सिद्धान्तमाह—**आकृतिस्तु** जातिरेव गवादिपदवाच्या न व्यक्तिः; कुतः? **क्रियार्थत्वात्** "पशुना यजेत" इत्यादेः पश्वादिकरणकक्रियाप्रतिपादकत्वसंभवात् । व्यक्तिशक्तौ हि पशुपदस्य किमेकव्यक्तौ शक्तिः उत सकलव्यक्तिषु । नाद्यः, तद्व्यक्तिनाशे सति वेदस्यानित्यसंयोगित्वप्रसङ्गात् । व्यक्त्यन्तरकरणकयागस्य शास्त्रार्थत्वानुपपत्तिप्रसङ्गाच्च । न द्वितीयः, गौरवात् भूतभाविसकलव्यक्तिकरणकत्वस्य

---

*तै. ब्रा. १-४-७

यागक्रियायां संपादयितुमशक्यत्वाच्च । पशुत्वोपलक्षितव्यक्तिवाचित्वे च लाघवात् पशुत्व एव जातौ शक्तिस्वीकरणमुचितम् । पशुत्वजातर्थे यागकरणत्वं व्यक्तिद्वारकमिति नान्वयानुपपत्तिः ॥ क्वचित्तु व्यक्ते-रपि भानं लक्षणयोपपादनीयमिति ॥ ३२ ॥ पूर्वपक्ष्युक्तानि दूषणान्यु-द्धर्तुमनुवदति—**क्रिया** प्रोक्षणादिरूपा जातौ **न स्यादिति चेत्**, एवं—'यदि पशुरुपाकृतः पलायेतान्यं पशुमुपाकुर्यात्' इति **अर्थान्तरे** अन्यस्मिन्पशुपदार्थे विधानं उपाकरणविधिः न स्यादिति चेत्, तथा—**द्रव्यं** 'एकां गां दद्यात्'* इत्यादौ लिङ्गसंख्याद्यन्वययोग्यं द्रव्यं च **न** प्रतीयेत **इति चेत्** ॥ ३३ ॥ एवमनूद्य परिहरति—**प्रयोगस्य** 'व्रीहीन्प्रोक्षति' इत्याद्युपदर्शितप्रयोगस्य **तदर्थत्वात्** लक्षणया व्यक्ति-रूपार्थपरत्वात् **अविभागः** न जातिशक्तिवादभङ्गः ॥ ३४ ॥

इति सारबोधिन्यां जैमिनिसूत्रवृत्तौ प्रथमस्य तृतीयः.

---

**तत्रावघातादिक्रियाणां लिङ्गकारकसङ्ख्यादीनां च जाताव-योग्यत्वात् गौश्शुक्लेत्यादिसामानाधिकरण्यनिर्देशाच्च व्यक्ति-वाचित्वमेव । न चैवं जातिबोधानापत्तिः; लक्षणादिना तद्बो-धोपपत्तेः । व्यक्तिशक्तिग्रहस्यैव वा कार्यतावच्छेदकं जातिवि-शिष्टशाब्दबोधत्वम् । अतो न दोषः । न च विनिगमनाविरहः । लाघवस्यैव नियामकत्वात् । तथा हि—न शक्तिग्रहस्य स्वात-न्त्र्येण कारणत्वम् । अपि तु लाघवात् शक्यत्वादिसम्बन्धेन घटपदवत्ताज्ञानस्यैव । अतश्चास्मन्मते घटत्वं धर्मितावच्छेदकी-कृत्य, शक्यत्वसम्बन्धेन घटपदप्रकारकस्य ज्ञानस्य घटो घटपद-वानित्याकारकस्य विशेष्यतासम्बन्धेन विशिष्टशाब्दबुद्धित्वाव-च्छिन्नं प्रति कारणत्वम् । भवन्मते तु—घटत्वत्वं धर्मितावच्छेद-**

---

* तै. ब्रा. १-४-७.

कीकृत्य तद्वाच्यम् । अतश्च घटत्वत्वस्य घटेतरावृत्तित्वादिरूपस्यानेकपदार्थघटितस्य प्रवेशात् तव कार्यकारणभावे गौरवम् । न च शक्त्यानन्त्यादिदोषः । तस्य फलमुखत्वात् । अतश्च लाघवात् व्यक्तावेव शक्तिः; जातिविशिष्टव्यक्तौ वा; न तु जातावेवेति प्राप्ते—

घटत्वं धर्मितावच्छेदकीकृत्य शक्यत्वसम्बन्धेन घटपदवत्ताज्ञानस्य कारणत्वं पदत्वं धर्मितावच्छेदकीकृत्य शक्त्यत्वसम्बन्धेन घटवत्ताज्ञानस्य वा घटपदं घटवदित्याकारकस्य कारणत्वमित्यत्र विनिगमनाविरहेण अनन्तकार्यकारणभावप्रसङ्गात् । अस्मन्मते तु—घटपदत्वं धर्मितावच्छेदकीकृत्य शक्तत्वसम्बन्धेन घटत्ववत्तानिश्चयस्यैव घटपदं घटत्ववदित्याकारकस्य कारणत्वकल्पनाल्लाघवम् । नच ममापि विपरीतमापादयितुं शक्यम् । तथा सति घटत्वस्य धर्मित्वे स्वरूपेण तस्य धर्मित्वायोगात् घटत्वत्वेन तस्य प्रवेशे गौरवस्य त्वयैवोक्तत्वात् । अतो न घटत्वत्वावच्छिन्नं घटत्वं शक्यत्वसम्बन्धेन घटपदवदित्याकारकं ज्ञानं कारणं, अपि तु घटपदं शक्तत्वसम्बन्धेन घटत्ववदित्याकारकमेव जातेस्स्वरूपेणैव प्रकारत्वोपपत्तौ घटत्वत्वस्याप्रवेशात् । न च समवायेनान्यप्रकारत्व एव जातेः स्वरूपेण प्रकारता न सम्बन्धान्तरेणेत्यत्र प्रमाणमस्ति । परैरपि तथाऽनभ्युपगमाच्च । अतश्च कार्यकारणभावेऽपि लाघवात् घटत्व एव शक्तिः । शक्त्यानन्त्यादि च नास्त्यस्मन्मते । अतः प्रथमोपस्थितत्वात् जातावेव शक्तिः । एवमरुणादिशब्दानामपि गुण एव गुणत्वे वा न तद्विशिष्टद्रव्ये । कथं तर्हि व्यक्तिबोधः; अभेदात् । उक्तविधकारणस्य जातिगुणविशिष्टव्यक्तिशाब्दत्व एव कार्यतावच्छेदकत्वस्वीकाराद्वा । वस्तुतस्तु—जातिगुणशाब्द-

त्वमेव लाघवेन कार्यतावच्छेदकम् । व्यक्तिस्तु तृतीयादिस्थले 'पशुना यजेत' 'अरुणया पिङ्गाक्ष्या क्रीणाति'[1] इत्यादौ नैव पदाद्भासते; जातिगुणयोरेव व्यक्तिपरिच्छेदद्वारा कारणत्वोपपत्तेः । लिङ्गसङ्ख्ययोरपि पाशाधिकरणन्यायेन सामानाधिकरण्येन पार्ष्ठिको जातिगुणसम्बन्धः । अतः सम्बन्धविधयैव तत्र व्यक्तिबोधः । द्वितीयादिस्थले तु जातिगुणयोः कर्मत्वाद्यन्वयायोग्यत्वात् व्यक्तेर्लक्षणया बोधः । तस्या एव कर्मत्वाद्यन्वयः । लिङ्गसङ्ख्यान्वयश्च साक्षात्सम्बन्धेनैव । सामानाधिकरण्यं च व्यक्तिद्वारकमिति सर्वं सुस्थम् ।

प्रयोजनं पूर्वपक्षे रथन्तरादिशब्दानामृग्वाचित्वात् 'रथन्तरमुत्तरयोर्गायति' इत्यादौ उत्तरापदोपलक्ष्योत्तराकार्ययोः ऋग्विधानम् । सिद्धान्ते तु गीत्यतिदेश उत्तरास्विति वक्ष्यते ॥१०॥

इति भाट्टदीपिकायां प्रथमस्याध्यायस्य तृतीयः पादः.

---

## (१)-उक्तं समाम्नायैदमर्थ्यं तस्मात्सर्वं तदर्थं स्यात् ॥ १ ॥

विध्युद्देशगतपदविशेषप्रामाण्यनिरूपणमेतत्पादोपाधिः । **समाम्नायैदमर्थ्यं** समाम्नायस्य कृत्स्नस्य पदजातस्य ऐदमर्थ्यं क्रियान्वितस्वार्थबोधकत्वं **उक्तं** 'तद्भूतानां' इत्यत्र । **तस्मात् सर्वं** गुणवाचित्वेन नामधेयत्वेन वाऽभिमतं कृत्स्नमेव उद्भित्सोमादिपदं वक्ष्यमाणरीत्या गुणत्वेन नामत्वेन वा तदर्थस्य विधावन्वयसंभवात् **तदर्थं** क्रियान्वित-

---

[1] तै. सं. ६-१-६.

स्वार्थं सत् प्रमाणं स्यात् । अन्यथा अध्ययनविध्यवगतस्य प्रयो जनवदर्थज्ञानार्थत्वस्यासङ्गतेः ॥ १ ॥

इह गुणविधित्वेन नामधेयत्वेन वा सम्मतानां सर्वेषामेव-फलपदातिरिक्तसुबन्तानां उद्भित्सोमादिपदानां प्रामाण्यमप्रामाण्यं वेति संशये—प्रकारासम्भवात् अप्रामाण्यम् । तथाहि—'उद्भिदा यजेत पशुकामः' 'सोमेन यजेत' इत्यादौ उद्भिदादिपदेभ्यस्स्तुतिबुद्धेरनुत्पत्तेर्न तावदर्थवादत्वम् । मन्त्रत्वप्रसिद्ध्यभावाच्च न तत् । एतेषां प्रयोगकाले उच्चारणे च एतत्प्रतिपाद्यार्थस्य यागाङ्गताबोधकप्रमाणाभावेन एतेषां प्रयोगसमवेतार्थस्मारकत्वानुपपत्तेश्च । न च विध्यन्तर्भावः । कामशब्दाद्यभावेन साध्याद्यनभिधायकत्वात् । एकपदगतयजिनैव करणप्रतिपादने सत्येतेषां तत्प्रतिपादकत्वायोगात् । सिद्धरूपाणां सोमादीनां व्यापारान्तरेण भावनेतिकर्तव्यतात्वानुपपत्तेश्च । नामधेयत्वे तु अभिन्नत्वादेव करणानुग्राहकत्वाभावादितिकर्तव्यतात्वानुपपत्तेः । न च कथमपि भावनान्वयासम्भवेऽपि याग एव करणत्वेनान्वयो भवत्विति वाच्यम् । कारकाणां परस्परसम्बन्धाभावात् । अतः कथमपि भावनान्वयासम्भवात् अनाख्यातत्वेन विधिभावनयोरनभिधानात् अन्यस्य च प्रकारस्य वक्तुमशक्यत्वादप्रामाण्यमिति प्राप्ते—

अध्ययनविध्यध्यापितस्य अप्रामाण्यासम्भवात् प्रकारान्तरासम्भवेऽपि विध्यन्तर्भावस्य स्पष्टत्वेन तत्रैव गुणविधित्वेन नामधेयत्वेन वा वक्ष्यमाणरीत्या सर्वानुपपत्तिपरिहारेण प्रामाण्यमिति सिद्धम् ॥ १ ॥

**(२)–अपि वा नामधेयं स्याद्यदुत्पत्तावपूर्वमविधायकत्वात् ॥ २ ॥**

**यत् उत्पत्तौ** 'उद्भिदा यजेत' इत्यादौ विधिवाक्ये **अपूर्वं** अर्थान्तररूढतया पूर्वमनवधृतं उद्भिदादिपदं **अपि वा नामधेयं** नामधेयमेव **स्यात्** न तु गुणविधिः । कुतः **अविधायकत्वात्** तद्वाक्यस्य मत्वर्थलक्षणादिप्रसङ्गभयेन विधायकत्वासंभवात् ॥ २ ॥

अतः परं क्व गुणविधित्वं क्व नामधेयत्वमिति कोष्ठशोधनिकार्थमारम्भः । तदिह गुणे कर्मणि च तुल्यवद्वृत्तिकानामुद्भिदादिपदानां विधेयगुणसमर्पकत्वं कर्मनामधेयत्वं वेति चिन्तायां— 'भिदिर् विदारणे' इति स्मृत्या विदारणसमर्थखनित्रादिवचनत्वप्रसिद्धेः नामधेयत्वे वैयर्थ्यप्रसङ्गाच्च गुणविधित्वमेव युक्तम् । तत्र गुणविशिष्टं कर्मैव फलोद्देशेन विधीयत इत्येकः पक्षः । अथ वा प्रकृतसोमयागानुवादेन गुणमात्रविधानमित्यपरः । न च विनिगमनाविरहः । इतिकर्तव्यतासन्निधिविशेषस्यैव कर्मविधिनियामकत्वात् । न चैवं फलपदानर्थक्यम् । 'सर्वेभ्यो ज्योतिष्टोमः' इति वचनेन तस्य सर्वफलार्थत्वावगतेः यजिपदस्य पशुफलोपधायकयागलक्षणायां तात्पर्यग्राहकत्वात् । अत एव न विशिष्टोद्देशे वाक्यभेदः । न चोत्पत्तिशिष्टसोमप्राबल्यम् । पशुकामप्रयोगपुरस्कारेण विहितस्य च खनित्रादेः सामान्यविहितसोमादिबाधकत्वात् । वस्तुतस्तु—प्रकृतसोमयागाश्रितः खनित्रादिगुण एव फलोद्देशेन विधीयत इति तृतीयः पक्षः । काम्यत्वादेव च नित्यसोमबाध इति प्राप्ते—

नायं गुणविधिः गौरवात् । तथा हि—सर्वत्रैव तावत् शुद्धधात्वर्थकरणकभावनाविधानात् आद्यो विधिप्रकारः । य-

था—'अग्निहोत्रं जुहोति'[1] इति । अन्योद्देशेन तद्विधिरपरः । यथा 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इति । एतस्य चोद्देश्यवाचकपदान्तरसापेक्षत्वाद्दौर्बल्यम् । धात्वर्थोद्देशेन अन्यकरणकभावनाविधिस्तृतीयः । यथा—'दध्ना जुहोति' इति । अत्र विधेयताया धात्वर्थवृत्तित्वाभावात् पदार्थान्तरवृत्तित्वाच्च ततोपि दौर्बल्यम् । धातोस्साधुत्वार्थकत्वमङ्गीकृत्य अन्योद्देशेन अन्यकरणकभावनाविधिश्चतुर्थः । यथा —'दध्नेन्द्रियकामस्य जुहुयात्'[2] इति । अत्र धात्वर्थस्योद्देश्यत्वेनाप्यसम्बन्धात् ततोपि दौर्बल्यम् । गुणविशिष्टधात्वर्थकरणकभावनाविधानं पञ्चमः । यथा 'सोमेन यजेत' इति। अत्र विशेषणविधिकल्पनाधिक्यात् ततोपि दौर्बल्यम् । अन्योद्देशेन पूर्वोक्तष्षष्ठः । यथा 'सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः'[3] इति । अयं तु सर्वदुर्बलः । तदेवमुद्भिद्गुणाविशिष्टस्य यागस्य फलोद्देशेन विधाने षष्ठविधिप्रकाराश्रयणात् अतिगौरवम् । गुणस्य यागेऽनन्वयात् मत्वर्थलक्षणा च । न हि भावनायां समानपदोपात्तधात्वर्थकरणत्वावरुद्धायां गुणस्य करणत्वं सम्भवति । अतस्तस्य यागान्वयावश्यकत्वेन यागस्य कारकत्वात् कारकाणां च परस्परसम्बन्धानुपपत्तेः 'सोमेन यजेत' इतिवत् उद्भिद्वता यागेनेति मत्वर्थलक्षणा आवश्यकीति प्राञ्चः । वस्तुतस्तु—दृष्टान्तेऽपि सोमस्य करणत्वेनैव भावनायामन्वयस्तत्रतत्र वक्ष्यते । युक्तश्च । एककरणत्वावरुद्धेऽपि करणत्वान्तरस्य भिन्ननिरूपितस्य प्रकारतया भावनान्वयोपपत्तेः । न हि यागकरणत्वं भावनानिरूपितं अपि तु स्वर्गनिरूपितम् । अतश्च यथैवान्यनिरूपितमपि तत्करणत्वं प्रकारतया भावनायामन्वेति तथैव सोमकरणत्वमपि यागनिरूपितम् । उभयत्र तत्तन्निरूपकस्य पार्ष्ठिकबोधलभ्यत्वाच्च न कोऽपि विरोध इति । नास्मिन् पक्षे यद्यपि

[1] तै. सं. १-५-९. [2] तै. ब्रा. २-१-५. [3] तै. सं. २-३-२.

मत्त्वर्थलक्षणा ; तथाऽपि विशेषणविधिकल्पनादिकृतं गुणयागोभयविशिष्टभावनाविधेर्गौरवमापाद्यमानं नापह्नोतुं शक्यम् । यथा च प्राथमिकभावनासम्बन्धाङ्गीकारेऽपि द्वितीयबोधवेळायां मत्त्वर्थलक्षणा तथोक्तं कौस्तुभे । एवं द्वितीयतृतीयपूर्वपक्षयोरपि जघन्यविधिप्रकाराङ्गीकरणं दोषाय । अगत्या च दधिसोमादावेव तदङ्गीकृतम् । तेषां तत्र अर्थान्तरे रूढत्वेन नामत्वासम्भवात् । प्रकृते तु येनैव योगेन खनित्रे प्रवृत्तिः तेनैव योगेन उद्भिद्यते उत्पाद्यते फलमिति व्युत्पत्त्या कर्मण्यपीति नामत्वसम्भवेन द्वितीयविधिप्रकाराङ्गीकरणाल्लाघवम् । न च भिदो विदारण एव स्मृतेश्शक्तिः । भिदि इत्येव धातुपाठात् । विदारण इत्यस्य शक्यार्थमात्रोपलक्षणत्वस्य वैयाकरणसिद्धान्तसिद्धत्वात् । अतो विदारण इवोत्पादनेऽपि प्रयोगात्तुल्यवद्वृत्तिकता । न च नामधेयानर्थक्यम् । सङ्कल्पादौ सार्थकत्वात् । क्वचित्फलोपबन्धश्च यथा 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति। क्वचिद्गुणोपबन्धश्च यथा 'संस्थाप्य पौर्णमासीं वैमृधमनु निर्वपति' इति। प्रकृते च संज्ञया भेदासिद्धिरेव प्रयोजनम् । इतरथा हि प्रकृत एवकर्मणि गुणफलोपबन्धापत्तेर्न कर्मान्तरत्वम्, न च योगस्य फलोद्भेदनकारित्वस्यातिप्रसक्तत्वात् अपूर्वे कर्मणि रूढिकल्पने सोमादिपदानामपि तदापत्तिः । सर्वत्र योगरूढिस्थले प्राचीनप्रयोगस्यैव कारणतायाः क्लृप्तत्वेन प्रकृते तदकल्पनात् ॥

प्रयोजनं स्पष्टम् ॥ २ ॥

## (३)—यस्मिन् गुणोपदेशः प्रधानतोऽभिसंबन्धः ॥ ३ ॥

**यस्मिन्** 'चित्रया यजेत पशुकामः'[1] इत्यादि वाक्यगे चित्रादिपदे गुणविधित्वनामधेयत्वकोटिकसंदेहविषये सति **गुणोपदेशः** तद्वाक्ये गुणान्तरस्याप्युपदेशश्श्रूयते तस्य चित्रादिपदस्य. **प्रधानतः** क्रियया सह नामधेयतया **अभिसम्बंधः** अन्वयः । अन्यथा वाक्यभेदप्रसङ्गात् ॥ ३ ॥

**अत्र गुण एव रूढानां 'चित्रया यजेत पशुकामः'[1] 'पञ्चदशान्याज्यानि' 'सप्तदशानि पृष्ठानि' 'त्रिवृद्बहिष्पवमानं' इत्यादौ चित्राज्यपृष्ठत्रिवृद्बहिष्पवमानशब्दानां गुणविधित्वं कर्मनामधेयत्वं वेति चिन्तायां दध्यादिवत् रूढेषु कर्मनामधेयत्वासम्भवात् गुणविधित्वमेवैषाम् । तत्र चित्रापदे तावत् प्रातिपदिकेन चित्रत्वं स्त्रीप्रत्ययेन च स्त्रीत्वं विधीयते । विधेययोः परस्परसाहित्यावगतेः विधेयसामर्थ्यानुरोधेन प्राणिद्रव्यकयागस्यैवोद्देश्यत्वावगतेः । प्रकृतानां 'दधि मधु घृतमापो धानास्तण्डुलास्तत्संसृष्टं प्राजापत्यं' इत्येतद्वाक्यविहितानां यागानामुद्देश्यत्वासम्भवेऽपि सर्वप्रकृतिभूताग्नीषोमीययागोद्देशेन सर्वपशुयागोद्देशेन वा विधीयते । न चानेकगुणविधाने वाक्यभेदः । 'धेनुर्दक्षिणा'[2] इतिवत् उभयविशिष्टैककारकविधानेनावाक्यभेदात् । एवमाज्यपदेन घृतं,पृष्ठपदेन शरीरावयवः । स च सङ्ख्याविशिष्टः प्रकरणात् 'आज्यैस्स्तुवते पृष्ठैस्स्तुवते' इत्येतद्वाक्यविहितस्तोत्राङ्गतया यथाक्रमं विधीयते । एवं त्रिवृच्छब्दवाच्यं त्रिभिण्डिद्रव्यं पवनक्रियाविशिष्टं तथैव तद्वाक्येन विधीयते । सर्वत्र द्रव्याणां स्तोत्रसमीपदेशेऽदृष्टार्थं स्थापनेनैव स्तोत्रोपकारकता । उत्पत्तिवाक्येषु तु आज्यादिपदं गुणवाक्यप्राप्तत्वादनुवादः । स्तोत्रमात्रं तु विधीयत इति प्राप्ते—**

[1]तै. सं. २-४-६. [2]तै. सं. १-८-७.

प्राप्तकर्मानुवादेन चित्रत्वस्त्रीत्वरूपानेकगुणविधाने वाक्यभेदात् करणत्वस्यापि पशुगतस्य प्राप्तत्वेन अविधेयतया उभयविशिष्टैककारकविध्ययोगात् । अतश्च 'अजोऽग्नीषोमीयः' इति प्राकरणिकवचनेन विहितप्राकरणिकपुंस्त्वावरोधे स्त्रीत्वस्य विध्ययोगाच्च न गुणविधिः । अतः प्रकृतानामेव यागानां विचित्रद्रव्यकत्वेन लक्षणात् चित्रापदं नामधेयम् । इष्ट्यभिप्रायेण च स्त्रीप्रत्ययः । एवमाज्यादिपदेष्वपि । असमस्तत्वेन विशिष्टस्याव्युत्पन्नत्वात् प्राप्तस्तोत्रानुवादेन द्रव्यसङ्ख्याद्यनेकगुणविधौ वाक्यभेदः । न चोत्पत्तिवाक्य एव द्रव्यविशिष्टस्तोत्रविधिः अत्र तु सङ्ख्यामात्रविधिरस्त्विति वाच्यम् । घृतादीनां स्तोत्रे करणत्वासम्भवेन विशिष्टविध्ययोगात् पञ्चदशानीत्यादिस्तुतिगतसङ्ख्यारूपस्तोत्रवाचिडप्रत्ययस्य गुणविधित्वे अनुपपत्तेश्च। अत आज्यादिपदं वाक्यद्वयेऽपि शक्त्यैव स्तोत्रनामधेयम् । आज्यादिपदाभिधेयस्तोत्रानुवादेन गुणवाक्ये सर्वत्र सङ्ख्यामात्रविधिः । आज्योत्पत्तिवाक्ये च तत्संज्ञकानि चत्वारि स्तोत्राणि गमकसहकृतबहुवचनेन तावत्त्वावगमात् । एवं पृष्ठोत्पत्तिवाक्येऽपि षट् । अनुष्ठेयानि तु नियतानि चत्वारि । आद्ययोर्द्वयोर्बृहद्रथन्तरयोरन्त्ययोः नौधसश्यैतयोर्वचनेन विकल्पविधानात् । यथा चात्र तत्तद्दूषणानां निरासो मतान्तरदूषणानि च तानि कौस्तुभे द्रष्टव्यानि ॥ ३ ॥

## (४)—तत्प्रख्यं चान्यशास्त्रम् ॥ ४ ॥

तत्प्रख्यं तस्य विधित्सितगुणस्य अग्न्यादिरूपस्य प्रख्या प्राप्तिः यस्मात्तादृशं अन्यशास्त्रं शास्त्रान्तरं 'अग्निर्ज्योतिः'[1] इत्यादिकं 'अ-

[1] तै. ब्रा. ३-८-१८.

ग्निहोत्रं जुहोति'[1] इत्यादौ यत्र वर्तते तत्रापि विधित्सितगुणप्रतिपादकत्वेनाभिमतं अग्निहोत्रादिपदं नामधेयम् । उक्तंच वार्तिके—विधित्सितगुणप्रापि शास्त्रमन्यद्यतस्त्विह । तस्मात्तत्प्रापणं व्यर्थमिति नामत्वमिष्यताम् ॥ इति ॥

इह रूढानां यौगिकानां वा सम्भवत्प्राप्तिकानां 'अग्निहोत्रं जुहोति'[1] 'आघारमाघारयति'[2] 'समिधो यजति'[3] इत्यादौ अग्निहोत्रादिपदानां गुणविधित्वं कर्मनामधेयत्वं वेति चिन्तायां—प्रसिद्धेर्गुणविधित्वमेव युक्तम् । न च वाक्यभेदः । विधेयानेकत्वाभावात् । अग्निहोत्रपदे अग्नये होत्रमस्मिन्निति व्युत्पत्त्या उपसर्जनार्थोऽग्निर्देवता विधीयते । न च 'यदग्नये च प्रजापतये च सायं जुहोति' इत्यनेन तस्याः प्राप्तत्वादविधानम् । तत्र अनेकगुणोपादानेन विशिष्टकर्मान्तरविधेरावश्यकत्वात् एतद्वाक्यविहितकर्मणि तत्प्राप्तेरभावात् । अतो यत्र दर्वीहोमादौ आग्नेयो मन्त्रः पठितः तादृशदर्वीहोमानुवादेन देवतामात्रमनेन विधीयते । न च तेन तत्प्राप्तिसम्भवः । मान्त्रवर्णिकविधेरकल्पनीयत्वात् । विशिष्टकर्मान्तरं वा । आघारपदेऽपि द्वितीयान्ताघारपदेन क्षरणसाधनाज्यादिद्रवद्रव्यमभिधीयते । धातुना क्षरणाख्यसंस्कारः तदुद्देशेन विधीयते अविनियुक्तस्य संस्कारायोगात् । प्रकरणकल्पितवाक्येन उपांशुयागाङ्गतया द्रवद्रव्यं विधीयते । 'चतुर्गृहीतं वा एतदभूत् । तस्याघारमाघार्य' इत्यनेन प्रयाजाङ्गभूतचतुर्गृहीतविशेषसमर्पणम् । सर्वथा आघारपदं द्रव्यपरं न नामधेयमिति प्राप्ते—

मन्त्रवर्णकल्प्यविधिनैव प्राप्तिसम्भवेऽस्य पूर्वप्रवृत्तविधिवैफ-

[1] तै. सं. १-५-९. [2] तै. ब्रा. १-१-७. [3] तै. सं. २-६-१.

ल्यापत्तेः अभ्युदयशिरस्कत्वस्य च सम्भवति प्रथमविध्यापादकधात्वर्थविधौ अन्याय्यत्वात् न तावद्दर्वीहोमानुवादेन देवताविधिः । नापि विशिष्टकर्मान्तरविधिः । 'अग्निर्ज्योतिर्ज्योतिरग्निस्स्वाहा'* इति वचनेन विनियुक्तमन्त्रवर्णेनैव देवताप्राप्तेः । 'यदग्नये च प्रजापतये च सायं जुहोति । यत्सूर्याय प्रजापतये च प्रातः' इत्यत्र सायंप्रातःकालीनदेवतासमुच्चयविशिष्टप्रजापतिमात्रविधानम् । अत एव यथैव केवलदेवत्यमन्त्रलिङ्गेन केवलयोर्देवतात्वं तथा 'अग्निर्ज्योतिर्ज्योतिस्सूर्यस्स्वाहेति सायं जुहोति । सूर्यो ज्योतिर्ज्योतिरग्निस्स्वाहेतिप्रातः'† इति मिश्रलिङ्गकमन्त्रवर्णात् मिश्राणामपि तत् । ततश्च 'यदग्नये च' इति वाक्यस्थाग्निसूर्यपदं सायंप्रातःकालीनदेवतालक्षकम् । सायंप्रातःकालपदं तात्पर्यग्राहकम् । चशब्दोपस्थितसमुच्चयस्य प्रजापतावन्वयस्य निपातोपसर्गार्थत्वेन व्युत्पन्नत्वात् न विधेयानेकता । अतश्चाग्नेर्देवतात्वादिना अग्निहोत्रहोमे प्राप्तत्वात् अग्निहोत्रहोमे अग्नेर्होम इति व्युत्पत्त्या नामधेयम् । एवमाघारेऽप्युपांशुयाजे 'सर्वस्मै वा एतद्यज्ञाय गृह्यते । यद्ध्रुवायामाज्यम्।'‡ इत्यनेनैव द्रवद्रव्यस्य प्राप्तत्वात् प्रयाजाज्योद्देशेन संस्कारविधाने द्वितीयविधिप्रकारापत्तेः लाघवाद्भावव्युत्पन्नमाघारपदं नामधेयं विधेयश्च धातुलक्ष्यो होम एव । 'इन्द्र ऊर्ध्वोऽध्वर इत्याघारमाघारयति' इति मान्त्रवर्णिकेन्द्रदेवतायाः 'चतुर्गृहीतं वा' इत्यनेन द्रव्यस्य च लाभात् । एवं समिदादिष्वपि वक्ष्यते । सर्वत्र द्वितीया करणत्वलक्षणार्थेति न विरोधः ॥ ४ ॥

## (५)–तद्व्यपदेशं च ॥ ५ ॥

---

*तै. ब्रा. २-१-९. †तै. ब्रा. २-१-२. ‡तै. ब्रा. ३-३-५.

तस्य विधित्सितगुणस्य श्येनादेः व्यपदेशः उपमानोपमेयभावनिर्देशः 'यथा वै श्येनः' इत्यादिः यत्र वाक्ये तादृशं **तद्व्यपदेशं** वाक्यं यत्र दृश्यते तत्रापि 'श्येनेनाभिचरन्यजेत' इत्यादौ विधित्सितगुणवाचित्वे-नाभिमतं श्येनादिपदं नामधेयम् ॥ ५ ॥

'श्येनेनाभिचरन् यजेत' इत्यादौ पूर्वोक्तबाधकाभावात् प्रसिद्धेः श्येनादिपदानां गुणविधित्वमेव । प्रकृतसोमयागाश्रितो गुणः फलोद्देशेन विधीयते विशिष्टकर्मान्तरं वा । न चैवं 'यथा वै श्येनो निपत्यादत्ते एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्ते' इत्यर्थवादे स्वस्यैव स्वोपमानत्वानुपपत्तिः । उपक्रमनिर्णीतविध्यनुरोधेन उपसंहारस्थार्थवादस्य अन्यथा नेयत्वात् । 'ते तद्विलासा इव तद्विलासाः' इत्यादिवदनन्वयालङ्कारस्याभेदे अनुगुणत्वात् इति प्राप्ते—

नायमनन्वयालङ्कारः । तथात्वे सर्वेषामर्थवादपदानां उपमानान्तराभावलक्षकत्वापत्तेः । तद्वरं भूयोऽनुग्रहस्यैव न्याय्यत्वात् उपक्रमस्थ एवैकस्मिन् पदे रूपकविधया लुप्तोपमानविधया वा गौणीं वृत्तिमङ्गीकृत्य नामधेयत्वं द्वितीयविधिप्रकारापादकं युक्तमाश्रयितुम् । अर्थवादस्तु रूपकाद्यपेक्षितसादृश्योपपादनार्थस्सन् विनैव लक्षणां पूर्णोपमानविधया विधेययागस्तुत्यर्थो न विरुध्यते । तत्सिद्धं चतुर्भिरेव प्रकारैः सर्वत्र नामत्वमिति ॥ ५ ॥

## (६)—नामधेये गुणश्रुतेस्स्याद्विधानमिति चेत् ॥ तुल्यत्वात्क्रिययोर्न ॥७॥ ऐकशब्द्ये परार्थवत् ॥८॥

'वाजपेयेन स्वाराज्यकामो यजेत' इत्यादौ **नामधेये** नामत्वेनाभिमते वाजपेयादिपदे **गुणश्रुतेः** गुणस्य यवाग्वादिरूपस्य वाजं अन्नं पेयं

यस्मिन्न्यवासद्रव्ये इति व्युत्पत्त्या प्रतीतेः तादृशगुणस्यैव **विधानं स्यात्** यागरूपक्रियायां गुणफलयोरुभयोरप्यन्वयसंभवेन मत्त्वर्थलक्षणादेरनावश्यकत्वात् **इति चेत् न** इदं युक्तं **क्रिययोः** इष्टिवाजपेययोः **तुल्यत्वात्** अन्नद्रव्यकृतयां तौल्यप्रसङ्गात् । न चेष्टापत्तिः । तथा सति द्रव्यघटितसादृश्यस्य बलवत्त्वादैष्टिकविध्यन्तप्राप्तौ 'सप्तदशदीक्षो वाजपेयः सप्तदशोपसत्को वाजपेयः' इति सौमिकविध्यन्तानुवादलिङ्गदर्शनानुपपत्तेः ॥ ६–७ ॥किंच—**ऐकशब्द्ये** एकस्मिन्नेवाख्यातरूपे शब्दे गुणफलोभयान्वितार्थपरे स्वीक्रियमाणे तदाख्यातं फलोद्देशेन यागविधौ विधेयतया स्वार्थवत् स्वार्थविधानपरमिव **परार्थवत्** यागोद्देशेन गुणविधौ विधेयतया उपपदार्थवत् उपपदार्थविधानपरमपि स्यात् । तथाच वाक्यभेदः । विरुद्धत्रिकद्वयसमावेशापत्तिश्च । तस्माद्वाजपेयादयश्शब्दाः प्रागुपदर्शितनीतिचतुष्टयेन नामधेयान्येव ॥ ८ ॥

**पूर्वं यत्रयत्र विशिष्टविधिपूर्वपक्षे यानियानि दूषणानि मत्त्वर्थलक्षणादीनि तानितानीहाक्षिप्यन्ते । यदीह यागस्य कारकत्वं स्यात् तदा सोमादीनां कारकान्तराणां तदन्वयानुपपत्तेः मत्त्वर्थलक्षणा भवेत्; उभयविशिष्टभावनाविधानं वा । न ह्येतदभ्युपगमे प्रमाणमस्ति । यागस्य क्रियारूपत्वाङ्गीकारात् । अतश्च तस्मिन् सर्वकारकाणां भावनावदेव विनैव मत्त्वर्थलक्षणां विनैव च वैरूप्यं सम्बन्धोपपत्तिः । यागस्य च क्रियारूपत्वेऽपि सम्बन्धसामान्येन भावनान्वयो न विरुद्धः । भावना च वैयाकरणवदतिरिक्ता नैवाङ्गीक्रियते । अतश्च उद्भिदादिष्वपि सर्वत्र गुणविधित्वमेव युक्तम् । वाजपेयोदाहरणं तु मूले गुणसूत्रानुरोधेनेति प्राप्ते—**

**पचतीत्यस्य पाकं करोतीति विवरणात् धात्वर्थस्य कर्म-**

स्वकरणत्वान्यतरकारकत्वेनैव भावनान्वयः । भावना च यथाऽतिरिक्ता तथा वक्ष्यते । अतश्चेतरकारकाणां धात्वर्थान्वयानुपपत्तेः अगत्योभयविशिष्टभावनाविधानं सोमादावङ्गीकृतम् । प्राचीनरीत्या वा मत्वर्थलक्षणा । अन्यथा श्रुत्यैव फलगुणयोः यागान्वये फलान्वयार्थं यागस्य उपादेयत्वविधेयत्वगुणत्वानि गुणान्वये चोद्देश्यत्वानुवाद्यत्वप्रधानत्वानीति विरुद्धत्रिकद्वयापत्तेः । उपादेयत्वादिनिरुक्त्यादिकं च कौस्तुभे द्रष्टव्यम् । अतो मत्वर्थलक्षणाभिया विशिष्टविध्यनुपपत्तेः नामधेयत्वमेवोद्भिदादीनाम् ॥ ६॥

## (७)—तद्गुणास्तु विधीयेरन्नविभागाद्विधानार्थे न-चेदन्येन शिष्टाः ॥ ९ ॥

'यदाग्नेयोष्टाकपालोमावास्यायां च पौर्णमास्यां चाच्युतो भवति '* इत्यादौ आग्नेयादिपदं न नामधेयं अपि तु **तद्गुणास्तु** स च गुणाश्च तद्गुणाः प्रधानभूतो यागः अग्न्यादिरूपा गुणाश्च **विधीयेरन्** विधेयतया प्रतिपाद्येरन् । **विधानार्थे** विधेये तत्तद्गुणविशिष्टतत्तत्प्रधानरूपे **अविभागात्** भेदविरहात् विशिष्टस्यैकतया विधेयभेदप्रयुक्तवाक्यभेदाप्रसरात् । ते तद्गुणाः **चेत् अन्येन** वाक्यान्तरेणा **न शिष्टा**. विहिताः । विशिष्टघटकस्य विशेष्यस्य विशेषणस्य वा यत्रान्यतः प्राप्तिर्न तत्र विशिष्टविधानं संभवतीति भावः ॥ ९ ॥

**'यदाग्नेयोष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति '* इत्यादौ आग्नेयशब्दो गुणविधिः कर्मनामधेयं वेति चिन्तायां - अग्नेर्मन्त्रवर्णाल्लाभात् आग्नेयपदं नामधेयमिति प्राप्ते—**

---

*तै. सं. २.६-३.

पुरोडाशकर्मिकायाः भावनाया मन्त्रापेक्षाऽभावात् मन्त्रस्य च तत्रायोग्यत्वात् नोपांशुयाज इव मन्त्रस्य देवताकल्पकत्वम्। न चाघारवद्वाचनिको विनियोगो मन्त्रस्य। येन तत्कल्पकत्वं सः म्भाव्येत। न च मन्त्रस्याष्टाकपालकर्मकभावनाङ्गत्वे प्रमाणमस्ति। प्रकरणस्य च उपांशुयाजादिषु अविशिष्टत्वात्। नापि क्रमः। ब्राह्मणपाठक्रमापेक्षया मन्त्रपाठक्रमवैपरीत्यस्य पञ्चमे वक्ष्यमाणत्वात्। अतः तत्प्रख्यन्यायाभावात् नामत्वानुपपत्तेः द्रव्यदेवतोभयविशिष्टभावनाविधिप्रतीतेः तस्य च यागमन्तरेणानुपपत्तेः भूधातुना तल्लक्षणात् सकलविशेषणविशिष्टयागभावनाविधानेनार्थात् विशेषणानामपि विधिकल्पनात् गुणविधिरेव आग्नेयशब्दः॥

प्रयोजनं 'आग्नेयं पयः' इत्यादौ नामातिदेशेन आग्नेयाविध्यन्तः पूर्वपक्षे। सिद्धान्ते सान्नाय्यविध्यन्तः॥ ७॥

## (८)–बर्हिराज्ययोरसंस्कारे शब्दलाभादतच्छब्दः॥ १०॥

**असंस्कारे** संस्कारविरहेऽपि बर्हिराज्ययोः लौकिकयोरपि **शब्दलाभात्** बर्हिराज्यशब्दप्रयोगस्य 'बर्हिरादाय गावो गताः' 'आज्यं क्रय्यं' इत्यादौ दर्शनात् बर्हिरादिशब्दः **अतच्छब्दः** संस्कारनिमित्तकशब्दभिन्नस्सन् जातिवाच्येव **स्यात्**॥ १०॥

बर्हिराज्यपुरोडाशादिशब्दानां संस्कृतेषु शास्त्रस्थैः प्रयुज्यमानत्वाद्यूपादिशब्दवत् संस्कारमात्रवाचित्वे संस्कारविशिष्टकुशादिवाचित्वे वा प्राप्ते—

जातिं विहाय कैरप्यप्रयुज्यमानत्वात् संस्कारं विनाऽपि लोके 'बर्हिरादाय गावो गताः' 'आज्यं क्रय्यं' 'पुरोडाशेन मे माता प्रहेळकं ददाति' इत्यादौ प्रयुज्यमानत्वात् अव्यभिचारा-ल्लाघवाच्च कुशादिजातिवाचित्वमेव।

प्रयोजनं यूपावटास्तरणार्थबर्हिरादौ पूर्वपक्षे संस्कारकरणं सिद्धान्ते नेति ॥ ८ ॥

## (९)—प्रोक्षणीष्वर्थसंयोगात् ॥ ११ ॥

**प्रोक्षणीषु** प्रोक्षणार्थास्वप्सु. **अर्थसंयोगात्** प्रोक्षणीशब्दार्थस्य प्रकृष्टोक्षणसाधनतारूपस्य समवायात् प्रोक्षणीशब्दो यौगिक एव न जातिवचनः न वा संस्कारवचनः ॥ ११ ॥

प्रोक्षणीशब्दस्यापि पूर्ववत्संस्कारवाचित्वे 'प्रोक्षणीभिरुद्वेजिताः स्मः' इति लोके संस्कारं विहाय जातिमात्रे प्रयोगदर्शनात् रूढ्या जलत्ववाचित्वे प्राप्ते—

क्लृप्तावयवयोगेनोपपत्तौ रूढिकल्पने प्रमाणाभावः। अत एवाश्वकर्णादिशब्दे योगबाध एव तत्कल्पनम्। न चापामौदासीन्यावस्थायां प्रकृष्टोक्षणसाधनत्वरूपयोगाभावः। फलोपधानासम्भवेऽपि उक्षणस्वरूपयोग्यत्वस्य सम्भवात्। न चैवं रथकारपदेऽपि रथकर्तृत्वयोग्यत्वरूपयोगसम्भवेन जातिविशेषशक्तिकल्पनानुपपत्तिः। अनुशासनबलेन तत्कल्पनात्। कर्तृत्वस्वरूपयोग्यत्वस्याव्यावर्तकत्वेन वर्षासु रथकार इत्यस्य वैयर्थ्यापत्तेश्च। प्रोक्षणीशब्दे तु रूढिकल्पने प्रमाणाभावात् यौगिकत्वमेव।

प्रयोजनं तु विकृतौ 'घृतं प्रोक्षणं' इत्यादौ 'प्रोक्षणीरासादय'* इत्यविकृतः प्रयोगः संस्कारवाचित्वपक्षे। घृतमा-

---

*तै. ब्रा. ३-२-९.

सादय इति जातिवाचित्वे । प्रोक्षणमा-सादयेति यौगिकत्वे द्रष्टव्यम् ॥ ९ ॥

## (१०)-तथा निर्मन्थ्ये ॥१२ ॥

**निर्मन्थ्ये** निर्मन्थनसाध्ये वह्नौ **तथा** मथनप्रयोज्यत्वरूपार्थसंयोगात् यौगिक एव निर्मन्थ्यशब्दः ॥ १२ ॥

'निर्मन्थ्येनेष्टकाः पचन्ति' इत्यत्र निर्मन्थ्यशब्दस्य पूर्ववत्संस्कारवाचित्वे 'निर्मन्थ्यमानय पक्ष्यामः' इति लौकिकप्रयोगेन निरस्ते मथनकर्मत्वस्य पाकसाधनीभूताग्नावभावेन मथनप्रयोज्यत्वस्य पाकनवनीतादावपि सत्त्वेन अतिप्रसङ्गात् अरणिप्रयोज्याग्नित्वव्याप्यजातिवाचित्वे प्राप्ते—

मथनप्रयोज्यत्वयोगेनैवोपपत्तौ रूढिकल्पने प्रमाणाभावात् अतिप्रसङ्गस्य पाकादावपि प्राचीनप्रयोगाभावेनैवाबोधकत्वोपपत्तेर्निराकर्तुं शक्यत्वात् नवनीते वाच्यत्वस्यापि वक्तुं शक्यत्वाच्च यौगिक एव निर्मन्थ्यशब्दः ।

एवं च 'निर्मन्थ्येनेष्टकाः पचन्ति' इत्यग्नेः पाकसामर्थ्यादेव प्राप्तत्वात् मथनमात्रविधिरिति तस्यापि प्रयोगमध्ये करणं सिद्धान्ते प्रयोजनम् ॥ १० ॥

## (११)-वैश्वदेवे विकल्प इति चेत् ॥ १३ ॥ न प्रकरणात् प्रत्यक्षविधानाच्च न हि प्रकरणं द्रव्यस्य ॥ १४ ॥ मिथश्चानर्थ संबन्धः ॥ १५ ॥ परार्थत्वाद्गुणानाम् ॥ १६ ॥

**वैश्वदेवे** 'आग्नेयमष्टाकपालं निर्वपति सौम्यं चरुं सावित्रं द्वादश-

कपाल सारस्वतं चरुं पौष्णं चरुं मारुतं सप्तकपालं वैश्वदेवीमामिक्षां द्यावापृथिव्यमेककपालं '* इति विहितानामष्टानां यागानां सन्निधावाम्नाते 'वैश्वदेवेन यजेत' इत्येतद्वाक्ये विद्यमाने वैश्वदेवपदे अष्टसु यागेषु विश्वदेवदेवतारूपगुणविधिपरतया **विकल्पः** तत्तद्वाक्यगताग्निरग्न्यादिदेवताभिस्सह विश्वदेवदेवताया विकल्प **इति चेत् न** इदं युक्तं स्वस्ववाक्योपात्तदेवतान्तरावरुद्धेषु **प्रकरणात्** देवतान्तरविधानानुपपत्तेः । आमिक्षायागे विश्वदेवदेवतायाः **प्रत्यक्षविधानात्** प्राप्तत्वेन विधानानुपपत्तेः **च** । न च सर्वनाम्नः स्ववाक्योपात्तद्रव्याभावे प्रकृतानां द्रव्याणां ग्रहणस्य अवश्यकत्वादुत्पत्तिशिष्टदेवतावरोधेऽपि न क्षतिरिति वाच्यं यतो **हि** सर्वनाम्नः स्ववाक्योपात्तयागग्रहणसंभवे प्रकृतद्रव्यग्रहणे **न प्रकरणं** नियामकमिति । अतो वैश्वदेवपदमत्राष्टानां यागानां नामधेयम् ॥ १३—१४ ॥

यदि ह्ययं आग्नेयादियागेषु देवताविधिस्स्यात् तदा पक्षे आग्नेयादियागानां **मिथः** परस्परं संप्रतिपन्नदेवताकत्वेन सहानुष्ठानापत्तेः **असम्बन्धः** 'नव प्रयाजाः नवानूयाजा द्वावाघारौ द्वावाज्यभागौ अष्टौ हवींषि एभिस्त्रिंशत्संख्यम्' इति त्रिंशत्संख्यासंपत्तिरूपार्थसंबन्धानुपपत्तिः ॥ १५ ॥ ननु संप्रतिपन्नदेवताकत्वेऽपि द्रव्यभेदादेव प्रधानाहुतिभेदः इति चेन्न **गुणानां** द्रव्यादीनां **परार्थत्वात्** प्रधानार्थत्वात् प्रधानावृत्त्यापादकत्वानुपपत्तेः । देवताभेद एव हि सर्वोद्देशेन युगपत्त्यक्तुमशक्यत्वात्तद्भेदो न तु सान्नाय्यवद्द्रव्यभेदेऽपीति ॥ १६ ॥

**चातुर्मास्येषु वैश्वदेवे प्रथमे पर्वणि आग्नेयादीनष्टौ यागान्विधाय 'वैश्वदेवेन यजेत' इति श्रुतम् । तत्र वैश्वदेवशब्दः गुणविधिः कर्मनामधेयं वेति चिन्तायां नामधेयत्वे समस्तवाक्यस्य वैयर्थ्यप्रसङ्गात् अगत्या आग्नेयादिषु सप्तसु देवतावि-**

---

*तै. सं. १-८-२.

धिः। आमिक्षायागे विश्वदेवदेवतायाः प्राप्तत्वात् देवताविशिष्ट यागान्तरविधानं वा, गुणात्। एतस्मिन्नेव वा कर्मणि आमिक्षावाक्येन द्रव्यमात्रविधानम्। एवं च 'अष्टौ हवींषि'* इति लिङ्गदर्शनस्याप्युपपत्तिरिति प्राप्ते—

नाग्नेयादिषु गुणविधिः उत्पत्तिशिष्टदेवतावरोधात्। नापि यागान्तरविधिः भेदबोधकप्रमाणानां नामत्वेनोपपत्तौ विधिगौरवापादकभेदबोधकत्वानुपपत्तेः। अत एव नामिक्षावाक्येपि द्रव्यमात्रविधानं 'आग्नेयमष्टाकपालं निर्वपेत्' इत्याग्नेयादिवाक्यस्थस्य निर्वपेदित्यस्य विशिष्टविधायकस्य आमिक्षावाक्येऽनुषक्तस्य द्रव्यमात्रविधायकत्वे वैरूप्यापत्तेश्च। अत आग्नेयादीनामष्टानामपि यागानां नामधेयं वैश्वदेवशब्दः उत्पत्तिशिष्टदेवतावरोधसहकृततत्प्रख्यन्यायात्। प्रवृत्तिनिमित्तं च विश्वदेवदेवताजन्यामिक्षायागघटितसमुदायाश्रयत्वम्। वाक्यं च समुदायसिद्ध्यर्थं समुदायिनामनुवादकम्। तत्प्रयोजनं च अष्टानामपि यागानां 'वसन्ते वैश्वदेवेन यजेत' इति वसन्तादिसम्बन्धद्वारा चातुर्मास्यसंज्ञकत्वलाभेन फलसम्बन्धसिद्धिः। इतरथा आमिक्षायागस्यैव विश्वदेवदेवताकत्वात् वसन्तादिसंबन्धद्वारा चातुर्मास्यसंज्ञकत्वलाभेन फलसम्बन्धापत्तेः इतरेषामङ्गत्वापत्तिरिति कौस्तुभे स्पष्टम् ॥११॥

**(१२)—पूर्ववन्तोऽविधानार्थास्तत्सामर्थ्यं समाम्नाये ॥१७॥ गुणस्य तु विधानार्थेऽतद्गुणाः प्रयोगे स्युरनर्थका न हि तं प्रत्यर्थवत्ताऽस्ति ॥ १८ ॥ तच्छेषो नोपपद्यत इति चेत् ॥१९॥ अविभागाद्वि-**

*तै. ब्रा. १-६-३.

**धानार्थे स्तुत्यर्थे नोपपद्येरन् ॥२०॥ कारणं स्यादिति चेत् ॥२१॥ आनर्थक्यादकारणं कर्तुर्हि कारणानि गुणार्थे विधीयन्ते ॥२२॥**

ये **पूर्ववन्तः** प्रमाणान्तरेण संभवत्प्राप्तिकास्ते **अविधानार्थाः** विधानानर्हाः भवन्तु । यथा—'वैश्वदेवेन यजेत' * इत्यादौ वैश्वदेवपदाद्युपात्ता विश्वेदेवादयः । 'वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते यदष्टाकपालो भवति गायत्रियैवैनं ब्रह्मवर्चसेन पुनाति'† इत्यादौ **समाम्नाये तु तत्सामर्थ्यं** अष्टाकपालत्वादीनां विधानसामर्थ्यं अस्त्येवेति गुणविधय एव अष्टाकपालादिशब्दाः ॥ १७ ॥ सिद्धान्तयति—तुशब्देन पूर्वपक्षव्यावृत्तिः । **गुणस्य विधानार्थे** गुणविधानपरे अष्टाकपालादिपदे स्वीक्रियमाणे सति **अतद्गुणाः** तस्मिन् 'वैश्वानरं द्वादशकपालं निर्वपेत्'† इति वाक्यविहिते यागे उत्पत्तिशिष्टगुणावरुद्धतया गुणत्वेनान्वेतुमनर्हास्सन्तः अष्टाकपालादिपदार्थाः **प्रयोगे** अनुष्ठाने **अनर्थकाः** अनुपयुक्ता एव **स्युः** । अष्टाकपालादिद्रव्यकयागान्तरविधित्वीकारे च **न हि तं प्रति** उपक्रमोपसंहाराभावे एकस्मिन्नर्थे **अर्थवत्ता** तात्पर्यं **अस्ति** । तस्मात् अष्टाकपालादिवाक्यं अर्थवादविधया विधिशेष एवेति भावः ॥ १८ ॥ आशङ्क्य समाधत्ते—अष्टाकपालादिवाक्यं **तच्छेषः** अर्थवादतया विधिशेषः **नोपपद्यते** अष्टत्वादेरष्टाकपालादेर्वा अविधेयतया तत्स्तुतिपरताया असंभवात् द्वादशकपालकर्मणश्च अष्टाकपालादिपदेनाभिधानासंभवेन तत्स्तुतिपरताया अप्यसंभवात् **इति चेत्** न यतः विधानार्थे विधेये द्वादशकपाले अष्टाकपालादीनां **अविभागात्** अन्तःपातित्वात् अवयुत्यानुवादविधया द्वादशकपालाभि-

*तै. ब्रा. १-४-१०. †तै. सं. २-२-५.

धायकास्सन्तः अष्टाकपालादिशब्दाः **स्तुत्यर्थेन** द्वादशकपालकर्मरूपविधेयस्तुत्यर्थपरत्वेन **उपपद्येरन्** ॥ १९—२० ॥ प्रकारान्तरेणाशङ्क्य समाधत्ते—अष्टाकपालादिकं वैश्वानरयागाश्रितं ब्रह्मवर्चसादिफले **कारणं स्यात्** 'यदष्टाकपालः'* इत्यादेः गुणफलसंबन्धविधित्वसंभवात् **इति चेत्** न यतः अष्टाकपालादिः पुत्रगतब्रह्मवर्चसादिफले **अकारणं** कारणत्वेन विधानानर्हः **आनर्थक्यात्** निष्फलत्वप्रसङ्गात् । कथं? **हि** यतः **कर्तुः गुणार्थे** अनुष्ठातृसंबन्धिनि गुणजन्यफले पश्वादिरूपे **कारणानि** गोदोहनादीनि 'गोदोहनेन पशुकामस्य' इत्यादिना **विधीयन्ते** । गुणानां कर्तृसमवेतफलजनकताया एवान्यत्र दृष्टत्वात् तादृशफलाभावेन अष्टाकपालादिवाक्यस्य गुणफलसंबन्धविधित्वं न घटत इति भावः ॥ २१—२२ ॥

**'वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते'* इत्यनेन यागं विधाय 'यदष्टाकपालो भवति गायत्रियैवैनं ब्रह्मवर्चसेन पुनाति'* इत्यादिनाऽष्टाकपालनवकपालदशकपालैकादशकपालद्वादशकपालाननूद्य 'यस्मिन् जात एतामिष्टिं निर्वपति पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति'* इति श्रुतम् । तत्र द्वादशत्वे अष्टत्वादेः प्राप्तत्वादष्टाकपालशब्दः वैश्वानरयागनामधेयमित्येकः पक्षः । स्वरूपेण प्राप्तावपि परिच्छेदकत्वेन प्राप्त्यभावात् गुणविधय एव एते । अष्टत्वमष्टाकपालं द्रव्यं वा पूर्वयागे विधीयते । उपक्रमोपसंहारैक्येन चैकवाक्यत्वप्रतीतेः न द्वादशकपालस्योत्पत्तिशिष्टता । अथवा—अस्तु वाक्यनानात्वम् । तथाऽपि 'यद्द्वादशकपालो भवति'* इत्यनेनैव तद्विधिः । वैश्वानरवाक्ये तत्पदमनुवाद एवेति द्वितीयः पक्षः । ब्रह्मवर्चसादिरूपफलो-**

---

*तै. सं. २-२-५.

द्देशेन प्रकृतयागाश्रिता गुणा एव अष्टाकपालादयो विधीयन्त इति तृतीयः—

सिद्धान्ते तु—सम्भवत्येकवाक्यत्वे तद्भेदस्यान्याय्यत्वात् प्रकृतयागस्यैवेयं सर्वा स्तुतिः । यदङ्गभूतद्वादशकपालावयवोऽष्टाकपालादिरप्येकैकफलसाधनं तत्र सर्वावयवोपेतद्वादशकपालस्य सर्वफलप्रयोजकत्वे कस्सन्देह इति यागस्तुतिः । अष्टाकपालपदं चाग्नेयाष्टाकपाले शक्तं गौण्या वृत्त्याऽष्टत्वाश्रयकपालाश्रयित्वसादृश्येन द्वादशकपालावयवे गौणम् । तेन च अवयवद्वारा अवयवी द्वादशकपालो लक्ष्यते । तेन लक्षणया यागस्तुतिरिति । इदं चाधिकरणं औदुम्बराधिकरणन्यायेन पुनरुक्तमपि शिष्यशिक्षार्थमुक्तमिति ध्येयम् ॥ १२ ॥

## (१३–१८)–तत्सिद्धिजातिसारूप्यप्रशंसाभूमलिङ्गसमवाया इति गुणाश्रयः* ॥ २३ ॥

तस्य मुख्यार्थस्य संबन्धिनः सिद्धिः जातिः सारूप्यं प्रशंसा भूमा लिङ्गसमवायः इति एते **गुणाश्रयः** गौणवृत्तिनिमित्तभूताः । **सिद्धिः** कार्ये एककार्यकारित्वम् । **जातिः** जन्म एकप्रभवत्वम् । **सारूप्यं** चक्षुर्ग्राह्यगुणवत्त्वं; प्रकारीभवत् सादृश्य मेव वा । **प्रशंसा** बलवदनिष्टाननुबन्धित्वम् । **भूमा** बाहुल्यम् । **लिङ्गसमवायः** लिङ्गस्य मुख्यार्थधर्मस्य संबन्धः अल्पत्वपर्यवसितः भूम्नः पृथगुपादानेन गोबलीवर्दन्यायात् ॥ २३ ॥

---

*गुणाश्रय इत्यन्तस्यैकसूत्रत्वेऽपि मन्त्राधिकरणपूर्वपक्षसूत्रवत् प्रत्येकं प्रथमान्तसूत्रोपन्यासो व्याख्यासौकर्यार्थो न विरुद्ध्यत इति भाट्टकौस्तुभे.

तत्सिद्धिः ॥

'यजमानः प्रस्तरः'* इत्यादावपि सामानाधिकरण्यात् एकमितरस्य नामधेयम् । रूढत्वेन तदसम्भवाद्वा जघन्यप्रस्तरपदलक्षितप्रस्तरकार्यस्रुग्धारणोद्देशेन यजमानोऽधिकरणत्वेन विधीयत इति प्राप्ते—

प्रत्यक्षविध्यश्रवणात् 'प्रस्तरमुत्तरं बर्हिषस्सादयति'* इति विध्यन्तरैकवाक्यत्वाच्च तदर्थवादत्वमौदुम्बराधिकरणसिद्धमेव । यजमानपदं तु गौण्या वृत्त्या प्रस्तरस्तावकम् ॥

नन्वध्यारोपितार्थवृत्तित्वं गौणत्वं लोके प्रसिद्धम्, सिंहत्वस्य देवदत्ते आहार्यारोपात् । न च तत् वेदे सम्भवति । आरोपकपुरुषाभावादिति चेन्न—विनाऽप्यारोपं सिंहशब्दस्य सादृश्यमात्रविवक्षया देवदत्ते काव्यलोकयोः प्रयोगदर्शनात् । अतः स्वशक्यगुणसमानजातीयगुणयोगानिमित्तत्वं गौणत्वम् । सिंहनिष्ठक्रूरत्वसमानजातीयक्रूरत्वयोगाच्च सिंहपदस्य देवदत्ते प्रवृत्तेः 'सिंहो देवदत्तः' इत्यत्र लक्षणसमन्वयः । पुष्पादौ खसम्बन्धित्वाद्यारोपेण चारोपितं खपुष्पशब्दार्थमङ्गीकृत्य तद्वृत्तिगुणानामसत्त्वादीनां सिद्धान्ते सत्त्वाच्च न 'खपुष्पं भवत्सिद्धान्तः' इत्यादावव्याप्तिः । अतश्चैतादृशगौणत्वस्य वेदेऽप्यस्त्येव सम्भवः । यद्यपि च रूपकादिस्थले 'सौन्दर्यस्य तरङ्गिणी' इत्यादौ आरोपेणापि गौणी दृष्टा । तथाऽपि सादृश्यमात्रेणापि उपमालङ्कारस्थले साऽनुभूयमाना नापह्नोतुं शक्या । अतश्चोभयसाधारण्येन स्वशक्यसमवेतवत्ता गौणी वृत्तिः । समवेतवत्त्वं च क्वचिदारोपितत्वसम्बन्धेन, क्वचिच्च स्वसमानजातीयगुणवत्तासम्बन्धेनेति

---

* तै. सं. २-६-५.

भेदः । अत्र सिंहपदेन शक्त्या सिंहोपस्थित्यनन्तरं लक्षणया क्रूरत्वोपस्थितिरिति प्राञ्चः । वस्तुतस्तु—एकसम्बन्धिस्मरणेन अपरसम्बन्धिस्मारकविधयैव तदुपस्थितिः । गौणी ज्ञानकार्यतावच्छेदकं च निरुक्तोभयविधसम्बन्धान्यतरसम्बन्धेन स्वशक्यसमवेतधर्मप्रकारकदेवदत्तविशेष्यकशाब्दत्वमिति न क्रूरत्वादीनामशाब्दत्वप्रसङ्गः । न च गौण्या लक्षणातो न भेदः । स्वशक्यवृत्तिगुणानामेव यत्र सम्बन्धत्वेन रूपेण बोधः तत्र लक्षणा, क्रूरत्वत्वादिना बोधे तु गौणीति तयोर्भेदात् । ते च गुणाष्षड्विधाः—क्वचित्तत्सिद्धिः तत्कार्यकारित्वम् । यथा यजमानपदे यजमानो यथा स्वकार्यकर्ता तथा प्रस्तरोऽपीति । एवं च गौणी गर्भलक्षणया प्रस्तरस्तुतिः । एवमन्येऽपि पञ्च गुणा अग्रिमसूत्रैः द्रष्टव्याः ॥ १३ ॥

## जातिः ॥

'अग्निर्वै ब्राह्मणः'* इत्यत्र पूर्ववदेवाग्निशब्दो ब्राह्मणे गौणः द्वयोरप्यग्निब्राह्मणयोरेकब्रह्ममुखप्रभवत्वात् † । अग्निजननसमानजातीयजननमेवात्र गुणः ॥ १४ ॥

## सारूप्यम् ॥

'आदित्यो यूपः'‡ इत्यादौ तु सारूप्यं गौणीनिमित्तम् । न च सर्वत्र तदेव निमित्तं, कोऽत्र विशेषः? । चक्षुर्ग्राह्यं तेजस्वित्वाद्यत्र निमित्तमिति प्राञ्चः । वस्तुतस्तु—अन्यत्र शक्यनिष्ठगुणस्यैव

---

*तै. सं. ६-२-८. ‡ तै. ब्रा. २-१-५.

† 'प्रजापतिरकामयत प्रजायेयेति स मुखतस्त्रिवृतं निरमिमीत तमग्निर्देवताऽन्वसृज्यत गायत्री छन्दो रथन्तरं साम ब्राह्मणो मनुष्याणामजः पशूनां'(तै. सं. ७-१-१.) इत्यादिकमिह द्रष्टव्यम्.

स्वसमानजातीयगुणवत्तासंसर्गेण प्रकारत्वान्निमित्तता। न तु सारूप्यस्य तस्य संसर्गत्वात्। इह तु शक्यनिष्ठगुणसजातीयगुणवत्त्वरूपस्य सारूप्यस्यैव समवायादिसंसर्गेण प्रकारत्वात् तदेव निमित्तमिति विशेषः॥ १५॥

## प्रशंसा॥

'अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वाः'* इत्यत्र अजादीनां तत्रतत्र विहितत्वात् पशुकार्ये प्रतिषेधस्य पर्युदासस्य वा अनुपपत्तेरर्थवादत्वम्। अपशुशब्दो घटादौ मुख्यः गवाश्वगतप्राशस्त्याभावरूपगुणयोगादजादौ गौणस्सन् लक्षणया गवाश्वगतस्तुत्यर्थः। प्राचां मते तु नञ्समासान्तर्गतपशुपदेन गवाश्वगतप्राशस्त्यं लक्षयित्वा नञा तदभावरूपो गुण उपस्थाप्यत इति विशेषः। सर्वथा प्रशंसा गौणीनिमित्तघटितेति सिद्धम्॥ १६॥

## भूमा॥

'सृष्टीरुप दधाति'† इत्यत्र विध्यन्तरैकवाक्यत्वाभावात् प्रत्यक्षविधिश्रवणाच्च विधित्वम्। तत्रचोपधानमेवेष्टकासंस्कारार्थत्वेन विधीयते। यद्यपि चेष्टकानां चयनाङ्गत्वान्यथाऽनुपपत्त्यैव उपधानं प्राप्येत; तथाऽपि ततः पूर्वमेव प्रत्यक्षविधिना विधीयते। तत्फलं च प्रत्येकोपधानसिद्धिः चयनसमानकर्तृकत्वसिद्धिश्च। अन्यथा समुदितोपधानमपि कदाचित्प्राप्नुयात्। आर्थिकत्वाच्च चयनाभिन्नकर्तृकत्वमपि। सति त्वस्मिन् इष्टकासंस्कारद्वारा चयनाङ्गताबोधकविधौ प्रतिप्रधानावृत्तिन्यायात् अङ्गप्रधानयोरेककर्तृकत्वाच्च फलद्वयासिद्धिः। सृष्टिपदं तु लिङ्गप्रकरणप्राप्तसृष्टचसृष्टिमन्त्रमात्रस्य गौण्यानुवाद इति भाष्यकारः॥

---

*तै. सं. ५-२-९-  †तै. सं. ५-३-४.

वार्तिककारस्तु—नोपधानमात्रविधिः तथा सति 'प्राणभृत उप दधाति'* इत्याद्यनेकोपधानविधिवैयर्थ्योपत्तेः । अतो मन्त्रमात्रमुपधानानुवादेन मन्त्रविशिष्टं वोपधानमिष्टकासंस्कारार्थत्वेन विधीयते । तत्रोपधानविधिफलं तु पूर्ववत् । मन्त्रविधिफलं तूपधाने तन्नियमः । मन्त्रा हीष्टकामात्रप्रकाशकास्तद्ग्रहणादिष्वपि प्राप्तिसम्भवाच्चोपधाने नियमेन प्राप्नुवन्ति । अतस्तन्नियमः (ग्रहणादिपरिसङ्ख्यैवं वा) फलम् । मध्यमचितिसम्बन्धश्च । 'यां वै काञ्चन ब्राह्मणवतीमिष्टकामभिजानीयात्तां मध्यमायां चितावुपदध्यात्' इति वचनेन प्रत्यक्षब्राह्मणवतीनामिष्टकानां मध्यमचितिसम्बन्धस्य विधानात् । अन्यथा तत्तच्चित्यर्थान्तरप्रकरणपाठरहितानां मन्त्राणां चयनमहाप्रकरणेन सर्वचितिषु अन्तिमायामेव वा निवेशापत्तेः । अतो मध्यमचितिसम्बन्धार्थं मन्त्रविधिः । इष्टकानां प्रत्यक्षब्राह्मणवत्त्वं च इष्टकावाचिप्रत्यक्षब्राह्मणपठितपदविधेयमन्त्रकत्वम् । सृष्टिपदं हि सृष्टिप्रकाशकमन्त्रोपधेयेष्टकापरम् । तत्र च विशेषणांशस्य विधेयत्वात्तत्तदिष्टकानां प्रत्यक्षब्राह्मणवत्त्वसिद्धिः । इतिकरणविनियुक्तलोकंपृणमन्त्रस्यापि मध्यमचितिमात्रसम्बन्धापत्तेरिष्टकावाचीति पदविशेषणम् । अतश्च मन्त्रविशिष्टोपधानमत्र विधीयते । सृष्टिपदं परं गौण्या वृत्त्या सप्तदशसङ्ख्याकसृष्टयसृष्टिमन्त्रपरम्, 'यत्सप्तदशेष्टका उपदधाति' इत्यर्थवादानुसारात् । तत्र चतुर्दश सृष्टिमन्त्रास्त्रयोऽसृष्टिमन्त्रा इति सृष्टिबाहुल्यं गुणो गौणीवृत्तिनिमित्तम् ॥१७॥

लिङ्गसमवायः ॥

'प्राणभृत उप दधाति'* इत्यादौ अल्पत्वं निमित्तम् । शेषं पूर्ववत् । एवं षड्गौणीवृत्तिप्रकाराः ॥ १८ ॥

*तै. सं. ५-२-१०.

## (१९)–संदिग्धेषु वाक्यशेषात् ॥ २४ ॥

**संदिग्धेषु** 'अक्ताश्शर्करा उपदध्यात्'* इत्यादिविध्यर्थेषु संदेहविषयेषु सत्सु **वाक्यशेषात्** 'तेजो घृतम् । सतेजसमेवाग्निं चिनुते'* इत्यादिकात् अर्थवादरूपात् कल्पना अर्थवादेन स्तूयमानस्यैव विधेयतया निर्णयः । उत्तरसूत्रात् कल्पनापदस्यानुषङ्गः ॥ २४ ॥

**'अक्ताश्शर्करा उपदधाति'* इत्यत्र अक्ता इत्यनेन अविशेषात् यत्किञ्चिदञ्जनसाधनद्रव्यस्य विधिना निर्णीतत्वात् उपसंहारस्थेन 'तेजो वै घृतम्'* इत्यनेन सङ्कोचानुपपत्तेर्नार्थवादस्य सन्दिग्धार्थनिर्णये प्रामाण्यमिति प्राप्ते—**

**विधेरविशेषप्रवृत्तत्वेनैव घृतमात्रग्रहणेनाप्युपपत्तेरितराक्षेपकत्वे प्रमाणाभावात् उपक्रमस्याविरोधेनैवोपपत्तौ उपसंहारस्थस्याप्यर्थवादस्योपलक्षणत्वे प्रमाणाभावाद्विध्यर्थवादयोरेकवाक्यत्वेनैकविषयकत्वस्यावश्यकत्वाच्च युक्तं वाक्यशेषस्य सन्दिग्धार्थनिर्णयेऽपि प्रामाण्यमिति घृतेनैवाञ्जनम् ॥ १९ ॥**

## (२०)–अर्थाद्वा कल्पनैकदेशत्वात् ॥ २५ ॥

**अर्थात् वा** सामर्थ्यादेव 'हस्तेनावद्यति । स्रुवेणावद्यति । स्वधितिनाऽवद्यति' इत्यादौ कल्पना अवदेयद्रव्यादिनिर्णयः । न च तन्निर्णीतस्यार्थस्यावैदिकत्वम् । तत्कल्पितपदस्य **एकदेशत्वात्** वेदैकदेशत्वात् वैदिकत्वोपपत्तेः ॥ २५ ॥

इति सारबोधिन्यां जैमिनिसूत्रवृत्तौ.

प्रथमस्याध्यायस्य चतुर्थः पादः.

---

* तै. ब्रा. ३-१२-५.

'स्रुवेणावद्यति स्वधितिनाऽवद्यति हस्तेनावद्यति' इत्यादौ विधेरवदेयद्रव्यविषये सन्दिग्धस्य सामर्थ्यान्निर्णयः— स्रुवेण द्रवद्रव्यमेव आज्यादि, स्वधितिना मांसादि, हस्तेन संहतं पुरोडाशादि। अतश्च सामर्थ्यसहकृतावद्यतिपदेनैव लक्षणया द्रवद्रव्याद्यवदानस्योद्देश्यत्वात् तदनुवादेन स्रुवादिविधौ न किञ्चिद्बाधकम्। एवं 'अञ्जलिना सक्तून् जुहोति'* इत्यादावपि न सम्पुटाकारोऽञ्जलिः अपि तु व्याकोचाकार एव॥

तदेवं विध्यर्थवादमन्त्रस्मृत्याचारनामधेयवाक्यशेषसामर्थ्यरूपाण्यष्टौ प्रमाणानि धर्माधर्मयोर्निरूपितानि। अतः परं भेदादिना तत्स्वरूपं निरूप्यते ॥२०॥

इति खण्डदेवविरचितायां भाट्टदीपिकायां प्रथमस्याध्यायस्य
चतुर्थः पादः.
अध्यायश्च समाप्तः.

---

# अथ द्वितीयोऽध्यायः.

(१-२)—भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेतैष ह्यर्थो विधीयते ॥१॥ सर्वेषां भावोऽर्थ इति चेत् ॥२॥ येषामुत्पत्तौ स्वप्रयोगे रूपोपलब्धिस्तानि नामानि तस्मात्तेभ्यः पराऽऽकाङ्क्षा भूतत्वात् येषां तूत्पत्तावर्थे स्वे प्रयोगो न विद्यते तान्याख्यातानि त-

* तै. सं. ३-३-८.

**स्मात्तेभ्यः प्रतीयेत॥३॥ आश्रितत्वात्प्रयोगस्य॥४**

**भावार्थाः** भावः भावना अर्थः स्वान्वय्यर्थो येषां ते भावनाविशेषणीभूतार्थाः **कर्मशब्दाः** क्रियाशब्देन धातुना प्रतिपाद्याः **तेभ्यः** धात्वर्थेभ्यः एव **क्रिया** अपूर्वोत्पत्तिरूपा फलोत्पत्तिरूपा वा **प्रतीयेत** कुतः **एष ह्यर्थः** धात्वर्थः **विधीयते** विधेयफलभावनाविशेषणत्वेन संबध्यते न तु द्रव्यगुणादिरूपनामार्थाः । तथा च 'सोमेन यजेत' इत्यादौ फलभावनायां धात्वर्थस्यैव करणतयाऽन्वयात् तस्यैव फलसाधनीभूतापूर्वसाधनत्वरूपः फलसंबन्धः । सोमादेस्तूपपदार्थस्य धात्वर्थोपकारकत्वमेवेत्याशयः ॥ १ ॥ आशङ्क्य समाधत्ते—**सर्वेषां** पदार्थानां **भावः** भावनैव **अर्थः** स्वान्वय्यर्थः । तथा च धात्वर्थस्येव उपपदार्थस्यापि भावनान्वयितास्वीकारात् सोमादेरपि फलसम्बन्धो युज्यते इति **चेत्** नेदं युक्तं यतः **उत्पत्तौ** 'सोमेन यजेत' इत्याद्युत्पत्तिवाक्ये **येषां** पदानां **स्वप्रयोगे** स्वोच्चारणसमये **रूपोपलब्धिः** स्ववाच्यस्वरूपोपलब्धियोग्यता स्ववाच्यानां सिद्धरूपता **तानि नामानि** । **तस्मात्** नाम्नां सिद्धरूपार्थबोधकत्वात् **तेभ्यः** नामार्थेभ्यः **आकाङ्क्षा** स्वसाधनाकाङ्क्षा **परा** दूरे नास्तीति यावत्. कुतः **भूतत्वात्** तत्तन्नामोच्चारणकाल एव तत्तन्नामार्थस्य सिद्धत्वेन प्रतीतेः । अतः नामार्थस्य सोमादेः फलसंबन्धे स्वीक्रियमाणे यागादेर्दृष्टविधया तत्साधनत्वासंभवात् अदृष्टद्वारैव तत्साधनत्वं कल्प्यं स्यात् । **येषां** शब्दानां **तु उत्पत्तौ** उच्चारणकाले **स्वेऽर्थे** स्वप्रतिपाद्यार्थे **प्रयोगः** इन्द्रियसंप्रयोगो **न विद्यते** स्वार्थो न सिद्ध इति यावत् **तान्याख्यातानि** । **तस्मात्** आख्यातानां असिद्धार्थबोधकत्वात् **तेभ्यः** तदर्थेभ्यः अनिष्पन्नत्वेन प्रतीयमानेभ्यः साधनाकाङ्क्षा झडिति **प्रतीयेत** । अतः धात्वर्थं प्रति उपपदार्थस्य दृष्टविधयैवोपकारकत्वसंभवात् धात्वर्थे यागादौ फलसंबन्धित्वेन स्वीक्रियमाणे

दृष्टद्वारैव सोमादेस्तादृशयागोपकारकत्वं संभवतीति अनेकादृष्टकल्पनाभावाद्धात्वर्थादेव फलमिति ॥ ३—३ ॥ ननूपपदार्थस्य सोमादेः फलसंबन्धेऽपि धात्वर्थस्याश्रयतया दृष्टविधयैव तदुपकारकत्वं संभवतीति धात्वर्थादेव फलमित्यत्र विनिगमकं दुर्लभमित्याशङ्कायामाह प्रयोगस्य प्रयुज्यमानाया भावनायाः समानपदोपात्तेन धात्वर्थेनैव अन्वयस्य पूर्वं आश्रितत्वात् औत्तरकालिकः फलान्वयोऽपि धात्वर्थस्यैव, समानपदश्रुतेरेव नियामकत्वात् ॥ ४ ॥

एवं धर्माधर्मप्रमाणेषु निरूपितेषु अधुना तत्स्वरूपं निरूप्यते। यद्यपि च तदप्येतावत्प्रमाणप्रतिपाद्यत्वेन रूपेण बुद्धमेव तथाऽप्येकत्वानेकत्वादिरूपेणाबुद्धत्वादिह तेन रूपेण निरूप्यते। अत्र च शब्दान्तरादिषट्प्रमाणकभावनाभेद एवाध्यायार्थः। धात्वर्थभेदस्तु तत्सिद्ध्यर्थः क्वाचित्को निरूप्यते, अपूर्वभेदोऽपि फलत्वेनेति न तावध्यायार्थौ ॥

फलीभूतापूर्वभेदोऽप्यपूर्वसाधनभेदाधीन इति तत्साधनजिज्ञासायां स्वर्गादिसाधनस्यैवावान्तरव्यापाररूपापूर्वं प्रति साधनत्वात् स्वर्गादिफलं प्रति किं धात्वर्थस्य करणत्वं उत उपपदार्थस्य सोमादेरपीति चिन्तायां—प्राथमिकभावनान्वयस्य तावत् सिद्धान्तिनोऽपि सम्मतत्वात् औत्तरकालिकः फलान्वयोऽपि सर्वेषामेवेति प्राप्ते—

सर्वेषां करणत्वेऽनेकादृष्टकल्पनाप्रसङ्गात् एकस्यैव फलनिरूपिता करणता, अन्येषां तु दृष्टविधयैव करणार्थत्वम्। तदत्र धात्वर्थस्यैव फलकरणत्वे सोमादीनां तज्जनकत्वेनैव दृष्टार्थता। सोमादीनां करणत्वे च धात्वर्थस्याश्रयविधयैव दृष्टार्थतेति नानेकादृष्टकल्पना ॥ १ ॥

एवं स्थिते विशेषजिज्ञासायां सोमादेरेव फलकरणत्वं तस्य सिद्धत्वेन योग्यतारूपलिङ्गात् । तृतीयायाः करणत्वे शक्तत्वेन कारकश्रुतेरेकपदोपात्तत्वरूपपदश्रुत्यपेक्षया बलीयस्त्वाच्च । फलान्वये पदश्रुतेरप्यभावाच्च । अत एव यागादिर्धात्वर्थस्सोमाद्यर्थ एव । न च तदर्थत्वेऽदृष्टकल्पना । अग्निहोत्रहोमेन दधिनिष्ठकरणतासम्पादनवत् यागेनादृष्टमन्तरेणैव सोमनिष्ठकरणतासम्पादनेन यागस्य सोमाङ्गत्वोपपत्तिरिति प्राप्ते—

पदश्रुत्या यागस्यैव फलकरणत्वम् । यद्यपि च फलान्वये न सा । तथाऽपि प्राथमिकभावनान्वये यस्य यत् प्रमाणं तद्गतबलवत्त्वस्य तस्यामवस्थायामकिञ्चित्करत्वेऽपि पार्ष्ठिकफलान्वये तस्य निर्णायकत्वात् । अतश्च प्राथमिकभावनान्वये विद्यमाना पदश्रुतिः फलान्वये निर्णायिका । न च तस्याः कारकश्रुत्यपेक्षया दौर्बल्यम् । लाक्षणिकत्वेऽपि यागकरणत्वस्य सोमकरणत्वान्वयात् प्राग्भावनायामन्वितत्वेन तदन्वयस्य प्राथम्यात् । अन्यथा तिङन्तपदस्य परिपूर्णत्वाभावेन तदुपस्थापितभावनायां सोमस्याप्यन्वयानुपपत्तेः 'परिपूर्णं पदं पदान्तरेणान्वेति' इति न्यायात् । न च प्रथमावगतस्यापि कल्प्यस्यौत्तरकालिकेन बाधः, उपजीव्यत्वादिति यागः फलसाधनं सोमो यागार्थ इति सिद्धम् ॥

प्रयोजनं—सोमापचारे न प्रतिनिध्युपादानं पूर्वपक्षे । सिद्धान्ते तु तत् ॥

नन्विदं धात्वर्थातिरिक्तभावनासत्त्वे भवेत् । न तु तस्यां प्रमाणमस्ति । धातूनामेव विक्लित्त्यादिफल इव तत्प्रयोजकव्यापारमात्रे फूत्कारादौ यत्नादौ च शक्तत्वात् । अतो यत्नादि-

रूपभावनाया अपि धातुवाच्यत्वात् धात्वर्थ एव क्रियारूपे स-फलकारकान्वयः न तु यागस्य पदश्रुत्या फलकरणत्वमिति चेत्— न 'पचति पाकं करोति पाके यतते' इति पाकात्पृथग्विध्रीयमाणयत्नादेः पचत्यर्थत्वानुपपत्तेः । न च घञन्तपाकशब्दस्य फल एव शक्तत्वात् पृथग्विवरणोपपत्तिः । व्यापारविगमेऽपि फलदशायां 'पाको विद्यते' इति प्रयोगापत्तेः तस्याः व्यापारवाचित्वावश्यंभावात् । अतो भासमानो यत्नादिः तिङ्वाच्य एव । अत एव धातुवाच्यमपि साक्षात्फलजनकफूत्कारादिव्यापारवृत्तिपाकत्वादिकमेव । तच्च जातिरखण्डोपाधिर्वेत्यन्यदेतत् । तज्जनकयत्नादिकं तु आख्यातवाच्यमेव । तत्र हि शक्यतावच्छेदकं तु करोतिना विध्रीयमाणतिप्पदत्वादिकं ; लाघवात्तिप्त्वादिकमेव वा । न तु स्थानित्वम् । तदुपस्थापकादेशविशेषाणां पदज्ञाननिष्ठकारणतावच्छेदककोटौ प्रवेशे गुरुभूतकारणतावच्छेदकघटितानन्तकार्यकारणभावकल्पनापत्तेः । अप्रवेशे यथाकथंचिदुपस्थापितलकारादपि भावनोपस्थित्यापत्तेश्च । शक्यतावच्छेदकं तु फलोद्देश्यकधात्वर्थातिरिक्तव्यापारत्वम् । फलं च कचिद्धात्वर्थः कचिच्च स्वर्गादिरोति यथाविवक्षम् । एवं च 'रथो गच्छति' इत्यादौ न लक्षणा । गमनानुकूलव्यापारस्यैवाख्यातार्थत्वादिति पार्थसारथिमिश्रः ॥

वस्तुतस्तु—यत्नत्वमेव शक्यतावच्छेदकम्, लाघवात् । तद्बाधे तु सर्वत्राश्रयत्वादौ लक्षणा । यत्नस्यैव चाख्यातोपात्तस्य नित्यं कर्मसाकांक्षत्वम्, करोतिपर्यायत्वात् एककर्मकत्वम्, फलभावनानुकूलव्यापारत्वाच्चार्थभावनात्वं द्रष्टव्यम् ॥

इत्थं चाख्यातोपात्तभावनैव मुख्यविशेष्या तद्व्यतिरेकेणेतर-

पदार्थान्वयापर्यवसानात् । तस्यामेव चाख्यातोपात्तायां क्त्वाप्रत्ययाद्युपात्तायां वा योग्यताद्यनुसारेण निपातोपसर्गप्रातिपदिकातिरिक्तशब्दगम्यो यस्सुबुपात्तलिङ्गसङ्ख्याव्यतिरिक्तोऽर्थः तस्य सर्वस्यापि प्रकारतया अन्वयः । निपातोपसर्गयोस्तु क्रियासमभिव्याहारादौ सति तयाऽन्वयः । अन्यसमभिव्याहारादौ अन्येनापि । प्रातिपदिकार्थोऽपि सुबर्थे करणत्वादौ । तद्धितसमासादिसखण्डप्रातिपदिकावयवार्थानां तु यत्र कारकतासम्बन्धेन तद्धितसमासादिवृत्तिः यथा आग्नेय इत्यादौ तत्राग्नेर्देवतात्वात् भावनायामेवान्वयः न तु तद्धितोपात्ते द्रव्ये । स तु पार्ष्ठिक एव । यत्र कारकतातिरिक्तसम्बन्धेन सा तत्र परस्परान्वयोऽपि । यथा 'अश्वाभिधानीं'* इत्यादौ । एवं सुबुपात्तलिङ्गसङ्ख्ययोस्समानाभिधानश्रुत्या सुबर्थे करणत्वादावेवान्वयः । तद्व्यतिरिक्तपदार्थमात्रस्य तु सुबर्थकरणत्वादेर्धात्वर्थस्य कर्तुस्तदेकत्वस्य कालादेर्लडाद्यर्थस्य लिङाद्यर्थस्य च विध्यादेस्सर्वस्यैव लिङानन्वयिभावनावाचिपदोपस्थाप्यायां भावनायामेवान्वयः । अत एव भावनापदोपस्थापितायां तस्यां नान्वयः आख्यातेन क्त्वादिना वोपस्थितायां तु भवत्येवान्वयः प्रकारतया । प्रकारताघटकास्सम्बन्धाश्च सर्वे यथायथं पार्ष्ठिकान्वयबोधवेलायामेव गम्यमानाः कौस्तुभ एव द्रष्टव्याः । तस्मात्सिद्धा आख्यातवाच्या आर्थी भावना । तस्यां च स्वर्गादि भाव्यम् । धात्वर्थश्च करणम् । सोमादिकं तु करणानुग्राहकत्वादितिकर्तव्यतेति सिद्धम् ॥ २ ॥

## (३)—चोदना पुनरारम्भः ॥ ५ ॥

---

*तै. सं. ५-१-२.

आरभ्यत इति **आरम्भः** अपूर्वं तु **पुनः** अङ्गीकार्यमेव यतः **चोदना** यागस्वर्गसाध्यसाधनभावपरं 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादिवाक्यमुपलभ्यते ॥ ५ ॥

**धात्वर्थादेवापूर्वमिति स्थिते अपूर्वमेवास्ति न वेति चिन्तायां—कृतयागध्वंसद्वारेणैव क्षणिकस्यापि यागस्य स्वर्गसाधनत्वोपपत्तौ नापूर्वकल्पनं गौरवापत्तेः । न च नित्यत्वात् ध्वंसस्य**

**धर्मः क्षरति कीर्तनात् ।**

**प्रायश्चित्तेन नश्यन्ति पापानि सुमहान्त्यपि ॥**

**इति कीर्तनप्रायश्चित्तनाश्यत्वानुपपत्तिः । कीर्तनादेः फलोत्पत्तिप्रतिबन्धकत्वाङ्गीकारेण तदनाशकत्वात् । कीर्तनात्यन्ताभावविशिष्टज्योतिष्टोमव्यक्तित्वेन कारणत्वकल्पनाद्वा न कश्चिद्दोषः । अतो नापूर्वे किंचित्प्रमाणमस्ति इति प्राप्ते—**

**क्षरतिनश्यत्योर्नाशवाचिनोर्भवन्मते लक्षणापत्तेः नाशयोग्यमपूर्वमेव कल्प्यते गौरवस्य फलमुखत्वेनादोषत्वात् । अतश्च प्रधानेन स्वर्गादिफले जननीये अपूर्वमवान्तरव्यापारः । अङ्गेन च प्रधानादिनिष्ठफलाद्यनुकूलयोग्यतारूपे स्वफले जननीये तदवान्तरव्यापारः । स च फलबलादात्मनिष्ठः । अवान्तरव्यापारत्वादेव च न यागादेरन्यथासिद्धिः । तदत्र यत्रैकमेव प्रधानं तत्र पूर्वोत्तराङ्गसहितात्तस्मादपूर्वोत्पत्तेः प्रधानाव्यवहितमेकमुत्पत्त्यपूर्वं तेन च सर्वाङ्गान्ते परमापूर्वमपरमिति द्वे अपूर्वे । एवं प्रधानभेदेऽपि प्रतिप्रधानमुत्पत्त्यपूर्वभेदः, परमापूर्वं त्वेकमिति ज्ञेयम् ॥ दर्शपूर्णमासयोस्तु 'पौर्णमास्यां पौर्णमास्या यजेत अमावास्यायाममावास्यया यजेत' इति वाक्यद्वयेन यागत्रयकरणतानां त्रिकान्तरनिरपेक्षाणां साहित्यावगतेः साहित्यस्य चैककार्यनिरूपितत्वं विना अनुपपत्तेः प्रतिसमुदायं समुदायापूर्वमपरं तेन च पर-**

मापूर्वमिति न वा पूर्वासिद्धिः । एवमन्यत्रापि चातुर्मास्यद्वादशाहादिषु अपूर्वकल्पना ज्ञेया । अङ्गेषु तु सन्निपत्योपकारकाङ्गजन्यापूर्वाणां प्रधान एवोत्पत्त्यपूर्वजननानुकूलयोग्यताजनने उपयोगः । अन्तिमप्रधानगतयोग्यतया च नाशः । आरादुपकारकजन्यानां तु उत्पत्त्यपूर्वनिष्ठतदव्यवहितकार्यजननानुकूलयोग्यताजनने उपयोगः । अव्यवहितं च कार्यं समुदायापूर्वसत्त्वे तदेव । तदभावे परमापूर्वं स्वर्गाद्येव वा ज्ञेयम् । अन्तिमयोग्यतोत्पत्तौ च नाशः । यदि तु परमापूर्वे न तथा किंचित्प्रमाणमस्तीत्याशङ्क्येत ततो मास्तु तत् । अङ्गानां तु आरादुपकारकाणामुत्पत्त्यपूर्व एव समुदायापूर्वाभावे फलानुकूलयोग्यताजननमेव कार्यमस्तु । सर्वथा सिद्धमपूर्वम् ॥ ३ ॥

**(४)–तानि द्वैधं गुणप्रधानभूतानि ॥ ६ ॥ यैस्तु द्रव्यं न चिकीर्ष्यते तानि प्रधानभूतानि द्रव्यस्य गुणभूतत्वात् ॥ ७ ॥ यैस्तु द्रव्यं चिकीर्ष्यते गुणस्तत्र प्रतीयेत तस्य द्रव्यप्रधानत्वात् ॥ ८ ॥**

चोदनासु च **तानि** धात्वर्थरूपक्रियाप्रतिपादकानि आख्यातान्तानि द्विधैव **द्वैधं** द्विविधानि **गुणप्रधानभूतानि** द्रव्यं प्रति गुणभूतार्थप्रतिपादकानि कानिचित्, कानिचिच्च द्रव्यं प्रति प्रधानभूतार्थप्रतिपादकानि ॥ ६ ॥ **यैस्तु** कर्मभिः **द्रव्यं** यागीयं द्रव्यदेवतादिकं **न चिकीर्ष्यते** न संस्कर्तुमिष्यते संस्कर्तुमनर्हं तानि कर्माणि 'सोमेन यजेत' इत्यादिविहितानि **प्रधानभूतानि द्रव्यस्य** सोमादेः तत्र श्रुत्यादिना **गुणभूतत्वात्** ॥ ७ ॥ **यैस्तु** कर्मभिः **द्रव्यं** यागीयद्रव्यदेवतादिकं

**चिकीर्ष्यते** संस्कर्तुमर्हे **तत्र** "व्रीहीन्प्रोक्षति" इत्यादौ तानि कर्माणि व्रीहिप्रोक्षणादीनि **गुणः** गुणभूतानीत्येवं **प्रतीयेत तस्य** तत्स्थलीयाख्यातस्य **द्रव्यप्रधानत्वात्** द्रव्यं प्रधानं यस्य तादृशत्वात् द्वितीयादिसमभिव्याहारेण तद्वाक्यस्य द्रव्यप्रधानकगुणभूतकर्मबोधकत्वात्॥८॥

**'व्रीहीनवहन्ति' इत्यादौ पूर्ववदेव अवघातस्य फलभावनाकरणत्वमविवादम् । तच्च फलं न व्रीहयः अजन्यत्वात् । नापि वैतुष्यं तज्जनकत्वस्य लोकसिद्धत्वेन अविधेयत्वात् । नापि पक्षे दलनादेरप्यर्थप्राप्तत्वेन तद्व्यावृत्तिफलको नियमः तस्यापि वैफल्यात् । न च तस्यादृष्टार्थत्वं अदृष्टस्यवाश्यकल्पनीयत्वे शाब्दावघातादेव तत्कल्पनौचित्यात् । अतोऽदृष्टार्थमेव अवघातः । तदपि चादृष्टं न व्रीहिनिष्ठं तत्त्वावाच्छिन्नं प्रति आत्मत्वेन समवायिकारणत्वात् । अतः पूर्ववदेव व्रीहय एवावघातार्था इति व्रीहिविशिष्टोऽवघात एवादृष्टार्थमारादुपकारकत्वेन विधायत इति प्राप्ते—**

**दृष्टे सम्भवत्यदृष्टस्यान्याय्यत्वात् वितुषीभाव एव अवघातफलम् । न च तस्याक्षेपादेव प्राप्तत्वेन विधिवैयर्थ्यम् । दलनाद्युपायान्तरव्यावृत्तिफलकनियमस्यैव अवघाताश्रितस्य अदृष्टार्थं विधेयत्वात् । अत एव कृष्णलचरौ अवघाताभावे तस्य लोपः । वस्तुतस्तु श्रौतस्यावघातस्यैवाक्षेपतः पूर्वप्रवृत्त्या वितुषीभावार्थं विधेयत्वम् । अतश्चाक्षेपप्रतिबन्धात् दलनादिव्यावृत्तिफलको नियमः फलम् । वैतुष्यस्य च दलनेनापि जायमानत्वात् वैयर्थ्यशङ्का तु अवघातादेव व्रीहिनिष्ठादृष्टस्याप्युत्पत्तिकल्पनान्निराकर्तव्या । तददृष्टस्य च जन्यत्वमात्रं लाघवात् कल्प्यते, न तु प्रयोजकत्वमपि, दृष्टरूपे वैतुष्य एव तत्कल्प-**

नात् । अतः कृष्णलचरौ वैतुष्याभावे तल्लोपः । आर्थिकविध्यन्तरकल्पनात् एकया द्वितीययैव वा जन्यद्वयोर्केनानेकोद्देश्यता। तत्तददृष्टस्य च द्वितीयादिधर्मिग्राहकप्रमाणेन व्रीह्यादिनिष्ठत्वस्यैवावगतेस्तत्त्वेनैव समवायिकारणता, नात्मत्वेन । अतश्चावघातस्यादृष्टवितुषीभावोभयद्वारा अपूर्वसाधनीभूतव्रीह्युद्देशेन विधानात् सिद्धं संस्कारकर्मत्वम् ।

प्रयोजनं यागार्थव्रीह्यपेक्षया व्रीह्यन्तरमवघातार्थमुपादेयं पूर्वपक्षे । सिद्धान्ते नेति ॥ ४ ॥

## (५)–धर्ममात्रे तु कर्म स्यादनिर्वृत्तेः प्रयाजवत् ॥ ९ ॥ तुल्यश्रुतित्वाद्वेतरैस्सधर्मा स्यात्॥१०॥ द्रव्योपदेश इति चेत् ॥ ११ ॥ न तदर्थत्वाल्लोकवत्तस्य च शेषभूतत्वात् ॥ १२ ॥

"स्रुचस्संमार्ष्टि"* "व्रीहीन्प्रोक्षति" इत्यादौ दृष्टोपकाराजनके **धर्ममात्रे तु** सम्मार्गप्रोक्षणादिरूपे कृत्स्ने कर्मण्यपि **कर्म** प्रधानकर्मत्वं **स्यात्** द्रव्यगतस्योपकारस्य **प्रयाजादिवत्** प्रयाजादिभ्य इव तैः **अनिर्वृत्तेः** अनिष्पादनात् ॥ ९ ॥ सिद्धान्तमाह—**वा** इति पूर्वपक्षव्यावृत्तौ । **इतरैः** अवघातादिभिः **सधर्मा** गुणकर्मत्वेन तुल्यः **स्यात्** कुतः **तुल्यश्रुतित्वात्** "व्रीहीनवहन्ति" इत्यादाविव "स्रुचस्संमार्ष्टि"* इत्यादावपि द्रव्यगतप्राधान्यवाचिन्या द्वितीयाश्रुतेः समानत्वात् ॥१०॥ सिद्धान्तमिममाशङ्क्य समाधत्ते—व्रीहीनिति द्वितीयान्तेनापि **द्रव्योपदेशः** द्रव्यस्य गुणतयैवोपदेशः विधानं "सक्तून्जुहोति" इत्यादौ द्वितीयायाः

---

*तै. ब्रा. ३-३-१.

करणत्ववाचिताया अपि दर्शनात् **इति चेत् न** लोकवत् "घटं करोति" इत्यादिलौकिकप्रयोग इव वेदेऽपि द्वितीयायाः "कर्मणि द्वितीया" इत्यनुशासनानुरोधेन कर्मत्ववाचकत्वात् । **तस्य** "सक्तूञ्जुहोति" इत्यादौ सक्त्वादेः **च शेषभूतत्वात्** गुणभूतत्वात् भूतभाव्युपयोगासंभवेन प्राधान्यस्य कथं चिदपि स्वीकारासंभवेनागत्या द्वितीयायाः करणत्वे लाक्षणिकताऽऽश्रीयत इति ॥ ११-१२ ॥

**'व्रीहीन् प्रोक्षति' 'स्रुचस्सम्मार्ष्टि'* इत्यादौ दृष्टोपकारकत्वासम्भवात् द्वितीयायाश्च साध्यत्ववत्करणत्वेऽपि 'सक्तून् जुहोति' 'बल्बजान् शिखण्डकान् कुरु' इत्यादौ प्रयोगदर्शनात् पूर्वाधिकरणपूर्वपक्षवदर्थकर्मत्वमेव । बल्बजानां हि करोतेर्द्विकर्मकत्वापत्तेर्न साध्यत्वम् । अतः करणत्वमपि द्वितीयार्थः । अतश्च व्रीहिकरणकप्रोक्षणमेवादृष्टार्थं विधीयत इति प्राप्ते—**

**'कर्मणि द्वितीया' इत्यनुशासनात् 'घटं करोति' इत्यादिप्रयोगाच्च साध्यत्वमेव द्वितीयार्थः, न करणत्वम् । अनेकशक्तिकल्पनाप्रसङ्गात् । कर्मत्वं च 'कर्तुरीप्सिततमं कर्म' इति सूत्रात् नेप्सितत्वरूपमेव । अपि तु 'तथा युक्तं चानीप्सितम्' इति सूत्रादीप्सितानीप्सितसाधारणं साध्यत्वमेव । यथा चैवं सति न सूत्रद्वयवैयर्थ्यं तथा कौस्तुभ एव प्रदर्शितम् । अतश्च व्रीहीणां द्वितीयया साध्यत्वाभिधानात् यागाङ्गत्वावगमेन चेप्सितत्वप्रतीतेस्तदुद्देशेन प्रोक्षणं विधीयते । दृष्टद्वारासम्भवेऽपि च अदृष्टमेव द्वारं व्रीहिनिष्ठं कल्प्यते । अत एव यत्र नोपयोगः क्लृप्तः न वा कल्पयितुं शक्यः यथा सक्तुषु तत्र द्वितीयया करणत्वलक्षणामङ्गीकृत्य सक्तुविशिष्टहोमस्यैवादृष्टार्थं**

---

*तै. ब्रा. ३-३-१.

विधानम् । न चानीप्सितकर्मत्वेनाप्यन्वयोपपत्तेर्न करणत्वलक्षणेति वाच्यम् । तथा सति अदृष्टोपकारस्यापि भावनायां कर्मत्वेन अन्वयावश्यम्भावे तस्य द्विकर्मकत्वापत्त्या उद्देश्यानेकत्वनिमित्तवाक्यभेदापत्तेः । अतस्सक्तुकरणकहोमस्याराादुपकारकत्वेऽपि प्रोक्षणादेस्संनिपत्योपकारकत्वमेव ।

प्रयोजनं पूर्ववत् ॥ ५ ॥

**(६)—स्तुतशस्त्रयोस्तु संस्कारो याज्यावद्देवताभिधानत्वात् ॥ १३ ॥ अर्थेन त्वपकृष्येत देवतानामचोदनार्थस्य गुणभूतत्वात् ॥ १४ ॥ वशावद्वा गुणार्थं स्यात् ॥ १५ ॥ न श्रुतिसमवायित्वात्॥१६॥ व्यपदेशाच्च ॥ १७ ॥ गुणश्चानर्थकस्स्यात् ॥ १८ ॥ तथा याज्यापुरोरुचोः ॥ १९ ॥ वशायामर्थसंयोगात् ॥ २० ॥ यत्रेति वाऽर्थवत्त्वात्स्यात् ॥२१॥ न त्वाम्नातेषु ॥ २२ ॥ दृश्यते ॥ २३ ॥ अपि वा श्रुतिसंयोगात्प्रकरणे स्तौतिशंसती क्रियोत्पत्तिं विदध्याताम् ॥ २४ ॥ शब्दपृथक्त्वाच्च ॥ २५ ॥ अनर्थकं च तद्वचनम् ॥२६॥ अन्यश्चार्थः प्रतीयते॥२७॥ अभिधानं च कर्मवत् ॥ २८ ॥ फलनिर्वृत्तेश्च ॥२९॥**

याज्यावत् याज्यायां इव स्तुतशस्त्रयोः स्तोत्रशस्त्रयोरपि संस्कारः देवतायाः स्मरणेन संस्कार एव फलं देवताभिधानत्वात्

देवताबोधकत्वात् ॥ १३ ॥ अस्मिन्पूर्वपक्षे अनुपपत्तिमाशङ्कते—एवं सति माहेन्द्रग्रहयागस्य क्रमे पठितं 'अभि त्वा शूर नो नुमः'* इत्यैन्द्रऋग्द्वयं **अर्थेन** तत्प्रतिपाद्यदेवतासंस्काररूपप्रयोजनानुरोधेन **अपकृष्येत** महेन्द्रयागमपनीय ऐन्द्रयागे नीयेत **देवतानामचोदनार्थस्य** देवतानामघटितचोदनाप्रतिपाद्यं इन्द्रादिदेवतारूपार्थं प्रति स्तोत्रशस्त्रीयऋचां **गुणभूतत्वात्** अङ्गभूतत्वात् पूषानुमन्त्रणमन्त्रवत् । यजुर्वेदविहितग्रहयागाभ्यासान्तःपातिनो माहेन्द्रयागस्य क्रमे सामवेदान्तर्गतोत्तराग्रन्थे तादृशऋग्द्वयमाम्नातमैन्द्रस्तोत्रार्थं एवं 'पादं पुनरारभते' इति वचनावगतमाद्यामृचं सकृत्पठित्वा तस्या अन्त्यपादेन सह द्वितीयाया अर्धर्चं पठित्वा तदन्त्यपादेन सह द्वितीयान्त्यार्धर्चपठनरूपं ऋग्द्वयग्रथनं माहेन्द्रग्रहयागसन्निधावाम्नातं हौत्रे ॥ १४ ॥इमामाशङ्कां समाधत्ते पूर्वपक्षी—तादृशऋग्द्वयं **अगुणार्थं वा** महेन्द्रयागे एव महत्त्वरूपगुणविनिर्मुक्तविशेष्यभूतेन्द्रमात्रप्रतीत्यर्थं **स्यात् वशावत्** यथा 'सा वा एषा सर्वदेवत्या यदजा वशा वायव्यामालभेत'† इति वशानामचोदितस्यापि पशोः वशात्वगुणविनिर्मोकेण छागत्वेनैव प्रत्यायकः 'छागस्य वपाया मेदसः'‡ इति मन्त्रस्स्वीक्रियते । तथा च स्तुतशस्त्रयोर्गुणकर्मत्वपक्षेऽपि प्रदर्शितयोरैन्द्र्योः ऋचोर्नोत्कर्षप्रसङ्ग इति ॥१५॥ एवं पूर्वपक्षिणा समाहिते पुनरपि सिद्धान्ती शङ्कते—**न** ऋग्गतेनेन्द्रशब्देन प्रकृतमाहेन्द्रग्रहसंबन्धिदेवताभिधानं युज्यते **श्रुतिसमवायित्वात्** श्रुत्या विधिगतशब्देनैव देवतायाः कर्मणि समवायित्वात् संबन्धात् । प्रकृतग्रहे माहेन्द्रमिति तद्धितेन प्रतिपाद्यमानं त्यज्यमानद्रव्योद्देश्यत्वरूपं देवतात्वं महेन्द्रपद एव संगतं नार्थे तत्रोद्देश्यत्वस्योच्चार्यत्वरूपत्वात् । ततश्च महेन्द्रपदरूपदेवतायाः बृहच्छक्रादिपदेनेव शुद्धेन्द्रपदेनापि प्रत्यायनासंभवात् उत्कर्ष एव प्रसज्यत इति ॥ १६ ॥ हेत्वन्तराणि चात्राह—**व्यपदेशभेदाच्च** 'बहु दुग्धीन्द्राय देवेभ्यः बहु दुग्धि महेन्द्राय देवेभ्यः'§इति निर्दे-

*तै. सं. २-४-१४. †तै. सं. ३-४-३. ‡तै. ब्रा. ३-६-८. §तै. ब्रा. ३-२-३.

शभेदात् इन्द्रमहेन्द्रयोर्देवतयोर्भेदात् नैन्द्रपदेन महेन्द्राभिधानम् ॥ १७ ॥ **गुणश्च** इन्द्रमहेन्द्रयोर्देवतयोरैक्ये महत्त्वरूपो गुणो निर्दिश्यमानः **अनर्थकः** निष्फलः **स्यात्** । अतश्च तयोर्भेद एव ॥ १८ ॥ तयोरैक्ये **याज्यापुरोरुचोः** इन्द्रमहेन्द्रदेवत्ययोः याज्यायाः पुरोनुवाक्यायाश्च 'महानिन्द्रो य ओजसा'* 'एन्द्र सानसिं रयिं'† इति भेदेन पाठः **तथा** अनर्थकः स्यात् । अतोऽपि तयोर्भेद एव ॥ १९ ॥ वशावद्वेत्युक्तो दृष्टान्तो विषम इत्याह—**वशायां** वशात्वगुणविशिष्टद्रव्यविधावपि छागशब्देन मन्त्रे विशेष्यमात्रप्रकाशनं युक्तं **अर्थसंयोगात्** विधिगतशब्दार्थस्यैव द्रव्यस्य कर्मणि संबन्धात् देवतावत् श्रुतिसमवायित्वाभावात् ॥ २० ॥ एवं सिद्धान्तिना उत्कर्षप्रसङ्गे स्थापिते इष्टापत्त्या पूर्वपक्षी प्रतिवक्ति—**यत्र** इन्द्रो देवता तत्रास्या ऋचः उत्कर्षः **इति** एतत् **स्यात्** एव **अर्थवत्त्वात्** पूषानुमन्त्रणमन्त्रवत् अर्थानुसारेणोत्कर्षस्येष्टत्वात् ॥ २१ ॥ एवं पूर्वपक्षिणोक्ते एकदेशी शङ्कते—ऐन्द्रऋग्द्वयस्य यत्रेन्द्रो देवता तत्रोत्कर्षसंभवेऽपि तत्तद्गृहाभ्याससन्निधौ **आम्नातेषु** याम्याश्शंसति शिपिविष्टवतीश्शंसति पितृदेवत्याश्शंसति कुसुम्भकसूक्तमन्वाह अक्षिसूक्तं मण्डूकसूक्तं मूषिकासूक्तमन्वाह' इत्यादिविधिविहितमन्त्रेषु प्रकरणेऽपि यमादिदेवतानामभावात् निवेशानुपपतेः प्रकरणबहिर्भूतयमादिकर्मणि च सामान्यसंबन्धबोधकप्रमाणाभावेन उत्कर्षानुपपत्तेः कुसुम्भकादीनां चान्यत्रापि देवतात्वाभावेन सुतरां तदनुपपत्तेः **न** अर्थवत्त्वोपपत्तिः ॥२२॥ इमामाशङ्कां पूर्वपक्षी परिहरति—वाचस्तोमे 'सर्वा ऋचस्सर्वाणि यजूंषि सर्वाणि सामानि पारिप्लवं शंसति' इति विहिते शस्त्रे सर्वेषामेव अर्थवत्त्वं **दृश्यते** । तस्मादुत्कर्षाभ्युपगमे बाधकविरहात् स्तोत्रं शस्त्रं च संस्कारकमेव ॥ २३ ॥ सिद्धान्तमाह—**अपि वा** इति पूर्वपक्षव्यावृत्तिः । 'आज्यैस्स्तुवते । प्रउगं शंसति' इत्यादौ **श्रुतिसंयोगात्** गुणिनिष्ठगु-

*तै. सं. १-४-२०. †तै. सं. ३-४-११.

णाभिधानवाचकस्तौतिशंसतिधातुरूपायाः पश्श्रुतेः समभिव्याहारात् **स्तौतिशंसती** स्तोत्रशस्त्रे कर्मणी **प्रकरणे** एव **क्रियोत्पत्तिं** देवतागतगुणप्रकाशनरूपकार्यद्वारा अपूर्वोत्पत्तिं **विदध्यातां** कुरुतः। लोके स्तौतिशंसत्योः गुणिनिष्ठगुणाभिधान एव शक्ततया गुणोपसर्जनकगुण्यभिधानपरत्वे लक्षणापत्तेः देवताप्रकाशकतया संस्कारकर्मत्वानुपपत्तेः देवतागतगुणानां च कर्मासमवेततया तदभिधानरूपयोस्स्तोत्रशस्त्रयोः आत्मसमवेतापूर्वजनकतया प्रयाजादिवत्प्रधानकर्मत्वमेवेष्टव्यमिति ॥ २४ ॥

हेत्वन्तरमाह—**शब्दपृथक्त्वाच्च** 'द्वादशस्तोत्रोऽग्निष्टोमः द्वादशशस्त्रोऽग्निष्टोमः' इति द्वादशशब्देन स्तोत्राणां शस्त्राणां च भेदावगमादपि ते प्रधानकर्मणी। अपूर्वभेदेन तत्साधनानामपि तेषां भेदे हि तत् युज्यते। देवताप्रकाशनरूपस्य दृष्टसंस्कारस्य फलत्वे च प्रत्यृचं तद्भेदात् प्रकाशनत्वेनैक्ये वा स्तोत्रभेदेऽप्यैक्यावश्यकत्वात् द्वादशत्वं न युज्येत॥२५॥

प्रकाशनरूपदृष्टार्थत्वपक्षे **तद्वचनं** अग्निष्टुन्नामके क्रतौ 'आग्नेया ग्रहा भवन्ति' इति प्राकृतग्रहानुवादेन अग्निदेवताविधौ कृते प्राकृतदेवताबाधवत् तत्प्रकाशकमन्त्रबाधेन अग्निप्रकाशकमन्त्रान्तराणामर्थादेव प्राप्तेः 'आग्नेयीषु स्तुवते' इति वचनं **अनर्थकं च** स्यात्। अदृष्टार्थत्वे च प्राकृतीनामेव ऋचां प्रसक्तौ तन्निवृत्त्यर्थं तद्वचनं सार्थकम् ॥ २६ ॥

'संबद्धे वै स्तोत्रं शस्त्रं च' इति श्रुत्या प्रतिपाद्यमानस्य संबन्धस्य भेदनिबन्धनत्वात् भेदस्य च फलत एव स्वीकर्तुं न्याय्यत्वात् **अर्थः** स्तोत्रशस्त्रयोः फलं **अन्यश्च** अन्यदेवेति **प्रतीयते**। तदिदं तयोरपूर्वार्थत्वपक्ष एव युज्यते न पुनः देवताप्रकाशनरूपदृष्टार्थत्वे ॥ २७॥

**अभिधानं च** पृष्ठप्रउगादिरूपं स्तोत्रशस्त्रयोः नामधेयमपि **कर्मवत्** प्रधानकर्मणामिव दृश्यते संस्कारकर्मणां हि संस्कार्यैकनिरूपणीयतया न नामधेयापेक्षा ॥ २८ ॥ **फलनिर्वृत्तिश्च** 'स्तुतस्य स्तुतमस्यूर्जस्व.

त्पयस्वदामा स्तोत्रस्य स्तोत्रं गम्यादिन्द्रवन्तो वनामहे धुक्षीमहि प्रजामिषं सा मे सत्याऽऽशीर्यज्ञस्य भूयात् '* इति मन्त्रे भावनिष्ठान्तेन स्तुतपदेन स्तोत्रक्रियोपादानात् त्वं स्तोत्रस्य मध्ये स्तोत्रमसि तदेवंभूतं स्तोत्रस्य मध्ये स्तोत्रमूर्जस्वत्पयस्वद्भूत्वा मां आगम्यात् । इन्द्रवन्तः इन्द्रोपलक्षितदेवतावन्तो वयं त्वां याचामहै प्रजामिषं भजेमहीति । सेयं यज्ञपदलक्षितस्य स्तोत्रस्याशीः सत्या भूयादित्यर्थके स्तोत्रादेव फलस्य निष्पत्तिः प्रार्थिता न देवतातः । अतोऽपि स्तोत्रशस्त्रे प्रधानकर्मणी ॥ २९ ॥

**'आज्यैस्स्तुवते' 'प्रउगं शंसति' इत्यादिस्तोत्रशस्त्राणां यागीयदेवतादिप्रकाशकतया याज्यामन्त्रवदेव दृष्टार्थत्वात् अवघातादिवदेव संनिपत्योपकारकत्वमिति प्राप्ते—**

**लोके गुणिनिष्ठगुणतात्पर्यकाभिधानस्यैव स्तुतिपदवाच्यत्वेन प्रसिद्धत्वात् प्रगीताप्रगीतमन्त्रसाध्यगुणिनिष्ठगुणतात्पर्यकाभिधानस्यैव स्तोत्रशस्त्रपदवाच्यत्वात् एषां गुणिप्रकाशनतात्पर्यकत्वासम्भवेन नैषां मन्त्राणां गुणिप्रकाशनार्थत्वम् । अपि तु गुणप्रकाशनरूपाणां स्तोत्रशस्त्राणामात्मनिष्ठादृष्टार्थतया आरादुपकारकत्वात्तन्मन्त्राणां तदर्थत्वमेव । न च प्रयाजशेषाभिघारणन्यायेन दृष्टार्थत्वानुरोधेन लक्षणया गुणिप्रकाशनरूपत्वम् । लिङ्गादेव तादृक्त्वोपपत्तौ विधिवैयर्थ्यात् । एवं च माहेन्द्रयागसन्निधौ ऐन्द्री स्तुतिरुपपन्ना भवति । इतरथा शब्दसमवायिनी देवता विधिशब्देनैव निगमेषु वक्तव्येति महेन्द्रो नेन्द्रशब्देन शक्यते प्रकाशयितुम् । अतो यत्रेन्द्र एव देवता तत्रोत्कर्षापत्तिः; सामान्यसम्बन्धबोधकप्रमाणाभावेन वा मनोतास्थाग्निशब्दवत् लक्षणया इन्द्रपदेन महेन्द्रस्यैव प्रकाशनापत्तिः । तस्मात् प्रधानकर्मणी स्तोत्रशस्त्रे ॥ ६ ॥**

---

*तै. सं. ३-२-७.

**(७)–विधिमन्त्रयोरैकार्थ्यमैकशब्द्यात् ॥ ३० ॥ अपि वा प्रयोगसामर्थ्यान्मन्त्रोऽभिधानवाची स्यात् ॥ ३१ ॥**

**विधिमन्त्रयोः** 'यजेत स्वर्गकामः' इत्यादिविधिगताख्यातस्येव 'न ता नशन्ति न दभाति तस्करो नैना अमित्रो व्यथिरादधर्षति । देवांश्च याभिर्यजते ददाति च ज्योगित्ताभिस्सचते गोपतिस्सह'* इत्यादिमन्त्रादिगताख्यातस्यापि **ऐकार्थ्यं** विधिरूपकप्रयोजनकत्वं **ऐकशब्द्यात्** विधायकशब्दत्वस्योभयत्र समानत्वात् ॥ ३० ॥ अपि वेति पूर्वपक्षव्यावृत्तिः । **मन्त्रः** मन्त्रगतमाख्यातं **प्रयोगसामर्थ्यात्** स्वसमभिव्याहारेण यच्छब्दादिप्रयोगबलात् **अभिधानवाची** स्ववाच्याभिधेयार्थमात्रप्रतिपादकं **स्यात्** न विधायकं यच्छब्दादिसमभिव्याहारेण विधिशक्तिप्रतिबन्धात् ॥ ३१ ॥

**गुणकर्मप्रधानकर्मविधायकाख्यातद्वये निरूपिते प्रसङ्गादभिधायकं तृतीयमाख्यातं निरूप्यते मन्त्रगतानां ब्राह्मणगतानां च यच्छब्दादिसमभिव्याहृतानामपि विधायकत्वम् । सत्यामपि च प्रमाणान्तरेण प्राप्तौ अभ्यासात् कर्मभेद इति प्राप्ते—**

**'देवांश्च याभिर्यजते'* 'यस्योभयं हविरार्तिमार्छति'† इत्यादौ यच्छब्दस्य प्रातिपदिकत्वेन स्वविषये अज्ञातज्ञापनरूपविधिप्रतिबन्धकत्वं स्पष्टम् । एवं 'अग्नीदग्नीन्विहर'‡ इत्यादौ सम्बोधनविभक्तेरभिमुखश्रोतृमात्रविषयाया अभिमुखानभिमुखसाधारणविधिविरोधित्वम् । दामित्यादेरुत्तमपुरुषस्य च प्रवर्तनरूपविधिविरोधित्वम् । अतो विधायकत्वासम्भवात् मन्त्रगतानां**

*तै. ब्रा. २-४-६. †तै. ब्रा. ३-७-१. ‡तै. सं ६-३-१.

स्मारकत्वम् । ब्राह्मणगतानां निमित्तादिप्रतिपादकत्वं लक्षणयेति द्रष्टव्यम् ॥ ७ ॥

## (८)–तच्चोदकेषु मन्त्राख्या ॥ ३२ ॥

तच्चोदकेषु मन्त्राख्येतेषु या मन्त्राख्या मन्त्रपदवाच्यत्वप्रकारिका प्रसिद्धिः सा मन्त्राख्या मन्त्रलक्षणं इति मन्त्राख्यापदावृत्त्याऽर्थो बोध्यः ॥ ३२ ॥

मन्त्रप्रसङ्गात् 'अहे बुध्निय मन्त्रं मे गोपाय'* इति वेदप्रयुक्तमन्त्रशब्दार्थनिर्णयाय तल्लक्षणमुच्यते—यत्राभियुक्तानां मन्त्रपदवाच्यत्वप्रकारिका उपस्थितिर्विषयतासम्बन्धेन स मन्त्रः। वाच्यतावच्छेदकं च मन्त्रत्वमखण्डोपाधिर्वेदत्ववत् ॥ ८ ॥

## (९)–शेषे ब्राह्मणशब्दः ॥ ३३ ॥

शेषे मन्त्रातिरिक्तवेदभागे ब्राह्मणशब्दः वाचकतया वर्तते ॥

'एतद्ब्राह्मणान्येव पञ्च हवींषि'† इति वेदप्रयुक्तब्राह्मणशब्दार्थपरिज्ञानार्थं तल्लक्षणमपि प्रसङ्गादेव । मन्त्रातिरिक्तवेदत्वमेव ब्राह्मणत्वम् ॥ ९ ॥

## (१०)–अनाम्नातेष्वमन्त्रत्वमाम्नातेषु हि विभागस्स्यात् ॥ ३४ ॥

'अग्नये जुष्टं निर्वपामि'‡ इत्यादिमन्त्रे कार्यवशेन विकृतौ प्रक्षिप्यमाणमग्न्यादिपदस्थाने सूर्यादिपदमूहः । 'अग्ने महानसि ब्राह्मणभारत । असावसौ'§ इत्यादौ अदश्शब्दस्थाने प्रयुज्यमानः भार्गवच्यावनाप्नवानौर्वजामदग्न्येति पदं प्रवरः । 'अदीक्षिष्टायं ब्राह्मणः'¶ इत्येतदनन्तरं प्रयु-

*तै. ब्रा. १-२-१. †तै. ब्रा. १-७-१. ‡तै. सं. १-१-४.
§तै. ब्रा. ३-५-३. ¶तै. सं. ६-१-४.

ज्यमानं कृष्णशर्मादिपदं नामधेयम् । एषूहप्रवरनामधेयेषु **अनाम्ना-तेषु** पठ्यमानवेदानन्तःपातिषु **अमन्त्रत्वं** मन्त्रत्वाभाव एव । **आ-म्नातेषु हि** प्रत्यक्षपठितेष्वेव हि **विभागः** मन्त्रब्राह्मणविभागः **स्यात्** ॥ ३४ ॥

**ऊहप्रवरनामधेयानां सत्यपि प्रयोगकाले अर्थस्मरणार्थमु-च्चार्यत्वे मन्त्रपदैकवाक्यत्वे च स्वरूपेण वेदेऽपठितत्वात् अभि-युक्तप्रसिद्ध्यविषयत्वेन नैषां मन्त्रत्वम् । अतश्च नैषां भ्रेषे म-न्त्रभ्रेषनिमित्तं प्रायश्चित्तम् । अपि तु अङ्गभ्रेषनिमित्तकमेव ॥ १० ॥**

## (११)-तेषामृग्यत्रार्थवशेन पादव्यवस्था ॥ ३५

**तेषां** मन्त्राणां मध्ये **यत्र अर्थवशेन** गायत्र्यादिच्छन्दोवशेन **पादव्यवस्था** वर्तते सा **ऋक्** इति व्यवह्रियते ॥ ३५ ॥

**मन्त्रत्वादौ व्यापकधर्मे निरूपिते तत्प्रसङ्गादेव तदवान्तर-धर्मः ऋक्त्वादिः 'ऋचस्सामानि यजूंषि'* इति वेदप्रयुक्त-ऋगादिपदार्थपरिज्ञानार्थं निरूप्यते । पादव्यवस्थावन्मन्त्रत्वं ऋ-क्त्वम् ॥ ११ ॥**

## (१२)-गीतिषु सामाख्या ॥ ३६ ॥

**गीतिषु** गानेषु रथन्तरादिषु **सामाख्या** सामपदव्यवहारः ॥ ३६ ॥

**मन्त्रत्वसमानाधिकरणगीतित्वं सामत्वम् ॥ १२ ॥**

## (१३)-शेषे यजुश्शब्दः ॥ ३७ ॥

**शेषे** ऋक्सामभिन्ने मन्त्रजाते **यजुश्शब्दः** यजुःपदं व्यवह्रि-यते ॥ ३७ ॥

---

*तै. ब्रा. १-२-१.

ऋक्सामाभिन्नमन्त्रत्वं यजुष्ट्वम् । स्तोभाक्षरेष्वपि तत्त्वान्नातिव्याप्तिः ॥ १३ ॥

**(१४)–निगदो वा चतुर्थस्स्याद्धर्मविशेषात् ॥ ३८ ॥ व्यपदेशाच्च ॥३९॥ यजूंषि वा तद्रूपत्वात्॥ ४० ॥ वचनाद्धर्मविशेषः ॥ ४१ ॥ अर्थाच्च ॥४२॥ गुणार्थो व्यपदेशः ॥४३॥ सर्वेषामिति चेत् ॥४४॥ न ऋग्व्यपदेशात् ॥ ४५ ॥**

**निगदो** नाम वेदे ऋग्यजुस्सामभ्योऽन्यः **चतुर्थः** प्रकारः **स्यात्** कुतः? **धर्मविशेषात्** "उच्चैर् ऋचा क्रियते । उपांशु यजुषा । उच्चैस्साम्ना । उच्चैर्निगदेन" इत्यनेन निगदस्य यजुर्धर्मादतिरिक्तस्य उच्चैस्त्वस्य धर्मविशेषस्योपदेशात् यजुरपेक्षया भेदस्य तत्रावश्यकत्वात् । पादव्यवस्थाविरहेण ऋक्त्वासंभवात् गीतिरूपत्वाभावेन सामत्वस्याप्यभावात् ॥ ३८ ॥ **व्यपदेशाच्च** "इमे निगदाः इमे यजूंषि" इति भिन्ननाम्ना व्यवहारादपि यजुषोऽन्यो निगदः ॥ ३९ ॥ सिद्धान्तमाह— **यजूंषि वा** निगदाः यजूंष्येव । कुतः **तद्रूपत्वात्** ऋक्सामभिन्नमन्त्रत्वरूपयजुर्लक्षणवत्त्वात् ॥ ४० ॥ धर्मविशेषादिति हेतुं परिहरति— **धर्मविशेषः** उच्चैस्त्वं **वचनात्** "उच्चैर्निगदेन" इति वचनबलादेव यजूरूपत्वेऽपि निगदस्योपपद्यते । न च "उपांशु यजुषा" इत्यनेन विरोधः । तत्र यजुःपदस्य यजुर्वेदपरतायाः "वेदो वा प्रायदर्शनात्"* इत्यत्र वक्ष्यमाणतया यजुर्वेदविहितकर्माङ्गमन्त्रोद्देशेनैव तद्वचनेन उपांशुत्वविधानात् "उच्चैर्निगदेन" इति विशेषशास्त्रानुसारेण विशेषविषयातिरिक्तविषयताया एव सामान्यशास्त्रस्य सर्वैः स्वीकार्यत्वात् ॥ ४१ ॥

---

*३-३-२.

**अर्थाच्च** परप्रत्यायनरूपदृष्टार्थत्वानुसारादपि निगदेषूच्चैस्त्वरूपो धर्मविशेषो युक्तः । न हि "अग्नीदग्नीन्विहर"* इत्यादिनिगदानां उपांशुप्रयोगे परप्रत्यायनं घटते ॥ ४२ ॥ व्यपदेशादिति हेतुं परिहरति—यजुषां सतामेव निगद इति **व्यपदेशः गुणार्थः** नितरां प्रकर्षेण गद्यमानत्वरूपगुणयोगनिमित्तकः । भवति हि ब्राह्मणानां सतामेव परिव्राजक इति विशेषतो व्यपदेशः ॥ ४३ ॥ आशङ्क्य समाधत्ते—निगदपदस्य प्रकर्षेण गद्यमानत्वरूपयोगनिमित्तकत्वे ऋचां साम्नामपि उच्चैस्त्वरूपप्रकर्षेण गद्यमानतया **सर्वेषामपि** ऋचां साम्नां च निगदव्यवहार्यता स्यादिति **चेत् न ऋग्व्यपदेशात्** "अयाज्या वै निगदा ऋचैव यजति" इति ऋचां निगदभेदव्यपदेशात् गदतेरपादबद्धाक्षरसमूहवाचकतया उपांशुभिन्नस्वरयुक्तापादबद्धमन्त्राक्षरत्वस्यैव शक्यतावच्छेदकत्वस्वीकारात् ऋगादिषु अतिप्रसङ्गविरहात् । वस्तुतस्तु—'नमः प्रवक्त्रे' इत्यादिनिगदेषूपांशुपठ्यमानेष्वव्याप्तिप्रसङ्गात् यजुष्ट्वव्याप्यं निगदत्वं जातिरखण्डोपाधिर्वेति स्वीकार्यम् ॥ ४४–४५ ॥

**निगदसंज्ञकानां मन्त्राणां संज्ञाभेदात् 'उपांशु यजुषा । उच्चैर्निगदेन' इति विप्रतिषिद्धधर्मभेदाच्च भेदो यजुर्भ्य इति प्राप्ते—**

**'ऋचस्सामानि यजूंषि'† इति वेदे त्रयाणामेव मन्त्रभेदानां सङ्कीर्तनात् "मन्त्र एव खल्वयं निगदभूतो भवति तस्माद्यजुः"‡ इति च लिङ्गान्निगदानां यजुष्ट्वमेव । संज्ञा तु ब्राह्मणपरिव्राजकन्यायेन अभेदेऽप्युपपन्ना । निगदत्वं च यजुष्ट्वावान्तरधर्मः । न तु नितरामुपांशुस्वरातिरिक्तस्वरेण गद्यमानत्वम् । "नमः प्रवक्त्रे" इत्यादिनिगदेषु उपांशु पठ्यमानेष्वव्याप्तेः । न च धर्मभेदात् भेदः । विशेषविहितेनोच्चैस्त्वेन**

*तै. सं. ६-३-१. †तै. आ. १-२-१. ‡षड्विंशब्राह्मणे, १–२.

सामान्यविहितस्योपांशुत्वस्य अन्यपरत्वावसायात् । 'उपांशु यजुषा' इत्यस्य वेदोपक्रमानुरोधेन यजुर्वेदविहितकर्ममात्रे उपांशुत्वविधायकत्वस्य वक्ष्यमाणत्वेन भवन्मतेऽपि सङ्कोचस्यावश्यकत्वाच्च । न चैवमुपक्रमवशेन यजुःपदे वेदलक्षणावत् निगदपदेऽपि यजुर्वेदलक्षणापत्तेः एकस्मिन् कर्मणि धर्मद्वयविकल्पापत्तिः । 'वायोर्यजुर्वेदः' इत्युपक्रमस्य यजुःपद एव लक्षणातात्पर्यग्राहकत्वात् । अन्यथा 'वायोर्निगदवेदः' इत्यपि किं नावक्ष्यत् । अतश्च 'उच्चैर्निगदेन' इति स्वतन्त्र एव निरर्थवादकोऽयमुच्चैस्त्वनियमविधिः विशेषविहितातिरिक्तनिगदोद्देशेन। तेषु हि परप्रत्यायनरूपकार्यवशेन उपांशुत्वनिवृत्तावपि मन्द्राद्यनेकस्वरप्राप्तौ उच्चैस्त्वनियमो नानुपपन्नः । अतो निगदभ्रेषेऽपि यजुर्भ्रेषनिमित्तप्रायश्चित्तम् । आश्विनादौ पारिप्लवशंसनं वा ॥ १४ ॥

## (१५)–अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात् ॥ ४६ ॥

यत् पदजातं **अर्थैकत्वात्** भिन्नप्रतीतिविषयानेकमुख्यविशेष्यराहित्यमनुसृत्य **एकं वाक्यं** इत्युच्यते लोके तत् विभागे अन्वीयमानयोः पदार्थयोरनन्वये **साकाङ्क्षं** अनिवृत्ताकाङ्क्षं **स्याच्चेत्** एव एकवाक्यं स्यात् । तादृशे चैकैकवाक्ये पर्याप्तं यजुष्ट्वम् ॥ ४६ ॥

यजुष्ट्वं यावत्सु पदेषु वाक्यत्वं पर्याप्तं तावत्सु पर्याप्तम् । न तु वाक्यसमूहे । तस्य विनियोगानर्हत्वात् । वाक्यत्वं च यत्रार्थैकत्वं विभज्यमानपदसाकांक्षत्वं च तावत्सु । अर्थैकत्वं च भिन्नप्रतीतिविषयानेकमुख्यविशेष्यराहित्यम् । अन्यस्य दुर्व-

चत्वात् । अस्ति च गामानयेत्यादौ मुख्यविशेष्यभूताया भावनाया एकत्वात् तत् । दर्शपूर्णमासामनहोमादिवाक्येषु च भावनानामनेकासामपि भिन्नप्रतीतिविषयत्वाभावात् व्रीहियववाक्ययोः "भगो वां विभजतु" इत्यादौ च सत्यपि भिन्नप्रतीतिविषयत्वे मुख्यविशेष्यभूताया भावनाया एकत्वादर्थैकत्वम् । अतस्तत्रैकवाक्यत्वव्यावृत्त्यर्थं द्वितीयमन्वीयमानयोः पदार्थयोरनन्वयेऽनिवृत्ताकाङ्क्षत्वरूपं विशेषणम् । 'स्योनं ते सदनं करोमि । तस्मिन् सीद'* इत्यत्रानन्वये साकाङ्क्षत्वेऽपि भिन्नवाक्यत्वादाद्यं विशेषणम् ॥ १५ ॥

## (१६)–समेषु वाक्यभेदस्स्यात् ॥ ४७ ॥

**समेषु** अन्योन्यनिराकाङ्क्षेषु "इषे त्वोर्जे त्वा"† "भगो वां विभजतु । पूषा वां विभजतु" इत्यादौ **वाक्यभेदः** एव **स्यात्** ॥४७॥

यत्र तु नोक्तविधं विभज्यमानसाकाङ्क्षत्वं यथा "इषे त्वा ऊर्जे त्वा"† इत्यनयोः यथा वा 'आयुर्यज्ञेन कल्पतां प्राणो यज्ञेन कल्पतां'‡ इत्यादौ तत्र सत्यप्यर्थैकत्वे 'भगो वां' इत्यादिवन्मन्त्रभेदः । किमुत यदा विनियोगानुसारेणार्थभेद एव प्रमाणवान् । तदा मन्त्रैकत्वे प्रमाणाभाव एव । अत्र हि 'इषे त्वेति शाखां छिनत्ति ऊर्जे त्वेत्युन्मार्ष्टि' इति विनियोगभेदात् इषे त्वेति छिनद्मि इति क्रियापदाध्याहारेण भिन्नमेव मुख्यविशेष्यम् । एवं 'ऊर्जे त्वा उन्मार्ज्मि' इति । एवं 'कृत्तीर्वाचयाति' इति वहुवचनात् कृत्तिभेदावगमेनार्थभेदः । अतश्चात्र यजुर्भेद इति पूर्वोक्तप्रत्युदाहरणमात्रम् ॥ १६ ॥

---

*तै. ब्रा. ३-७-५. †तै. सं. १-१-१. ‡तै. सं. १-७-९.

## (१७)–अनुषङ्गो वाक्यपरिसमाप्तिस्सर्वेषु तुल्ययोगित्वात् ॥ ४८ ॥

"या ते अग्ने अयाशया तनूर्वर्षिष्ठा गह्वरेष्ठोग्रं वचो अपावधीं त्वेषं वचो अपावधीं स्वाहा"* इत्येतदनन्तरमाम्नातयोः "या ते अग्ने रजाशया या ते अग्ने हराशया"* इति मन्त्रयोः **वाक्यपरिसमाप्तिः** समाप्तवाक्यतारूपनिराकांक्षताहेतुः **अनुषङ्ग** एव "तनूः"* इत्यादिशेषस्य **सर्वेषु** त्रिष्वपि मन्त्रेषु आकांक्षायोग्यतासंनिधिबलात् **तुल्ययोगित्वात्** असंबन्धपदव्यवधानविरहेण तुल्यमेव संबध्यमानत्वात् ॥ ४८ ॥

**यत्र बहूनां शेषापेक्षिणामाद्यस्यानन्तरं शेषस्समाम्नातः यथा 'या ते अग्ने अयाशया'* इत्यस्यानन्तरं 'तनूर्वर्षिष्ठा'* इत्यादिश्शेषः उत्तरौ मन्त्रौ 'या ते अग्ने रजाशया या ते अग्ने हराशया'* इति तत्रोत्तरयोश्शेषापेक्षिणोरयमेव शेषोऽनुषज्यते। न तु लौकिकोऽध्याह्रियते, अक्लृप्तत्वात्। न चासावेकत्र निबद्धोऽन्यत्र नेतुं न शक्यः; सर्वार्थत्वेनाम्नानात्। न चाद्यस्यानन्तरमपेक्षितदेशे पठितत्वात्तदर्थमाम्नानं शङ्क्यम्। आकाङ्क्षायोग्यतयोरविशिष्टत्वात्। आसत्तेरपि असम्बन्धिपदाव्यवधानरूपायास्सर्वत्राविशिष्टत्वाच्च। न ह्यानन्तर्यमेव सम्बन्धकारणं; तदभावेऽपि शाब्दबोधस्यासम्बन्धिपदव्यवधानाभावे आनुभाविकत्वात्। सर्वाव्यवधानस्य सकृत्पाठे अशक्यतया आकांक्षादित्रयेणैव च सर्वार्थत्वज्ञानोपपत्तेः आवृत्तिपाठस्य सर्वान्तपाठस्य च आपादयितुमशक्यत्वात् अपेक्षितदेशपाठस्य च लिङ्गेनैव ज्ञातुं शक्यत्वात् आम्नानस्य सर्वार्थत्वावगतेरनुषङ्ग एव। न चैवमव्यव-**

*तै. सं. १.२-११.

धानस्याकारणत्वे पदश्रुत्या यागस्यैव करणत्वानापत्तिः; तस्याकारणत्वेऽपि सन्देहे नियामकत्वमात्राङ्गीकारात् । प्रकृते तु आकांक्षादिवशेन सर्वार्थत्वस्यैव प्रतीतेः नियामकाकांक्षाऽभावेनानुषङ्ग एव युक्तः । अतश्च तद्भ्रेषेऽपि यजुर्भ्रेषप्रायश्चित्तमेव ॥

यत्र निराकाङ्क्षाणामेव शेषिणां बहूनामन्ते सापेक्षश्शेषस्समाम्नातः यथा 'चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु देवस्त्वा सविता पुनातु'* इत्येतेषामन्ते 'अच्छिद्रेण पवित्रेण'* इति तत्रापि सन्निधियोग्यत्वयोरविशेषात् सर्वत्रानुषङ्गः । न चान्यथाऽप्याकाङ्क्षया एकसम्बन्धेनैव चरितार्थत्वात् आनन्तर्यस्य नियामकत्वोपपत्तिः । शेषाकाङ्क्षयाऽऽकाङ्क्षोत्थापनेऽपि प्रधानत्वात् शेषिणां विनिगमनाविरहेण सर्वेषामेव शेषग्राहकत्वावगतेरानन्तर्यस्यानियामकत्वात् । अत एवानेकहविष्कविकृतिसन्निधिपठितोपहोमानां सर्वार्थत्वमेव । अतश्च मुखनाभिगुल्फप्रदेशपावनार्थेषु एतेषु मन्त्रेषु शेषोऽप्यनुषज्यते; प्रतिप्रधानावृत्तिन्यायात् ॥ १७ ॥

## (१८)—व्यवायान्नानुषज्येत ॥ ४९ ॥

'सं ते प्राणो वायुना गच्छतां संयजत्रैरङ्गानि संयज्ञपतिराशिषा'† इत्यादौ **व्यवायात्** बहुवचनान्तेन असंबन्धिपदेन व्यवहितत्वात् संगच्छतामित्येतत् यज्ञपतिरित्यत्र **नानुषज्येत** ॥ ४९ ॥

यत्र त्वसम्बन्धिपदव्यवधानं यथा 'सं ते वायुर्वातेन गच्छतां सं यजत्रैरङ्गानि सं यज्ञपतिराशिषा'† इत्यत्र गच्छतामित्यस्य आशिषेत्यत्र नानुषङ्गः अङ्गानि इत्यत्रैकवचनान्तस्या-

*तै. सं. १-२-१. †तै. सं. १-३-८.

नन्वयेन बहुवचनान्तस्यैव गच्छन्तामित्यस्याध्याहारावश्यम्भावात्। वस्तुतस्तु—बहुवचनस्यैवाध्याहारेण गमिधातोरनुषङ्ग एवेति एकवचनस्यैवानुषङ्गप्रत्युदाहरणमिदम् ॥१८॥

इति खण्डदेवकृतौ भाट्टदीपिकायां
द्वितीयस्याध्यायस्य प्रथमः पादः

---

## [१]—शब्दान्तरे कर्मभेदः कृतानुबन्धत्वात्॥१॥

प्रकरणान्तरातिरिक्तशब्दान्तरादिरूपभेदकप्रमाणाधीनभेदनिरूपणमेतत्पादार्थः ॥ ज्योतिष्टोमाद्येकप्रकरणस्थेषु "सोमेन यजेत । दाक्षिणानि जुहोति । हिरण्यमात्रेयाय ददाति" इत्यादिषु **शब्दान्तरे** अपर्यायधातुभेदे सति **कर्मभेदः** कर्मणः क्रियायाः भावनायाः भेदः कुतः? **कृतानुबन्धत्वात्** कृतः अनुबन्धः व्यावर्तनं येन तत्त्वात्। भावनाविशेषणीभूतधात्वर्थभेदेन भावनाया भेदः कार्यकारणयोरेकवैजात्येनापरवैजात्यस्यावश्यकत्वादिति भावः ॥ १ ॥

भावनाभेदफलीभूतापूर्वभेदोपयोगिभावार्थाधिकरणरूपोपोद्घातप्रसक्तानुप्रसक्तादौ समाप्ते अधुना शब्दान्तराद्भेदोऽभिधीयते। ज्योतिष्टोमादिप्रकरणस्थानां 'सोमेन यजेत हिरण्यमात्रेयाय ददाति दाक्षिणानि जुहोति' इत्यादीनां विभिन्नधात्वर्थानां भावनाभेदबोधकत्वमस्ति न वेति चिन्तायां 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यनेन स्वर्गकर्मकभावनामात्रे लाघवाद्विहिते तदनुवादेन सोमादिवाक्यैस्सोमादिविशिष्टयागादिविधानात्। सर्वेषां चोत्पन्नशिष्टत्वेन गुणन्यायाभावात् न भावनाभेदः। न चानेकधात्वर्थानामेकजातीययत्नजन्यत्वासम्भवः बाधकाभावात्

न च प्रकृत्यर्थान्वितस्वार्थाभिधायकत्वात्प्रत्ययानां फलवाक्यस्थे- नाख्यातेन धात्वर्थानवच्छिन्नशुद्धभावनाविधानानुपपत्तिः आख्या- तेन धात्वर्थावच्छिन्नभावनाभिधानेऽपि तदंशे विधिव्यापाराभा- वात्। अत एव गुणफलसम्बन्धस्थले धात्वर्थानुवादेनापि भावनामात्रविधानम्। अत एव च फलवाक्ये यजिः प्रकृतस- र्वधात्वर्थोपलक्षणः ज्योतिष्टोमपदं च छत्रिन्यायेन सर्वनामधेय- मिति प्राप्ते—

कार्यमात्रवृत्तिधर्मस्य विजातीययागत्वादेः कञ्चित्प्रति का- र्यतावच्छेदकत्वावश्यकत्वेन तदवच्छिन्नं प्रति उपस्थितस्य यत्न- स्यैव वैजात्यपरिकल्पनया विजातीययत्नत्वेनैव कारणत्वम्। अतश्च प्रतिधात्वर्थवैजात्याद्भावनावैजात्यसिद्धिः। विभिन्नधा- त्वर्थत्वमेव च शब्दान्तरत्वम्। अत एव 'तिस्र आहुतीर्जु- होति'* इत्यत्र सङ्ख्यया होमभेदे सिद्धे शब्दान्तरादेव उक्त- विधाद्भावनाभेदः न तु मूलोक्तादिति ध्येयम्। किञ्च प्राप्तभा- वनानुवादेन सोमयागाद्यनेकविधाने वाक्यभेदापत्तेः तत्तद्गुणधा- त्वर्थोभयविशिष्टभावनाविधानमेव तत्तद्वाक्येऽङ्गीकर्तव्यम्। तत्र च चातुर्थिकन्यायेन ज्योतिष्टोमपदाभिधेयस्य सोमयागस्यैव स्वर्गवाक्येन फलसम्बन्धः अन्येषां तु तदङ्गत्वम्। न च स्व- र्गवाक्य एव यागभावनोत्पत्तिपूर्वकः फलसम्बन्धः सोमवाक्येन तु सोममात्रविधानमिति वाच्यम्। स्वर्गवाक्ये राजसूयन्यायेन इष्टिपशुयागानामेव फलसम्बन्धापत्तौ यागान्तरविधाने प्रमाणा- भावात् ततश्च पश्वाद्यवरुद्धे सोमविध्यनुपपत्तेः सोमवाक्ये कर्मान्तरविध्यवश्यम्भावः।

प्रयोजनं सोमयागमात्रप्राधान्यम्॥ १॥

*तै, ब्रा. १-३-१०.

## [२]–एकस्यैवं पुनश्श्रुतिरविशेषादनर्थकं हि स्यात् ॥ २ ॥

दर्शपूर्णमासप्रकरणस्थे "समिधो यजति तनूनपातं यजति"* इत्यादौ एकस्य यजिधातोः अविशेषात् गुणविधानतात्पर्यादिविशेषाभावेन या पुनश्श्रुतिः पुनश्श्रवणं साऽपि एवं कर्मभेदिका अन्यथा तथा पुनश्श्रवणं अनर्थकं हि स्यात् ॥ २ ॥

दर्शपूर्णमासप्रकरणस्थे 'समिधो यजति । तनूनपातं यजति । इडो यजति । बर्हिर्यजति । स्वाहाकारं यजति'* इत्यादौ यागस्यापि प्रत्यभिज्ञायमानत्वेन अभेदान्न भावनाभेदः । न चाभ्यासाद्भेदो यागस्य । अभ्यासस्यैकत्वसाधकत्वेन विरुद्धत्वात् । न च विधिपुनश्श्रवणरूपस्याभ्यासस्य विधेययागादिभेदकत्वम् । 'दध्ना जुहोति' इतिवत् विधेर्देवतारूपगुणसङ्क्रान्तशक्तिकत्वेन यागविषयत्वाभावात् । न च यागोत्पत्तिवाक्यस्थगुणावरोधान्नोत्पन्नवाक्येन गुणविधिः । अगत्या प्राथमिकवाक्यस्थसमित्पदस्य तत्प्रख्यन्यायेन नामधेयत्वाङ्गीकारात् । वस्तुतस्तु—यदि याज्यामन्त्रवर्णात्समित्प्राप्तिः तदा सा तनूनपादादीनामप्यविशिष्टा । अत उपांशुयाजानुवादेन विद्वद्वाक्यविहितकर्मानुवादेन वा पञ्चस्वपि देवताविधिः । न च सम्भवत्प्राप्तिकता । याज्यामन्त्रवदनुमन्त्रणमन्त्रेभ्योपि विकल्पेन वसन्तादिदेवताप्राप्तिसंभवेन एतेषां नियमविधित्वोपपत्तेः । अतश्चानन्यपरविधिपुनश्श्रवणाभावान्न कर्मभेद इति प्राप्ते—

उभयाकाङ्क्षाबललभ्ययाज्यामन्त्राणामेव देवताकल्पकत्वस्य पुरस्स्फूर्तिकत्वेन अन्यतराकाङ्क्षाबललभ्यानुमन्त्रणमन्त्रेभ्यो देवता-

*तै. सं. २-६-१.

कल्पकत्वानुपपत्तेः न समिदादिपदानां देवतानियामकत्वम् । अतश्चोपपदार्थस्य सम्भवत्प्राप्तिकत्वात् पदश्रुत्यादिना विधेर्धात्वर्थभावनाविषयत्वप्रतीतेर्विहितविधानायोगात् विधेयतावच्छेदकतया वैजात्यसिद्धिः । न चैवं तत्प्रख्यंन्यायेन समिदादिपदानां नामधेयत्वात् संज्ञयैव भेदसिद्धिः । तत्प्रख्यन्यायेन गुणविधित्वनिराकरणे नामधेयकार्यस्यैकेनैव एकस्मिन् कर्मणि सिद्धेरनेकेषां नामधेयानां वैयर्थ्यप्रसङ्गेन समिदादिपदानां गुणानुवादकत्वेनैव उपपत्तेर्नामत्वानिर्णयात् । सिद्धे त्वभ्यासेन कर्मभेदे एकैककर्मणः एकैकं नामधेयं सार्थकमिति नामत्वनिर्णयः ॥

प्रयोजनमुत्तराधिकरणप्रयोजनम् । प्रयोजनान्तराणि कौस्तुभे स्पष्टानि ॥ २ ॥

**[३]—प्रकरणं तु पौर्णमास्यां रूपावचनात्॥३॥ विशेषदर्शनाच्च पूर्वेषां समेषु ह्यप्रवृत्तिस्स्यात्॥ ४॥ गुणस्तु श्रुतिसंयोगात् ॥ ५ ॥ चोदना वा गुणानां युगपच्छासनाच्चोदिते हि तदर्थत्वात्तस्य तस्योपदिश्येत ॥ ६ ॥ व्यपदेशश्च तद्वत् ॥ ७ ॥ लिङ्गदर्शनाच्च ॥ ८ ॥**

सिद्धान्तेनोपक्रमते—**पौर्णमास्यां** पौर्णमास्युपलक्षिते "य एवं विद्वान्पौर्णमासीं यजते...य एवं विद्वानमावास्यां यजते"* इति वाक्ये **प्रकरणं तु** आग्नेयादीनां षण्णां यागानामनुवाद एव न तु कस्यचित्कर्मणो विधायकं कुतः **रूपावचनात्** यागस्य हि रूपं द्रव्यं देवता

*तै. सं. १-६-९.

च तयोरनभिधानात् । न खलु रूपं विना यागस्य कर्तव्यताऽध्यवसातुं शक्यते । आग्नेयादीनां अनुवादस्तु युज्यते तेषां रूपवत्त्वात् । पौर्णमास्यादिकालयोगितया श्रुतत्वाच्च । पूर्वत्र हि "यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति"* "तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्" "ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्"† "ऐन्द्रं दध्यमावास्यायां"‡ 'ऐन्द्रं पयोऽमावास्यायां' इत्येषु वाक्येषु हि आग्नेयोपांशुयाजाग्नीषोमीयमानाय्याः कालसंयुक्ततया विहिताः ॥ ३ ॥ इतश्च तत्रानुवाद एवेत्याह—**पूर्वेषां विशेषदर्शनाच्च** विद्वद्वाक्यपूर्ववाक्यविहितानां आग्नेयादीनां ये विशेषाः धर्माः प्रयाजादयः तेषां सौर्यादिषु विकृतिषु "प्रयाजेप्रयाजे कृष्णलं जुहोति"§ इत्यत्र दर्शनादपि विद्वद्वाक्ये अनुवाद एव । अन्यथा तद्वाक्यस्य विधायकत्वे प्रयाजादीनामप्याग्नेयादिवत्प्राधान्यापत्तिः । ततश्च प्रधानतया आग्नेयादिभिः **समेषु** तुल्येषु **हि** तेषु प्रयाजादिषु तेषां प्रयाजादीनां विकृतिषु **अप्रवृत्तिः** अनतिदेशः **स्यात्** प्रधानस्यानतिदेशात् । तथा च सति विकृतौ प्रयाजदर्शनमुपदर्शितं विरुध्येत ॥ ४ ॥ अस्मिन् सिद्धान्ते शङ्कते—"यदाग्नेयः"* इत्यादिवाक्ये विद्वद्वाक्यविहितकर्मानुवादेन **गुणस्तु** अग्निदेवतापुरोडाशद्रव्यादिरूपो गुण एव विधीयते **श्रुतिसंयोगात्** श्रुतेः शब्दस्य पौर्णमास्यादिरूपस्य विद्वद्वाक्यविहितकर्मानुवादक्षमस्य तत्र विद्यमानत्वात् । तथा च रूपलाभसंभवात् विद्वद्वाक्यं कर्मविधायकमेव । अस्यैव कर्मणः प्रयाजादिकमङ्गमिति विकृतिषु प्रयाजादिदर्शनस्यापि नानुपपत्तिः ॥ ५ ॥ इमामाशङ्कां परिहरति—"यदाग्नेयः"* इत्यादिवाक्यं **चोदना वा** कर्मचोदनैव तथासति **गुणानां** द्रव्यदेवतादिरूपाणां बहूनां **युगपत् शास्त्रात्** शासनात् अनेकगुणविशिष्टकर्मविधाने गुणानां कर्मणश्च युगपद्विधानसंभवः ।

---

*तै. सं. २-६-३. †तै. सं. २-५-२. ‡तै. सं. २-५-४. §तै. सं. २-३-२.

प्राप्तकर्मानुवादेन बहूनां गुणानां विधानं एकेन वाक्येन युगपत्कर्तुमशक्यमिति भावः । तदेव स्पष्टयति—**चोदिते हि** वाक्यान्तरविहिते हि कर्मणि अनूद्यमाने **तदर्थत्वात्** प्रधानभूतकर्मार्थत्वाद्गुणानां **तस्यतस्य** गुणस्य विधानार्थं प्रधानं कर्म पृथक्पृथगेव **उपदिश्येत** "सन्ततमाघारयति । ऋजुमाघारयति"* इत्यादिवत् । तथा च प्राप्तकर्मानुवादेनानेकगुणविधानं वाक्यैक्यं नोपपद्यत इति भावः ॥ ६ ॥ **व्यपदेशश्च** "उग्राणि ह वा एतानि हवींष्यमावास्यायां संभ्रियन्ते आग्नेयं प्रथममैन्द्रे उत्तरे" इति त्रयाणां उग्रत्वापरपर्यायप्राधान्यव्यपदेशोऽपि **तद्वत्** न युज्येत । "यदाग्नेयः"† इति वाक्यस्य भवत्पक्षे गुणविधित्वेन आग्नेयस्य प्राधान्याभावात् । तस्माद्विद्वद्वाक्यमाग्नेयादीनामनुवादकमेव ॥ ७ ॥ **लिङ्गदर्शनाच्च** "चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते त्रयोदशामावास्यायां" इत्येवमाहवनीयगतवषट्काराहुतिपरिगणनस्य लिङ्गस्य दर्शनादपि "यदाग्नेयः"† इत्यादिवाक्यानि कर्मविधायकानि । विद्वद्वाक्यं त्वनुवादः । विद्वद्वाक्यस्य कर्मविधायकत्वे पौर्णमास्यामाहुतीनां पञ्चदशत्वं अमावास्यायां चतुर्दशत्वं च स्यात् । सिद्धान्ते तु पञ्च प्रयाजा द्वावाज्यभागौ स्विष्टकृत् त्रयोऽनूयाजाः पौर्णमास्यां प्रधानाहुतित्रयम् । अमावास्यायां सान्नाय्यस्य सहानुष्ठानात् प्रधानाहुतिद्वयमिति चतुर्दशत्वत्रयोदशत्वानुवादो नानुपपन्नः ॥ ८ ॥

**तत्रत्य एव 'य एवं विद्वान् पौर्णमासीं यजते यावदुक्थ्येनोपाप्नोति तावदुपाप्नोति य एवं विद्वानमावास्यां यजते यावदतिरात्रेण'‡ इत्यादिवाक्येऽप्यभ्यासात्कर्मभेदः । न चायं लट् लेट्ऽपि वा यच्छब्देन विधिप्रतिबन्धात् विधिपुनश्श्रुत्यभावः । 'समिधो यजति'§ इतिवल्लेट्त्वावगतेः । यच्छब्दस्य 'यो दीक्षितः' इतिवल्ले-**

*तै. सं. २-५-११. †तै. सं. २-६-३. ‡तै. सं. १-६-९. §तै. सं. २-६-१.

दनक्रियामात्रविधिप्रतिबन्धकत्वात् । अत एव पौर्णमास्यमावास्यापदमपि नामधेयम् । 'पौर्णमास्यां पौर्णमास्या' इति वाक्यद्वयेन एतद्वाक्यविहितकर्मणोरेव कालविधानात् । न च रूपाभावः 'वार्त्रघ्नी पूर्णमासेऽनूच्येते वृधन्वती अमावास्यायाम्'* इति वचनेन आज्यभागक्रमाम्नातानामपि मन्त्राणां क्रमं बाधित्वा एतद्वाक्यविहितकर्माङ्गत्वेन विधानात् । मान्त्रवर्णिकाग्नीषोमदेवतायाः 'सर्वस्मै वा एतद्यज्ञाय गृह्यते । यद्ध्रुवायामाज्यम्'† इति वचनेन च द्रव्यस्य प्राप्तत्वात् । अथवा—आग्नेयादिवाक्यैरेव पौर्णमास्यमावास्यादिपदोपस्थापितैतद्वाक्यविहितकर्मानुवादेन द्रव्यदेवताविधानात् रूपलाभोपपत्तिः । न चानेकविधानाद्वाक्यभेदः । तद्धितेन देवताविशिष्टद्रव्यवाचिना परस्परान्वयस्य व्युत्पन्नत्वेन विशिष्टविध्युपपत्तेः । प्रकारान्तरेण रूपलाभस्तु कौस्तुभ एव द्रष्टव्यः । सर्वथा विद्वद्वाक्ये कर्मान्तरविधिः । एवं च 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति फलवाक्येन प्रयाजादिसाधारण्येन सर्वेषामाग्नेयादीनामेतद्वाक्यविहितकर्मणोश्च प्रथमपक्षे फलसम्बन्धः । द्वितीये तु तत्साधारण्येन तयोरेव दर्शपूर्णमासप्रातिपदिकस्य कालयोगिषु प्रसिद्धत्वेऽपि द्विवचनस्याप्रसिद्धत्वात् आज्यभागादिषु तस्य प्रसिद्धत्वेऽपि प्रातिपदिकस्याप्रसिद्धत्वात् । अतः राजसूयन्यायेन नाम्नस्सङ्कोचकत्वानुपपत्तेः प्रकरणात् सर्वेषामेव यागानां फलसम्बन्धः । पाशाधिकरणन्यायेन द्विवचनस्याप्रसिद्धत्वेऽपि प्रातिपदिकमात्रप्रसिद्ध्या कालयोगिनामेव वा अनयोरेव वा द्वित्वस्यापि कथञ्चिदुपपत्तेः फलसम्बन्धः । न तु षण्णामेवाग्नेयादीनामिति प्राप्ते—

---

*तै. सं. २-५-२. †तै. ब्रा. ३-३-५.

लिङ्गक्रमाभ्यामाज्यभागाङ्गत्वेन वार्त्रघ्नीवृधन्वतीमन्त्राणां प्राप्तानामपेक्षितव्यवस्थाविधायकत्वेन वार्त्रघ्नीवाक्यस्योपपत्तौ नानपेक्षितगौरवापादकविद्वद्वाक्यविहितकर्माङ्गताबोधकत्वम् । अत एव कालद्वारेण कर्मद्वारेण वा व्यवस्थापरमेव तदिति वक्ष्यते। अतश्च न तावदनेन देवताप्राप्तिः । नाप्याग्नेयादिवाक्येन प्राप्तकर्मानुवादेन अनेकगुणविधाने वाक्यभेदात्। विधिफलस्य हि अज्ञातज्ञापनस्यैकविषयत्वमेव सर्वत्र क्लृप्तम् । तस्यानेकविषयत्वे बाधप्रसङ्गः । न च विशिष्टविधानादवाक्यभेदः। विशिष्टस्याव्युत्पन्नत्वात् । उक्तं ह्येतत्कारकतासम्बन्धेन यत्र तद्धितादिवृत्तिः न तत्र परस्पराऽन्वयः, अपि तु यत्राश्वाभिधानीमित्यादौ तदतिरिक्तसम्बन्धेन वृत्तिस्तत्रैव स इति । अतश्च प्रकृते देवतात्वस्य सम्प्रदानकारकत्वात् परस्परसम्बन्धानुपपत्तेः उभयविशिष्टकर्मान्तरविधानमेवावश्यकम् । अतश्च रूपाभावस्तदवस्थ एव । अस्तु वा कथञ्चिद्रूपलाभः। तथाऽपि न विद्वद्वाक्ये कर्मविधिः। यच्छब्देन विधिशक्तिप्रतिबन्धेन विधिपुनश्श्रवणस्यैवाभावात् । न च तस्य वेदनक्रियामात्रविधिप्रतिबन्धकत्वम् । यच्छब्दादेस्तच्छब्दाबाधिकप्रतिबन्धकत्वस्यैव व्युत्पत्तिसिद्धत्वात् । किञ्च—अन्यपरत्वादपि नाभ्यासस्वरूपसिद्धिः। तथा हि—तत्र विद्वद्वाक्यस्थलङन्तयजिना प्रकृतत्वादाग्नेयादयस्त्रय एव तत्तत्कालयोगिनस्तत्तन्नामधेयवशादनूद्यन्ते । तत्प्रयोजनं च तन्त्रेण यजिना अनेकोपादानात्समुदायसिद्धिः। तस्यापि प्रयोजनं फलवाक्ये षण्णामेव फलसम्बन्धसिद्धिः प्रातिपदिकस्य षट्सु कालयोगेन प्रसिद्धत्वात् द्विवचनस्य च स्वशक्याश्रयसमुदायघटकसमुदायिवृत्तित्वसम्बन्धेन बहुत्वलक्षणार्थत्वात् लक्षणातात्पर्यग्राहकमेव च शक्यसम्बन्धघटकसमुदायसि-

द्विद्वारा विद्वद्वाक्यद्वयम् । अन्यथा हि विद्वद्वाक्याभावे आग्नेयद्वयस्यैव एकवाक्योपादानावगताद्वित्वयोगिनः कालद्वययुक्तस्य च फलसम्बन्धापत्तिः । यथा च 'यदाग्नेयोऽष्टाकपालः'* इत्यत्राग्नेयद्वयसिद्धिः तथा कौस्तुभ एव प्रपञ्चितम् । अतष्षण्णां फलसम्बन्धासिद्धिरेवोक्तविधया विद्वद्वाक्यप्रयोजनमित्यन्यपरत्वादपि न 'वैश्वदेवेन यजेत' इतिवदभ्यासस्वरूपसिद्धिः । न चैवं 'पौर्णमास्यां पौर्णमास्या' इति वाक्यद्वयवैयर्थ्यापत्तिः । तस्य समुदितयागात्रिकप्रयोगविधित्वेन सार्थक्यस्य एकादशे वक्ष्यमाणत्वात् । अन्यथा ह्युत्पत्तिवाक्येषु प्रत्येकं कालयोगात्प्रत्येकमेव पूर्वोत्तराङ्गसहितैकप्रधानप्रयोगा भवेयुः । एवं चोत्पत्तिवाक्ये कालश्रवणमपि विद्वद्वाक्याधिकारवाक्यस्थयजिपदसङ्कोचार्थमेवेति समुदायसिद्ध्यर्थं समुदायिनामनुवादकावेतौ न कर्मान्तरविधी इति सिद्धम् ॥ ३ ॥

## (४)—पौर्णमासीवदुपांशुयाजस्स्यात् ॥ ९ ॥ चोदना वाऽप्रकृतत्वात् ॥ १० ॥ गुणोपबन्धात् ॥ ११ ॥ प्रायवचनाच्च ॥ १२ ॥

उपांशुयाजः "जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावुपांशुयाजमन्तरा यजति विष्णुरुपांशु यष्टव्योऽजामित्वाय प्रजापतिरुपांशु यष्टव्योऽजामित्वायाग्नीषोमावुपांशु यष्टव्यावजामित्वाय"† इति दर्शपूर्णमासप्रकरणाम्नातवाक्यस्थमुपांशुयाजपदं **पौर्णमासीवत्** पूर्वाधिकरणोदाहृतवाक्यस्थं आग्नेयोपांशुयाजाग्नीषोमीयत्रयानुवादकं पौर्णमासीपदमिव "विष्णुरुपांशु" इत्यादिवाक्यविधित्सितयागानां त्रयाणां समुदायसिद्ध्यर्थमनु-

* तै. सं. २-५-३. † तै. सं. २-६-६.

वादः **स्यात्** ॥ ९ ॥ सिद्धान्तमाह—तदुपांशुयाजपदं **चोदना वा** विधिपरमेव नानुवादः. कुतः **अप्रकृतत्वात्** उपक्रमे कस्यचिदपि कर्मणः प्रकृततावि्रहेण तदनुवादकत्वानुपपत्तेः । "विष्णुरुपांशु" इत्यादिवाक्येषु तु नैव कर्मविधिसंभवः, वाक्यभेदप्रसङ्गात् । तस्मात् "उपांशुयाजमन्तरा यजति"[1] इत्यत्रैव कर्मविधिः तस्यैवार्थवादः सर्वं पूर्ववाक्यमुत्तरवाक्यं चेति ॥ १० ॥ इतश्चान्तरालवाक्ये एव तस्मिन् कर्मविधिः—**गुणोपबन्धात्** पुरोडाशनैरन्तर्यापादितायां जामितायां अन्तरालसंबन्धिना विधेयेन निवृत्तिप्रतीतेर्यत्रान्तरालरूपगुणोपबन्धस्तत्र झडिति कर्मचोदनाप्रतीतेः अन्तरालवाक्ये एव तस्मिन् कर्मविधानम् ॥ ११ ॥ **प्राये** प्रधानकर्मबाहुल्ये बहुप्रधानकर्मसमभिव्याहारे "शिरो वा एतद्यज्ञस्य यदाग्नेयो हृदयमुपांशुयाजः पादावग्नीषोमीयः" इत्यर्थवादे **वचनाच्च** उपांशुयाजस्य पठनादपि उपांशुयाजः प्रधानं तस्मादुपांशुयाजविधिरेवान्तरालवाक्ये । अन्यथा तस्य यागत्रयानुवादकत्वे 'तावब्रूताम्'[2] इतिवाक्ये अग्नीषोमपदश्रवणात् श्रुतपौर्णमासीकालसंबन्धाग्नीषोमीयरूपोपांशुयाजस्यैव फलसम्बन्धोधिकारवाक्ये स्यादितरयोश्च तदङ्गता । तथाच उपांशुयाजसामान्यस्याविशेषेण प्राधान्यावगमो भज्येतेति ॥ १२ ॥

**तत्रैव 'जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावुपांशुयाजमन्तरा यजति विष्णुरुपांशु यष्टव्योऽजामित्वाय प्रजापतिरुपांशु यष्टव्योऽजामित्वायाग्नीषोमावुपांशु यष्टव्यावजामित्वाय'[1] इति श्रुते अन्तरावाक्ये पूर्ववदेव न कर्मान्तरविधिः अपि तु तव्यप्रत्ययान्तवाक्यैर्विहितानां देवतोपांशुत्वविशिष्टयागानां समुदायसिद्ध्यर्थमनुवाद एव । तत्प्रयोजनं च अन्तरालकालविधिस्त्रयाणामेषाम् । 'तावब्रूतामग्नीषोमावाज्यस्यैव**

---

[1] तै. सं. २-६-६. [2] तै. सं. २-५-२.

नावुपांशु पौर्णमास्यां यजन्' इति कालसम्बन्धतात्पर्यग्रहद्वारा फलसम्बन्धसिद्धिर्वा । अन्यथा ह्यग्नीषोमदेवत्यस्यैव कालसम्बन्धात् फलसम्बन्धस्स्यादिति प्राप्ते—

उपक्रमोपसंहारयोरेकविषयत्वेनैकवाक्यत्वप्रतीतेर्न तव्यप्रत्ययान्तवाक्यैः कर्मविधिः । अन्तरावाक्य एव तु कालोपांशुत्वविशिष्ट एककर्मविधिः । तदर्थवादश्चायं पूर्वोत्तरभावेन सर्वोऽपि । अन्यथा वाक्यभेदापत्तेः । अत एव तव्यप्रत्ययान्तैर्देवतामात्रविधिरन्तरालवाक्यस्थकर्मणीत्यपास्तम् । न च तत्र देवताऽलाभः । शाखाभेदेन वैष्णवप्राजापत्याग्नीषोमीययाज्यानुवाक्यायुगलानां एतद्यागक्रमे समाम्नातानां विकल्पेन तत्तद्देवताकल्पकत्वोपपत्तेः । तस्य च 'तावब्रूतां'* इत्यनेन कालसम्बन्धात्फलसम्बन्धः । न चोत्पत्तिशिष्टकालसम्बन्धानामेवाग्नेयादीनां झडित्युपस्थितत्वेन उत्पन्नशिष्टकालसम्बन्धस्योपांशुयाजस्य फलसम्बन्धानापत्तिः । अन्यथा पुरोडाशान्तरालकालसम्बन्धान्यथाऽनुपपत्त्यैव पौर्णमास्यादिकाललाभेन उपांशुयागस्य फलसम्बन्धापत्तौ 'तावब्रूताम्'* इत्यस्यापि तत्फलत्वानुपपत्तेरिति वाच्यम् । 'तावब्रूतां'* इत्येतदनन्तरं 'उपांशुयाजमन्तरा यजति'† इति पठितमिति वार्तिकदर्शनादस्यापि कालस्योत्पत्तिवाक्येनैव विधेयतया भिन्नवाक्यत्वाभावेन तुल्यबलत्वात् फलसम्बन्धोपपत्तेः । अतो नायं समुदायानुवाद इति सिद्धम् ॥

प्रयोजनं स्पष्टम् ॥ ४ ॥

## (५)—आघाराग्निहोत्रमरूपत्वात् ॥ १३ ॥ सं-

---

*तै. सं. २-५-२. †तै. सं. २-६-६.

**ज्ञोपबन्धात् ॥ १४ ॥ अप्रकृतत्वाच्च ॥ १५ ॥ चोदना वा शब्दार्थस्य प्रयोगभूतत्वात् तत्संनिधेर्गुणार्थेन पुनश्श्रुतिः ॥ १६ ॥**

उपांशुयाजवाक्ये समुदायानुवादकत्वासंभवेऽपि **आघाराग्निहोत्रं** आघारपदोपलक्षितं "अघारमाघारयति"* इति वाक्यं अग्निहोत्रपदोपलक्षितं "अग्निहोत्रं जुहोति"† इति वाक्यं च समुदायानुवादकमेव स्यात् न विधायकं **अरूपत्वात्** कर्मस्वरूपभूतयोर्द्रव्यदेवतयोरश्रवणात्। समुदायश्च "ऋजुमाघारयति"* "सन्ततमाघारयति"* इत्यादिवाक्यविहितकर्मणां "दध्ना जुहोति" "पयसा जुहोति" इत्यादिवाक्यविहितकर्मणां चेह विवक्षितः ॥ १३ ॥ **संज्ञोपबन्धात्** द्वितीयान्तयोः अग्निहोत्राघारपदयोस्तत्तद्वाक्ये निबन्धनादपि न तत्तद्वाक्यं विधायकं अपूर्वकर्मविधायकत्वे तत्रतत्र द्वितीयायाः करणत्वलाक्षणिकत्वापत्तेः. अनुवादकत्वे च अर्थाक्षिप्तसाध्यत्वस्यानुवादकतया द्वितीयाया मुख्यतयैवोपपत्तिः ॥ १४ ॥ स्ववाक्ये रूपानाम्नानेऽपि प्रकरणाम्नातवाक्यान्तरेणैव रूपलाभस्स्यादिति शङ्कां निराकरोति—**अप्रकृतत्वाच्च** द्रव्यदेवतयोः प्रकरणाम्नातवाक्यान्तरेणाप्यनवधृतत्वादपि नात्र विधायकत्वसंभवः ॥१५॥ सिद्धान्तमाह—उक्तमग्निहोत्रादिवाक्यं **चोदना वा** अग्निहोत्रादिनामककर्मविधायकमेव. **शब्दार्थस्य** "अग्निहोत्रं जुहोति"† इत्यादिवाक्यार्थस्य **प्रयोगभूतत्वात्** अनुष्ठानापरपर्यायप्रयोगौपयिकत्वसंभवात्-अनुवादकत्वे हि नानुष्ठानौपयिकत्वसंभवः। **तत्सन्निधेः** "अग्निहोत्रं जुहोति"† इत्यादिवाक्यविहितकर्मसन्निधानात् **पुनःश्रुतिः** "दध्ना जुहोति" इत्यादि पुनःश्रवणं **गुणार्थेन** गुणविध्यर्थतया उपपद्यते ॥ १६ ॥

---

*तै. सं. २-५-११. †तै. सं. १-५-९.

तत्रैव 'आघारमाघारयति'* इति श्रुते 'अग्निहोत्रं जुहोति'† इत्यत्र च पूर्ववद्वाक्यभेदस्य दूषकस्याभावात् भेदकप्रमाणाभावाच्च 'ऋजुमाघारयति'* 'सन्ततमाघारयति'* 'दध्ना जुहोति' 'पयसा जुहोति' इत्यादिवाक्यविहितकर्मणां यथायोगं समुदायानुवादकत्वोपपत्तिः । दध्यादिवाक्यानां निर्व्यापारे विध्यन्वयासम्भवेन अवश्यं गुणविशिष्टकर्मविधायकत्वात् । अतश्च रूपाभावात् भेदकप्रमाणाभावाच्च आघारवाक्ये अग्निहोत्रवाक्ये वा न कर्मान्तरम् । अपि तु तेषामेव समुदायसिद्ध्यर्थमनुवादः । तत्प्रयोजनं चाग्निहोत्रवाक्ये सर्वेषामेवाग्निहोत्रसंज्ञकत्वेन फलसम्बन्धसिद्धिः । इतरथा अग्निदेवत्यस्यैव तदापत्तिः । आघारवाक्ये समुदायानुवादप्रयोजनं कौस्तुभे‡ द्रष्टव्यम् । न च दध्यादिहोमेषु देवताद्यभावः । समुदायानुवादबलेनैकप्रयोगपरिग्रहावगतेस्सकृदनुष्ठानेनाग्न्यादिहोमाङ्गभूतदेवतायाः प्रसङ्गेन दध्यादिहोमोपकारकत्वोपपत्तेरिति प्राप्ते—

सर्वत्र गुणमात्रविधानेन तृतीयविधिप्रकारोपपत्तौ पञ्चमविधिप्रकाराङ्गीकरणस्यान्याय्यत्वात् न दध्यादिवाक्येषु विशिष्टकर्मविधानम् । न च गुणे विध्यन्वयानुपपत्तिः । होमकर्मकगुणकरणकभावनायामेव विध्यन्वयेऽपि प्राप्ताप्राप्तविवेकेन विधिफलस्याज्ञातज्ञापनरूपस्य भावनायास्स्वरूपेण प्राप्ततया गुणमात्रविषयत्वोपपत्तेः । अत एव सर्वत्र प्रातीतिके विशिष्टभावनाविधानेऽपि फलमादायैव षड्विधिप्रकाराः तेषां चोत्तरोत्तरस्य

*तै. सं. २-५-११. †तै.सं. १-५-९.

‡ ऊर्ध्वत्वमन्त्रविशिष्टाघाराणां मन्त्रवर्णकल्पितेन्द्रदेवताकाघारेण सह प्रयोगविध्यवगतयौगपद्यसिद्धिद्वारा इन्द्रदेवताकत्वसिद्धिपूर्वकयागरूपतासिद्धिः । इन्द्रदेवताकाघारेण यौगपद्यसिद्धिमात्रं वा प्रयोजनमिति कौस्तुभे.

दौर्बल्यं पूर्वमुक्तम्। अतश्च प्राप्तयभावादेव समुदायानुवादत्वासम्भवेन आद्यविधिविधया कर्मविधी आघाराग्निहोत्रवाक्ये । न च रूपज्ञानाभावात्कर्मविध्यनुपपत्तिः । तस्यानुष्ठानं प्रति कारणत्वेऽपि शाब्दबोधं प्रत्यकारणत्वात् । अतश्च विजातीयहोमत्वावच्छिन्नस्य विधाने अवगते वाक्यान्तरेण रूपलाभेऽपि न काचित्क्षतिः ॥

प्रयोजनं दध्यादिद्रव्यसमुच्चयविकल्पाभ्यां स्पष्टम् ॥ ५ ॥

**(६)–द्रव्यसंयोगाच्चोदना पशुसोमयोः प्रकरणे ह्यनर्थको द्रव्यसंयोगो न हि तस्य गुणार्थेन ॥ १७ ॥ अचोदकाश्च संस्काराः ॥ १८ ॥ तद्भेदात्कर्मणोऽभ्यासो द्रव्यपृथक्त्वादनर्थकं हि स्याद्भेदो द्रव्यगुणीभावात् ॥ १९ ॥**

"हृदयस्याग्रेऽवद्यति"* "ऐन्द्रवायवं गृह्णाति" इत्यादीनि वाक्यानि **चोदना** कर्मविधिः स्यात्. **द्रव्यसंयोगात्** अन्यत्रासंभवान्निवेशस्य हृदयरसादिद्रव्यस्य संयोगात् । "अग्नीषोमीयं पशुमालभेत" "सोमेन यजेत" इत्यनयोर्वाक्ययोरुत्पत्तिवाक्यत्वे सति **प्रकरणे** तत्प्रकरणमाश्रित्य अवद्यतिगृह्णातिवाक्येषु **द्रव्यसंयोगः** हृदयरसादिद्रव्यसंस्कारः विधीयमानः **अनर्थकः** आपद्येत **हि** यतः तस्य हृदयादिद्रव्यस्य गुणार्थत्वेन गुणत्वेन संबन्धो **न** संभवति उत्पत्तिशिष्टपशुसोमाद्यवरुद्धत्वात् ॥ १७॥ सिद्धान्तमाह—**संस्काराः** संस्कारविधित्वेनाप्युपपन्नाः शब्दाः **अचोदकाः** न कर्मविधायकाः। **चस्त्वर्थः**। तथाच पशुवाक्ये पशोर्हृदयादिद्वारकसा-

---

*तै. सं. ६-३-१०.

धनत्वस्य सोमवाक्ये च सोमस्य रसद्वारकसाधनत्वस्य च परिग्रहे उत्पत्तिशिष्टगुणविरोधविरहात् अवदानसंस्कृतानां हृदयादीनां ग्रहणादिसंस्कृतस्य रसस्य च गुणत्वेन संबन्धसंभवात् हृदयादिवाक्यानि गुणविधय एवेति भावः ॥ १८ ॥ नन्वेवं सोमवाक्ये कर्मण एकत्वात् "ऐन्द्रवायवं गृह्णाति। मैत्रावरुणं गृह्णाति" इत्यादिक्रमस्य "दशैतानध्वर्युः प्रातस्सवने गृह्णाति" इत्यादिसमुच्चयस्य च दर्शनं नोपपद्यते इत्याशङ्कां निराकरोति—**तद्भेदात्** इन्द्रवाय्वादिदेवतोद्देशभेदात् **कर्मणः** ग्रहणस्य **अभ्यासः** भेदः **द्रव्यपृथक्त्वात्** प्रकृत्यर्थदेवताभेदादेव द्रव्यस्य संस्कार्यस्य पृथक्त्वावगमात्। अर्थप्राप्तग्रहणानुवादेन द्रव्यदेवतोभयविधाने वाक्यभेदप्रसङ्गाद्ग्रहणभेद आवश्यकः। नन्वेवमपि ग्रहणानां दृष्टार्थतया कथं समुच्चयः इत्यत आह— अनर्थकमिति। **हि** यतः ग्रहणानां दृष्टार्थत्वे तद्विधिजातं **अनर्थकं स्यात्**। तस्माददृष्टार्थताऽपि ग्रहणानां विधिबलादेष्टव्या। ततश्च समुच्चयो युज्यते इति भावः। नन्वेवमत्र ग्रहणानां समुच्चये "खादिरे पशुं बध्नाति। पालाशे बध्नाति" इत्यादिवाक्यविहितबन्धनस्याप्यभ्यासः कुतो नाङ्गीक्रियते अविशेषादित्यत आह—**भेदः** विशेषः ग्रहणापेक्षया बन्धने अस्ति. **द्रव्यगुणाभावात्** द्रव्यस्य खादिरादेः बन्धनवाक्ये बन्धनक्रियां प्रति गुणभूतत्वात्। तथाच प्रतिप्रधानं गुणावृत्तिन्यायेन द्रव्ये गुणीभूताया ग्रहणक्रियाया आवृत्तिः. बन्धनक्रियां प्रति गुणभूते तु खादिरादिद्रव्ये बन्धनक्रियाया नावृत्तिः प्रतिगुणं प्रधानावृत्तेरभावादिति भावः ॥१९*

**'अग्नीषोमीयं पशुमालभेत' इति श्रुतम्। तथा 'सोमेन यजेत' इति च। तत्राद्यविधिप्रकारस्यासम्भवान्न पूर्ववत्कर्मविधित्वम्। अपि तु समुदायानुवादत्वमेव। कर्मप्राप्तिस्तु**

* एतत्सूत्रानन्तर "संस्कारस्तु न भिद्येत परार्थत्वाद्द्रव्यस्य गुणभूतत्वात्" इत्यधिकं सूत्रत्वेन प्राक्तनवृत्तौ समुपलभ्यते। वार्तिके कौस्तुभे च नेदं दृश्यते।

पशौ—"हृदयस्याग्रेऽव द्यत्यथ जिह्वायाः'* इत्यादिभिः । अत्र हि उत्पन्नशिष्टपशुसाध्ये यागे हृदयादीनां साधनत्वानुपपत्तेर्न तदुद्देशेनावदानाख्यसंस्कारविधिः । अतो विहितानां हृदयाद्यवदानानां पशुप्रभवद्रव्यवृत्त्यवदानत्वसादृश्यात् सान्नाय्यावदानप्रकृतिकत्वावगतेस्सान्नाय्यवदेव हृदयादीनां यागसाधनत्वस्य पूतीकवदनुमानात् यावद्धृदयादियागा एव विधीयन्ते । तांश्च लक्षणया आलभंतिना अनूद्याग्नीषोमदेवता विधीयते । पशुपदं च हृदयादीनां छागप्रकृतिकत्वस्य मन्त्रवर्णात्प्राप्तत्वात् लक्षणया हृदयादिपरम् । अथवा—हृदयादिवाक्यविहितावदानाक्षिप्तस्पर्शानेवालभतिना शक्त्याऽनूद्य पशुशब्दलक्षितहृदयादीनां प्रत्येकं देवतासम्बन्धे कृते तावन्तो यागा देवतासम्बन्धकल्पितास्तेनैव विधिना विधीयन्ते । सर्वथा पशुपदं समुदायानुवादः ॥

तथा सोमेऽपि—'ऐन्द्रवायवं गृह्णाति' 'मैत्रावरुणं गृह्णाति' इत्यादिवाक्यैर्द्रव्यदेवतासम्बन्धानुमितयागविधानम् । ग्रहणे देवतान्वयानुपपत्तेः । द्रव्यं च 'अण्व्या धारया गृह्णाति' इति प्रकृतं धारासमर्थं द्रवद्रव्यं तद्धितोपात्तम् । सोमवाक्ये तु तत्प्रकृतित्वेन सोमलताविधिः व्रीहिवत् । 'सोममभिषुणोति' इत्यादिसंस्कारविध्यन्यथाऽनुपपत्त्यैव वा 'अध्वर्युं वृणीते' इति वत् सोमप्राप्तेस्सोमपदं नामधेयम् । सर्वथा यजिस्समुदायानुवादः । तत्प्रयोजनं चास्मिन् पक्षे सोमद्रव्यकयागमात्रानुवादात् अस्तुतशस्त्राणामपि फलसम्बन्धः । ज्योतिष्टोमपदं च वैश्वदेववद्गौणम् । समुदायानुवादाभावे हि तद्वशात् सस्तुतशस्त्राणामेव यागानां फलसम्बन्धापत्तिः । तेषामेव ज्योतीरूपस्तोमसम्बन्धात् । सिद्धान्ते तु यागस्यैकत्वात् फलवाक्यस्थ-

*तैसं. ६-३-१०.

यजिना अभ्यासलक्षणापत्तेः विजातीययागत्वावच्छिन्नस्यैव फल-सम्बन्धः । ज्योतिष्टोमपदे बहुव्रीह्यर्थस्तु स्वसम्बन्ध्यभ्यासघटि-तसमुदायाश्रयरूपः । अतस्समुदायानुवादावेताविति प्राप्ते—

पशुपदे हृदया लक्षणायां प्रमाणाभावात् तत्रैव विशिष्ट-यागविधिः । हृदय...वाक्यैश्च हृदयाद्युद्देशेन संस्कारमात्रम् । पशोश्च न साक्षाद्धविष्ट्वेन विधानम् । किंतु विशसनावदाना-दिविधिरूपतात्पर्यग्राहकानुरोधेन हृदयादिप्रकृतित्वेनैव । करण-त्वस्य साक्षादिव परम्परयाऽपि तात्पर्यग्राहके सत्युपपत्तेः । अत एवातिदेशप्राप्तावदानसम्बन्धोपि हृदयादीनां हविष्ट्वसिद्ध्यर्थं त-दितराङ्गानां हविष्ट्वपरिसङ्ख्यार्थश्चेति कौस्तुभे द्रष्टव्यम् । सो-मेऽपि नैन्द्रवायवादिवाक्ये यागविधिः गौरवात् । किंतु देवता-विशिष्टग्रहणस्यैव तद्धितोपात्तद्रव्योद्देशेन विधिः । सम्भवति च देवतात्वस्य निरूपकतासम्बन्धेन ग्रहणे वैशिष्ट्यायोगेऽपि ग्र-हणकालीनोच्चारणकर्मीभूतशब्दवृत्तित्वसम्बन्धेन ग्रहणे वैशिष्ट्यम् । अतश्च देवतायाः ग्रहणाङ्गभूताया अपि यागापेक्षायां सोमवा-क्यविहितयागस्यैव देवतापेक्षस्य उपपादकत्वमात्रकल्पनाल्लाघ-वम् । सोमपदं तु संस्कारविध्यन्यथाऽनुपपत्त्या सम्भवत्प्रासिक-त्वेऽपि सकृद्व्यावृत्तिफलकसोमानियमार्थं न विरुध्यते । यथा चैवं सति ग्रहणानां समुच्चयो यागस्य च प्रतिग्रहणमावृत्तिः तथा सर्वं कौस्तुभ एव निरूपितम् ॥

प्रयोजनं पशुविकारे हृदयादियागाद्यन्यतमप्रकृतित्वात् नै-कादशावदानगणप्राप्तिः पूर्वपक्षे । सिद्धान्ते सेति द्रष्टव्यम् । सोमे चाव्यक्तत्वासिद्धिरेव ॥ ६॥

## (७)–पृथक्त्वनिवेशात्संख्यया कर्मभेदस्स्यात् ॥ २० ॥

**संख्यया** च एकत्वातिरिक्तया **कर्मभेदस्स्यात्** कुतः तस्याः संख्यायाः **पृथक्त्वनिवेशात्** पृथक्त्वे स्वाश्रयप्रतियोगिकस्वाश्रयानुयोगिकभेदे निवेशात् समन्वयात् तेन सहैव स्थितेरित्यर्थः ॥ २० ॥

'आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोति'* 'आज्यभागौ यजति'† इत्यादौ एकत्वातिरिक्तसङ्ख्यायास्स्वाश्रयप्रतियोगिकस्वाश्रयवृत्तिभेदव्याप्यत्वेन न तावत्साक्षाद्भावनाभेदबोधकत्वम् । तस्या उक्तसङ्ख्याश्रयत्वाप्रतीतेः । नापि धात्वर्थभेदबोधकत्वं तस्य पूर्वप्रमितैकत्वसङ्ख्यावरुद्धत्वेन 'एकादश प्रयाजान् यजति'‡ 'विराट्सम्पन्नमग्निहोत्रं जुहोति' इत्यादिवत् सङ्ख्यान्तरसम्बन्धानुपपत्तेरेतत्सङ्ख्याया अभ्यासविषयत्वप्रतीतेर्न कर्मान्तरत्वमिति प्राप्ते—

नात्र सङ्ख्यान्तरावरोधः । सा हि न तावत्तिङुपात्ता । तस्याः कर्तृवृत्तित्वात् । न चानवच्छिन्नस्यान्वयानुपपत्तेः प्रथमातिक्रमे च कारणाभावात् धात्वर्थे एकत्वसङ्ख्यानुमानमिति वाच्यम् । श्रुतसङ्ख्यासत्त्वे कारणाभावस्यासिद्धत्वेन अनुमानाप्रसरात् । अत एव प्रयाजैकादशत्वस्थले यत्र प्रकृतौ अनुमानप्रसरः तत्राभ्यासविषयत्वम् । न चैवं विराट्सम्पत्तिवाक्यादावपि उत्पत्तिवाक्ये एकत्वानुमानानापत्तिः । तादृशस्थले स्वोपजीव्योत्पत्तिवाक्यजन्यशाब्दबोधत्वनिर्वाहार्थं पूर्वप्रवृत्तस्यास्यानुमानस्योत्तरकालीनेन सङ्ख्याश्रवणेन बाधायोगात् तस्या-

*तैसं. २-३-९. †तैसं. २-६-२. ‡तैसं. ६-१-७.

भ्यासविषयत्वप्रतीतेः । प्रकृते तु शाब्दबोधात्पूर्वमेव इतरपदार्थवत् सङ्ख्याया अपि प्रतीतेः युक्तश्शाब्दबोधोत्तरकालीनानुमानप्रतिबन्ध इति कौस्तुभे विस्तरः । अतश्च सिद्धमुत्पत्तिवाक्यगतकर्मसमानाधिकरणविधेयसङ्ख्यायाः कर्मभेदबोधकत्वम् । भावनाभेदस्तु शब्दान्तरादेव ॥

प्रयोजनं—वेदिप्रोक्षणमन्त्रवत् पूर्वपक्षे सकृन्मन्त्रः; सिद्धान्ते तदावृत्तिरिति ॥

भाष्यकारेण तु 'सप्तदश प्राजापत्यान् पशूनालभते'* इति वाक्ये यागभेदाभेदचिन्ता कृता । तत्र यद्यपि देवतात्वविशिष्टद्रव्यविशेषवाची तद्धितः, यद्यपि च प्राजापत्यपद एवैकशेषः । तथाऽपि तदुत्तरविभक्त्युपात्तायास्सङ्ख्यायाः प्रकृत्यर्थविशेष्य एवान्वयः । न तु विशिष्टे । द्वौ त्रय इत्यादौ तथैव व्युत्पत्तेरिति तावदविवादम् । सोपि च न द्रव्ये देवतात्वान्वयोत्तरम् । तथा सति देवतात्वप्रतिसम्बन्धिनि द्रव्ये साहित्यानवगमेन प्रत्येकवृत्तिपशुत्वावच्छिन्न एव तत्सम्बन्धप्रतीतेरनेकत्वावगमात् सम्बन्धभेदेनानेकयागादिकल्पनागौरवापत्तेः । अतो लाघवात् देवतात्वान्वयात्पूर्वमेव सङ्ख्याऽन्वयः । तदा हि बहुत्वावच्छिन्न एवैकदेवतासम्बन्धादेकयागादिकल्पनाल्लाघवम् । न च प्रकृतिप्राप्तैकपशुनिष्पन्नैकादशावदानगणैकत्वानुरोधेन सङ्ख्यायाः देवतात्वान्वयोत्तरमन्वयः । पशुगतैकत्वस्य श्रुतसप्तदशत्वेन बाधात् अवदानगणैकत्वस्य च प्रकृतावार्थिकत्वेन इहानतिदेशात् । अतो देवतासम्बन्धभेदे प्रमाणाभावात् न यागभेदः । अस्तु वा—समानाभिधानश्रुत्या बहुत्वान्वयात्प्राक् दे-

---

*तै. ब्रा. १-३-४.

वतात्वान्वयेन सम्बन्धभेदः। तथाऽपि लाघवाद्यागैकत्वम् । यथैव सिद्धान्ते अनेकयागास्सकृदनुष्ठानेनोपपद्यन्ते तथा मन्मतेऽप्येकेन यागेनानेके द्रव्यदेवतासम्बन्धा इति प्राप्ते—

समानाभिधानश्रुत्या देवतात्वस्यान्तरङ्गत्वात् सङ्घचान्वयात्सर्वान्वयित्वम् । पशूनां प्रत्येकं स्वत्वाश्रयत्वेन स्वत्वध्वंसानुकूलव्यापारात्मकयागकरणत्वरूपहविष्ट्वस्य प्रत्येकवृत्तितया 'सूक्तहविषोः' इत्यादिस्मृत्यनुसारेण हविष्ट्वावच्छेदकपशुत्वावच्छेदेनैव देवतासम्बन्धौचित्याच्च । अतश्च बहुत्वानवच्छिन्नस्यैव प्रतिसम्बन्धित्वात् प्रतिसम्बन्धिताऽवच्छेदकस्य प्रत्येकवृत्तित्वेन प्रतिसम्बन्धिभेदप्रतीतेः तद्भेदेन सम्बन्धभेदसिद्धिः । न च सम्बन्धभेदेऽपि यागैकत्वम् । सम्बन्धानामेकत्वानेकत्वाभ्यामुभयथाऽप्युपपत्तौ लाघवापेक्षया पश्वेकताप्रापिचोदकस्य शास्त्रतया बलवत्त्वेन नियामकत्वात् । अतस्तदनुरोधेन सर्वत्र यागभेदो भावनाभेदश्चेति सिद्धम् ॥

प्रयोजनं च यागैकत्वे एकपशुविस्मरणेऽपि तस्य जातत्वान्न पुनर्यागकरणम् । सिद्धान्ते तदिति ॥ ७ ॥

## (८)—संज्ञा चोत्पत्तिसंयोगात् ॥ २१ ॥

"अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिरेतेन सहस्रदक्षिणेन यजेत" इत्यत्र संज्ञा च ज्योतिरादिसंज्ञाऽपि कर्मभेदिका उत्पत्तिसंयोगात् अथेत्यनेन पूर्वतनज्योतिष्टोमप्रकरणविच्छेदप्रत्यायनात् कर्मोत्पत्तिवाक्यत्वेनैव संमतत्येऽस्मिन्वाक्ये ज्योतिरादिसंज्ञाया विद्यमानत्वात् ॥२१ ॥

ज्योतिष्टोमं प्रकृत्य 'अथैष ज्योतिरथैष विश्वज्योतिरथैष सर्वज्योतिरेतेन सहस्रदक्षिणेन यजेत' इति श्रुतेषु ज्योतिरादिपदानां गुणविशेषे प्रसिद्ध्यभावात् द्योतनात्मकत्वेन प्रसिद्ध्युपपादने कर्मण्यपि तदापत्तेः । एतच्छब्देन च तद्विधाने वाक्यभेदापत्तेस्तेषां नामत्वं तावदविवादम् । तच्च न प्रकृतस्य यागस्य । ज्योतिष्टोमसंज्ञावरोधात् । संज्ञाकार्यस्य व्यवहारस्यैकेनैव सिद्धेरितरवैयर्थ्याच्च । न च विनिगमकाभावाद्विकल्पः । अथशब्दस्य पूर्वाधिकारविच्छेदकस्य नियामकत्वात् । अत एव 'वसन्तेवसन्ते ज्योतिषा यजेत' इतिवत् नाख्याविकारत्वाशङ्का । तस्याविच्छिन्नेऽधिकारे समाम्नानेन तथाऽङ्गीकारात् । न चैवमधिकारविच्छेदाभावे उद्भिदादिसंज्ञातो भेदानापत्तिः । ज्योतिष्टोमसंज्ञाया उत्पत्तिशिष्टत्वाभावेन द्वयोरपि विकल्पो वैपरीत्यं वा किं न स्यादिति वाच्यम् । सोमयागे क्लृप्तप्रवृत्तिनिमित्तकज्योतिष्टोमसंज्ञावरुद्धे उद्भित्संज्ञायाः कथमपि निवेशानुपपत्तेः तस्या भेदकत्वात् । अत एव यत्र न किञ्चिन्नियामकमस्ति तत्र सङ्कल्पादौ संज्ञयोर्विकल्प एव । प्रकृते त्वथशब्देन विच्छेदात् भेदकत्वमेव संज्ञायाः । 'सहस्रदक्षिणेन यजेत' इत्येतावतैव प्रकृतयागानुवादेन गुणविध्युपपत्तौ एतच्छब्दान्तस्य ज्योतिरादिवाक्यस्य वैयर्थ्यप्रसङ्गाच्च । अतः द्योतनादियोगेन ज्योतिरादिसंज्ञं कर्मत्रयं सोमयागप्रकृतिकं तत्तद्वाक्यैरुत्पन्नं सहस्रदक्षिणाकं "एतेन ऋद्धिकामो यजेत" इति वाक्येन फले विधीयत इति सिद्धस्संज्ञया कर्मभेदः ॥ ८ ॥

## (९)–गुणश्चापूर्वसंयोगाद्वाक्ययोस्समत्वात् ॥ २२

"तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनं"

इत्यत्र वाजिनवाक्ये श्रुतो **गुणश्च** वाजिनगुणोपि कर्मभेदकः कुतः

**अपूर्वसंयोगात्** तस्य गुणस्य पूर्वस्मिन्नामिक्षावाक्ये निवेशासंभवात् । **वाक्ययोः** आमिक्षावाक्यवाजिनवाक्ययोः **समत्वात्** तुल्यत्वात् एकस्यापरार्थानुवादकत्वासंभवेन "वैश्वदेवेन यजेत" इत्यादेरिवानुवादकत्वस्यापि वाजिनवाक्ये आश्रयितुमशक्यत्वात् ॥ २२ ॥

'वैश्वदेव्यामिक्षा' इत्यत्र द्रव्यदेवताविशिष्टे यागे विहिते तदनुवादेन 'वाजिभ्यो वाजिनं' इत्यत्र न गुणमात्रविधिः । प्राप्तकर्मानुवादेनानेकगुणविधाने वाक्यभेदापत्तेः । न च वाजं अन्नं आमिक्षारूपं विद्यते येषामिति व्युत्पत्त्या विश्वान् देवान् तद्विशिष्टयागं वा उद्दिश्य वाजिनमात्रस्य समुच्चयेन विकल्पेन वा विधिरस्त्विति वाच्यम् । वाजिशब्दस्य रूढत्वेन विश्वदेवानुवादानुपपत्तेः । उत्पत्तिशिष्टद्रव्यावरोधे द्रव्यान्तरस्य निवेशानुपपत्तेश्च । एतेन आमिक्षानुनिष्पन्नवाजिनसम्बन्धप्राप्त्या वाजिनपदमामिक्षायागनामधेयमङ्गीकृत्य तदुद्देशेन वाजिदेवताविधिरित्यपास्तम् । उत्पत्तिशिष्टदेवतावरोधे देवतान्तरस्य निवेशानुपपत्तेः । किञ्च—आमिक्षायाः पार्ष्ठिको देवतासम्बन्धः पदश्रुत्या. वाजिनस्य तु वाक्येनेति दौर्बल्यम् । तद्धितस्य हि देवतात्वविशिष्टे द्रव्यविशेषे शक्तिः आमिक्षापदं च तात्पर्यग्राहकमिति प्राञ्चः । आमिक्षादौ द्रव्ये देवतात्वे च भिन्ना शक्तिः, निरूपकत्वं तु संसर्गः । देवतात्व एव वा शक्तिः, द्रव्ये लक्षणा । द्रव्यविशेष एव वा शक्तिः, देवतात्वे लक्षणा द्रव्यसामान्य एव वा शक्तिः, आमिक्षापदेन विशेषनिर्णय इत्येते पक्षास्तु कौस्तुभ एवोपपादिताः । सर्वथा आमिक्षाद्रव्यस्य देवतासम्बन्धः पदश्रुत्येति सिद्धम् । किञ्च—विश्वेषां देवानां तद्धितेन देवतात्वं शक्त्योक्तम् अनुशासनसत्त्वात् । वाजिनां तु सम्प्रदानत्ववाचिन्या चतुर्थ्या सांप्रतिकलक्षणया । त्य-

ज्यमानद्रव्योद्देश्यत्वविशिष्टप्रतिगृहीतृत्वरूपसम्प्रदानत्वैकदेशत्वात् देवतात्वस्य । तस्याः प्रतिगृहीतृत्वाभावात् । निरूढधर्मसमनियतसम्प्रदानत्वव्याप्यदेवतात्वरूपाखण्डोपाधिस्वीकारे तु सुतरां लक्षणा । अतोऽपि दुर्बलत्वम् । तस्माद्वाजिनवाक्येऽपि गुणात् द्रव्यदेवताविशिष्टं कर्मान्तरमेव वाजिनप्रतिपत्त्यर्थमामिक्षायागाङ्गत्वेन विधीयते । गुणस्य च सर्वत्रानिविशमानत्वेन भेदकता । सा च क्वचिद्वाक्यभेदापत्त्या क्वचित्प्रबलगुणावरोधात् क्वचिदेकप्रसरताभङ्गादित्यनेकप्रकारिकेति ध्येयम् ॥ ९ ॥

## (१०)–अगुणे तु कर्मशब्दे गुणस्तत्र प्रतीयेत॥२३॥

कर्मशब्दे "अग्निहोत्रं जुहोति"* इत्यादौ कर्मोत्पत्तिवाक्ये अगुणे गुणश्रवणरहिते सति तत्र अग्निहोत्रादिकर्मणि तस्मिन् "दध्ना जुहोति" इत्यादिना गुणः दध्यादिः विधीयत इति प्रतीयेत ॥ २३ ॥

यत्र तु नोत्पत्तौ गुणश्रवणं यथा—'अग्निहोत्रं जुहोति'* इति तत्र तदनुवादेन 'दध्ना जुहोति' 'पयसा जुहोति'† इत्यादिभिस्सर्वैरेव गुणविधानं विकल्पेन । तत्र खलेकपोतन्यायेन सर्वेषामेव युगपत्प्रवृत्तेरेकावरुद्धत्वाभावादिति प्रत्युदाहरणमात्रम् ॥ १० ॥

## (११)–फलश्रुतेस्तु कर्म स्यात्फलस्य कर्मयोगित्वात् ॥ २४ ॥ अतुल्यत्वात्तु वाक्ययोर्गुणे तस्य प्रतीयेत ॥ २५ ॥

अग्निहोत्रप्रकरणाम्नाते "दध्नेन्द्रियकामस्य जुहुयात्" इति वाक्ये फलश्रुतेः इन्द्रियरूपफलस्य श्रवणात् कर्म तु अग्निहोत्ररूपं प्रकृतं

---

*तैसं. १-५-९, †तैसं. ५-४-९.

कर्मैव दध्यादिगुणविशिष्टं फलाय विधेयं **स्यात्** न तु दधिरूपो गुणः । **फलस्य** इन्द्रियादिरूपस्य कर्मयोगित्वात् कर्ममात्रान्वयित्वेन दध्यादिरूपसिद्धपदार्थान्वयित्वासंभवात् । अन्यथा दध्यादिरूपाद्गुणात्सिद्धात्सर्वदैव सर्वेषामेव फलोदयप्रसङ्गात् ॥ २४ ॥ समाधत्ते-- **वाक्ययोः** "अग्निहोत्रं जुहुयात्स्वर्गकामः" "दध्नेन्द्रियकामस्य जुहुयात्" इत्यनयोः **अतुल्यत्वात्** असमत्वात् **तस्य** अग्निहोत्रहोमस्य **गुणे** दधिरूपे **प्रतीयेत** फलसम्बन्धः । स्वर्गकामवाक्ये वा विधेयान्तराभावेन कर्मणः फलसंबन्धो युक्तः । इन्द्रियकामवाक्ये तु कर्माश्रितगुणे एव फलान्वयसंभवात् फलोद्देशेन गुणविधिरेव युक्तः ॥ २५ ॥

**अग्निहोत्रं प्रकृत्य 'दध्नेन्द्रियकामस्य जुहुयात्' इति तत्र स एव होमो दधिविशिष्टः फलोद्देशेन विधीयते । न च प्राप्तकर्मानुवादेन गुणसम्बन्धः फलसम्बन्धश्चेति वाक्यभेदः । प्राप्तानामपि कर्मणां राजकर्तृत्वविशिष्टानां फलोद्देशेन राजसूयवाक्ये विधानवदिहापि तदुपपत्तेरिति प्रथमः पक्षः । द्वितीयस्तु— नात्र राजसूयन्यायः । कर्तुर्हि प्रयोगान्वयित्वात् फलस्य च विनियोगान्वयित्वात् उत्पन्नस्यापि कर्मणः प्रयोगविधौ फलविशिष्टविनियोगस्य कर्तुश्च वैशिष्ट्योपपत्तेः । प्रकृते तु दध्न उत्पत्त्यन्वयित्वेन प्राप्तोत्पत्त्यनुवादेन गुणविधिः फलविशिष्टविनियोगविधिश्चेति वैशिष्ट्याभावाद्वाक्यभेदः । अतो गुणात् कर्मभेदः । दधिविशिष्टं च तत्फलोद्देशेन विधीयते । न दधि । भावार्थाधिकरणविरोधापत्तेः । सत्यपि दर्वीहोमत्वे दधिद्रव्यकहोमत्वसादृश्यादग्निहोत्रहोमातिदेशेन रूपलाभः ॥**

**सिद्धान्तस्तु—यत्र द्वयोरपि धात्वर्थगुणयोरप्राप्तिः सम्भवत्प्राप्तिः प्राप्तिरेव वा धात्वर्थस्यैव वाऽप्राप्तिः यथा—'सोमेन**

यजेत' 'उरुप्रथा उरुप्रथस्वेति पुरोडाशं प्रथयति' 'ऐन्द्रवायवाग्रान् गृह्णीयात् यः कामयेत यथापूर्वं प्रजाः कल्पेरन्निति'* 'अग्निहोत्रं जुहोति'† इत्यादौ तत्र भावार्थाधिकरणन्यायः। यत्र तु गुणस्यैवाप्राप्तत्वाद्विधेयत्वं तत्र तस्यैव फलसम्बन्धः। न च दध्नोपि नियता प्राप्तिः अपि तु विकल्पेन। अतः पाक्षिकानुवादत्वपरिहाराय तस्यैव विधेयत्वात्फलसम्बन्धः। कारणीभूतगुणसत्त्वेन वचनं विनाऽपि फलोत्पत्तिसम्भवात् वचनवैयर्थ्यप्रसङ्गेन स्वकृतिसाध्यधात्वर्थस्य दृष्टविधया गुणसम्बन्धिन आश्रयस्यापेक्षायां प्रकरणात् होमस्याश्रयत्वलाभात् जुहोतिस्साधुत्वार्थमनुवादः। दधिकरणकभावनान्तरमेवं तु फलोद्देशेन विधीयते। प्राप्तभावनानुवादेन उभयकरणे वाक्यभेदात्। केचित्तु—करणत्वविशिष्टं दधि दधिकरणत्वं वा तृतीयोपात्तं फलकरणत्वेन विधीयते। तृतीयार्थकरणत्वस्य निरूपकापेक्षैवाश्रयापेक्षा इत्याहुः। तन्न; यागवैषम्ये प्रमाणाभावात्। सर्वथा सिद्धो गुणफलसम्बन्धः॥

प्रयोजनं—दध्नो न प्रतिनिधिरुल्लेखविशेषो वा सिद्धान्ते द्रष्टव्यम्॥ ११॥

## (१२)—समेषु कर्मयुक्तं स्यात्॥ २६॥

ताण्ड्यब्राह्मणे—"योऽपूत इव स्यादग्निष्टुता यजेताग्निनैवास्य पाप्मानमपहत्य त्रिवृता तेजो ब्रह्मवर्चसं दधाति" इत्येकं त्रिवृदग्निष्टुतं विधाय तत्र त्रिवृत्त्वे दोषं संकीर्त्य चतुष्टोममग्निष्टुद्यागान्तरं विधाय "त्रिवृदग्निष्टुदग्निष्टोमस्तस्य वायव्यास्वेकविंशमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो ह्येतेन यजेत" इति पठित्वा "एतस्यैव रेवतीषु

*तैसं. ७-१-६. †तैसं. १-५-९.

वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत" इत्याम्नातम्। तत्र यद्यपि "त्रिवृदग्निष्टुत्" इति वाक्ये प्रथमान्तपदत्रयं यजेतेत्यनेन नान्वययोग्यं तथाऽपि कर्तव्य इति पदाध्याहारेण त्रिवृदादिगुणद्वय वेशिष्टाग्निष्टुत्संज्ञकयागविधानमुपेयम्। एतेषां चाग्निष्टुतां निकायित्वेन पूर्वस्योत्तरेष्वतिदेशस्याष्टमे प्रथमे प्रसाधनात् पूर्वयागात्त्रिवृत्पञ्चदशसप्तदशैकविंशरूपचतुष्टोमकत्वस्य प्राप्तस्य बाधेन सर्वस्तोत्रेष्वपि त्रिवृत्त्वविधानम्। अत एव तस्मादेवाग्निष्टोमसंस्थाकत्वस्यापि प्राप्तेः यद्यप्यग्निष्टोमसंस्थाविधायकमग्निष्टोमपदमिति न शक्यते वक्तुम्। तथाऽपि राजन्यनिमित्तकाग्निष्टोमसंस्थाविकारभूतात्यग्निष्टोमताव्यावृत्तिफलकत्वेन अग्निष्टोमसंस्थाविधानपरं द्रष्टव्यम्। यत्तु कौस्तुभे एतत्पूर्वभावियागस्योक्थ्यसंस्थाकस्य निकायित्वेनैतद्यागप्रकृतित्वावसायात्तत उक्थ्यसंस्थाया एव प्राप्यमानत्वेन अग्निष्टोमसंस्थायाः प्रतिप्रसवार्थतया विधानपरमिति पक्षान्तरमुक्तं तत् ताण्ड्ये पूर्वं चतुष्टोमाग्निष्टुद्यागस्य विधानेऽपि तस्योक्थ्यसंस्थात्वेनानाम्नानात्किं मूलमिति चिन्त्यम्। अग्निष्टुत्पदं चाग्निदेवत्यमन्त्रसाध्यस्तोत्राम्नानात्तत्प्रख्यन्यायेन नामधेयम्। तस्य वायव्यास्विति वाक्येन "उप त्वा जामयो गिरः"* इत्यादिवायव्याऋगधिकरणकैकविंशस्तोमकत्वविशिष्टाग्निष्टोमस्तोत्रभावनोत्तरकालविशिष्टयागप्रयोगस्य फलार्थं विधानम्। तत्राग्निष्टोमस्तोत्रे पूर्वातिदेशेन प्राप्तस्य एकविंशस्तोमस्य त्रिवृत्त्वेन बाधितस्य प्रतिप्रसवः। एवमतिदेशप्राप्तानां 'यज्ञायज्ञा वो अग्नयः' इति मन्त्राणां बाधेन वायव्यामन्त्राणां विधानं रेवतीवाक्ये "रेवतीर्नस्सधमादः"† इत्यादिरेवतीऋगधिकरणकवारवन्तीयसामकाग्निष्टोमस्तोत्रभावनोत्तरकालविशिष्टयागभावनायाः फले विधानम्। तेन रेवतीभिर्वारवन्तीयाधारभूतायाः "अश्वं न त्वा वारवन्तं दध्याः" इति

---

* तैब्रा. १-८-९. † तै. सं. १-७-१३.

योनेस्तदुत्तरयोश्च बाधः । यद्यप्यग्निष्टोमस्तोत्रस्य तृतीयसवने आर्भवपवमानोत्तरं यज्ञायज्ञीयसामसाध्यस्य सर्वान्त्यत्वेन तद्भावनाया यागप्रयोगपूर्वकालत्वं संभवति । तथाऽपि सर्वाङ्गानुष्ठानसौकर्यार्थमादितोऽवधारणादग्निष्टोमस्तोत्रस्यापि तत्सिद्धेः "वाचा करोति मनसा करोति" इत्यादौ अध्यवसानेऽपि करोतेः प्रयोगादध्यवसानापरपर्यायप्रतिपत्तिपूर्वकालकत्वेन "मुखं व्यादाय स्वपिति" इत्यादाविव लाक्षणिक समकालत्वेन वा क्त्वाप्रत्ययोपपत्तिर्द्रष्टव्या इति स्थितिः । तत्र रेवतीवाक्ये पूर्वाधिकरणन्यायेन रेवत्यधिकरणकवारवन्तीयस्य रेवतीनामिव पशुरूपफलाय विधानमिति पूर्वपक्षे सिद्धान्तमाह—**समेषु** आश्रयतया परस्परानन्वयात् तुल्येषु वाक्येषु सत्सु फलं **कर्मयुक्तं** कर्मान्वितमेव स्यात् तादृशवाक्येषु एकस्य कर्मविधायकत्वं अपरस्य तत्कर्माश्रिते गुणे फलसंबन्धविधायकत्वमिति वैलक्षण्याश्रयणासंभवात् । तथा हि—रेवतीवाक्ये गुणफलसंबन्धविधौ स्वीक्रियमाणे आश्रयाकांक्षायां अग्निष्टुत्प्रकरणात्तद्वाक्यविहितस्याग्निष्टुत आश्रयतयाऽन्वय इति वक्तव्यं तत्तु न घटते अग्निष्टोमसामेत्यग्निष्टोमस्तोत्रानुवादानुपपत्तेः. अस्मादेव वाक्यादग्निष्टोमस्तोत्रस्याश्रयतयाऽन्वये तु वाक्यभेदः । प्रकरणे तु अतिदेशप्राप्तस्य अग्निष्टोमस्तोत्रस्य स्तोत्रान्तरसाधारण्येनोपस्थितत्वेऽपि विशिष्योपस्थित्यभावेन प्रकरणस्याग्निष्टोमस्तोत्ररूपाश्रयसमर्पकत्वासंभवः । तस्मादाश्रयालाभात् अग्निष्टुद्विकारतया अग्निष्टोमस्तोत्रस्य अग्निष्टुत्प्रकरणाम्नातेन "वारवन्तीयमग्निष्टोमसाम कार्यं" इति वाक्येन अग्निष्टोमस्तोत्रे वारवन्तीयस्यापि च प्राप्तत्वाच्च तत्तदनुवादेन रेवतीविशिष्टस्तोत्रभावनोत्तरकालविशिष्टैवतीकिरणकयागान्तरभावनैव पशुरूपफलोद्देशेन विधीयत इत्यत्र स्वीकार्यमिति । प्रयोजनं च पूर्वपक्षे पूर्वाग्निष्टुत्येव काम्यगुणानुष्ठानम् । सिद्धान्ते तु "निकायिनां च पूर्वस्योत्तरेषु प्रवृत्तिस्स्यात्" इत्याष्टमिकन्यायादतिदिष्टपूर्वाग्निष्टुद्धर्मकयागान्तरस्य पश्वर्थमनुष्ठानमिति बोध्यम् ॥२६॥

"त्रिवृदग्निष्टुदग्निष्टोमः" इत्यनेन विहितस्य अग्निष्टुद्यागस्य फलसम्बन्धे "तस्य वायव्यास्वेकविंशमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो ह्येतेन यजेत" इत्यनेन कृते पश्चादाम्नातं "एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत" इति। तत्रापि पूर्ववदाद्यः पूर्वपक्षः—राजसूयन्यायेन स्वकारकविशिष्टाग्निष्टोमस्तोत्रभावनाविशिष्टक्त्वाप्रत्ययार्थभूतकालकर्त्रादिरूपप्रयोगान्वयिगुणसत्त्वेन विनियोगविशिष्टप्रयोगविधिसम्भवात्। इष्यते चायमेव प्रकारो वायव्यावाक्ये सिद्धान्तिनाऽपि। द्वितीयस्तु नात्र राजसूयन्यायः प्रयोगस्याग्निष्टोमस्तोत्रोत्तरकालत्वस्य च वायव्यावाक्येनैव प्राप्ततया तदनुवादेन रेवतीविधिः फलोद्देशेनाग्निष्टुद्विधिश्चेति वाक्यभेदात्। वायव्यावाक्ये ह्यतिदेशेन सम्भवत्प्राप्तिकमप्यग्निष्टोमस्तोत्रोत्तरकालतादि ततः पूर्वप्रवृत्त्यङ्गीकारेण प्रयोगविशेषणतया विहितम्। न त्वत्र वायव्यावाक्यस्यापि क्लृप्तत्वेन अस्य पूर्वप्रवृत्त्यङ्गीकारानुपपत्तेः। न च विनिगमनाविरहः, प्राथम्यस्यैव नियामकत्वात्। अतो लाघवात् गुण एव रेवत्यधिकरणकवारवन्तीयाख्यः रेवत्याख्य एव वा अप्राप्तत्वात् फलोद्देशेन विधीयते। वारवन्तीयमग्निष्टोमसामकार्यमिति प्राकरणिकवाक्येन वारवन्तीयस्यापि प्राप्तत्वात्। न चान्त्यपक्षे तृतीयान्तेनैतच्छब्देन विलिङ्गसङ्ख्यत्वात् रेवतीमात्रनिर्देशानुपपत्तिः। तेन रेवतीविशिष्टवारवन्तीयनिर्देशेऽपि दाक्षायणयज्ञन्यायेनाप्राप्तरेवतीमात्रस्यैव फलसम्बन्धोपपत्तेः। अतो दध्निन्यायेन गुणफलसम्बन्ध एव युक्तः॥

सिद्धान्तस्तु—नात्राश्रयलाभश्शक्यते वक्तुम्। यागस्य तावत् प्रकृतत्वेऽपि "अग्निष्टोमसाम" इत्यनुवादानुपपत्तेः न साक्षादाश्रयत्वम्। अग्निष्टोमस्तोत्रद्वारा यागस्यैव वा साक्षादाश्रयत्वं तु

अग्निष्टोमस्तोत्रस्यातिदेशतस्स्तोत्रान्तरसाधारण्येनोपस्थितत्वाद्नाशङ्क्यम् । न च वायव्यावाक्येन तस्यौपदेशिकी विशिष्योपस्थितिः । आतिदेशिकऋग्बाधसम्भवे औपदेशिकतद्बाधस्यान्याय्यत्वेन विशिष्योपस्थितेराश्रयत्वासाधकत्वात् । न च साम्नो गायतिधातुवाच्यत्वेन क्रियारूपत्वादाश्रयालाभेऽपि न क्षतिः । साम्नो ध्वन्यात्मकस्वरसमाहाररूपत्वेन वाक्यशेषादौ प्रसिद्धस्य सिद्धरूपतया धातुवाच्यत्वस्याप्रयोजकत्वात् । अन्यथा—सौभरस्यापि स्तोत्राश्रयत्वानुपपत्तेः वारवन्तीयसाम्नः आश्रयानपेक्षणे "अग्निष्टोमसाम" इत्याद्यनुवादानुपपत्तेश्च । अतः साम्न आश्रयसापेक्षत्वान्न तावत्प्रकरणेनाश्रयलाभः । न च "वारवन्तीयमग्निष्टोमसाम कार्यं" इति प्राकरणिकेन वाक्येनैव गौरवभिया अङ्गत्वानभिधानात् आश्रयसमर्पणमिति वाच्यम् । साम्नो गुणत्वपक्षे तल्लाभोपपत्तावपि रेवतीमात्रस्य गुणत्वे तदयोगात् । साम्नो गुणत्वं तु विधेरप्राप्तरेवतीमात्रसङ्क्रमादेवासम्भवि । फलपदाभावे हि विधिर्यद्विषये अप्राप्ततया व्याप्रियते तस्यैव प्रयोजनाकाङ्क्षया फलसम्बन्धः यथा—गोदोहनादेः । तदत्र पशुपदाभावे वारवन्तीयस्य प्राकरणिकवाक्येनैव प्राप्तत्वात् विधिरप्राप्तरेवतीमात्रविषयः सम्पद्यत इति तस्यैव फलसम्बन्धो वाच्यः । न चास्याश्रयः केनापि प्रकारेण लब्धुं शक्यः । न च प्रकारान्तरेणालाभेऽपि अनेनैव वाक्येन आश्रयविशिष्टगुणविधानाद्वा तल्लाभोपपत्तिः । क्लृप्तप्रयोजनत्वान् लाघवेनाश्रयतासम्बन्धेनैव वैशिष्ट्याङ्गीकाराच्च न गुणाङ्गताऽऽपत्तिरिति वाच्यम् । आश्रयस्य गुणान्वयाव्युत्पत्तेः । कर्मत्वातिरिक्तस्याश्रयत्वस्य दुर्वचत्वेन भावनायाः फलाश्रयरूपोभयकर्मत्वाङ्गीकारे एककर्मकत्वभङ्गापत्तेश्च । न च क्त्वाशब्दोक्तायामाश्रयस्याग्निष्टोमस्तोत्रस्य कर्मत्वात् तदुत्तरका-

लताविशिष्टगुणभावनायाः आख्यातोपात्तायाः पशुकर्मत्वान्नैकस्याः भावनाया द्विकर्मकत्वापत्तिरिति वाच्यम् । गुणभावनाया अवच्छेदकीभूतधात्वर्थापेक्षायां यागस्यावच्छेदकत्वाङ्गीकारे रेवतीनां यागकरणत्वापत्त्या स्तोत्रं प्रति करणत्वानापत्तेः । स्तोत्रस्यैवावच्छेदकत्वाङ्गीकारे तु धात्वर्थद्वयावच्छिन्नभावनाद्वयाभावात् क्त्वाप्रत्ययानुपपत्तिः । न च रेवतीविशिष्टाग्निष्टोमस्तोत्रभावनोत्तरकालविशिष्टरेवतीकरणकयागाश्रयकभावनैव फलोद्देशेन विधीयतामिति वाच्यम् । आख्यातोपात्तभावनाया द्विकर्मकत्वापत्तेस्तदवस्थत्वात् । न च प्रकरणाद्यागस्य आश्रयत्वोपपत्तेः न द्विकर्मकत्वम् । तथात्वेऽपि तृतीयान्तैतच्छब्दस्य धातुपारार्थ्यभयेन यागपरामर्शित्वस्यैवोपपत्तौ रेवत्यादिपरामर्शकत्व एव प्रमाणाभावात् । अतस्तदपेक्षया लघुभूतकर्मान्तरविधानमेव ज्यायः । तदा हि निकायित्वेनाग्निष्टुद्यागविकारत्वात् वारवन्तीयं प्राप्तमेवानूद्यते केवलं रेवतीविशिष्टस्तोत्रभावनोत्तरकालविशिष्टरेवतीकरणकयागान्तरभावनैव फलोद्देशेन विधीयते । षष्ठ्यन्तैतच्छब्दः प्रकृतिविकारभावानुवादकः । तृतीयान्तैतच्छब्दः प्रस्तोष्यमाणकर्मवचनो न दुष्यति । उत्तरकाललक्षणो गुणश्च प्रयोगान्वयित्वात् अवेष्टिवद्यद्यपि तद्भेदमेवापादयेत् । तथाऽपि कालस्यात्र सम्भवत्प्राप्तिकतया वाक्यभेदपरिहारार्थं विधेयत्वेऽपि तात्पर्यगत्या यागे परंपरासम्बन्धेन विधेयस्य रेवत्याख्यस्य गुणस्य उत्पत्त्यन्वयित्वात् कर्मभेदबोधकत्वाविघातः ॥ १२ ॥

**(१३)–सौभरे पुरुषश्रुतेर्निधने कामसंयोगः ॥ २७ ॥ सर्वस्य वोक्तकामत्वात्तस्मिन्कामश्रुतिस्स्यान्निधनार्था पुनश्श्रुतिः ॥ २८ ॥**

ताण्ड्यब्राह्मणे षोडीशसंस्थावान्तरप्रकरणे—'सौभरमुक्थानां ब्रह्मसाम भवति' इत्यनेन षोडश्यपूर्वसाधनीभूतब्रह्मसामस्तोत्रोद्देशेन समाम्नायावगतं सौभरं साम नित्यतया विहितम् । तस्य च स्तोत्रस्य वस्तुत उक्थाख्यस्तोत्रत्रयमध्यमत्वादुक्थानामित्यनुवादः । नैमित्तिकतया तु अतिरात्रसंस्थावान्तरप्रकरणे तद्विहितम् । तथा ब्रह्मसामस्तोत्रं प्रकृत्य "यो वृष्टिकामो योऽन्नाद्यकामो यस्स्वर्गकामस्स सौभरेण स्तुवीत" इत्याम्नाते वाक्ये उक्तस्तोत्राश्रितं सौभरं साम प्रत्येकं फलत्रयार्थं विधीयते । तस्य च साम्नस्समाम्नानकाले उद्गीथप्रस्तावप्रतिहारोपद्रवनिधनाख्यानां सामावयवानामन्तिमे निधने 'हीष् ऊ ऊर्क्' इत्यादीनि स्तोभाक्षराणि शाखाभेदेनाम्नातानि । तदेतादृशं सौभरं प्रकृत्य "हीषिति वृष्टिकामाय निधनं कुर्यादूर्गित्यन्नाद्यकामाय ऊ इति स्वर्गकामाय" इत्याम्नाते वाक्ये किं रेवत्यधिकरणन्यायेन हीषादिविशिष्टनिधनान्तरं फलार्थं विधीयते? किं वा इन्द्रियकामन्यायेन हीषादिस्तोभाक्षराणि प्रकृतसौभराश्रितानि वृष्ट्याद्यर्थत्वेन विधीयन्ते? उत वृष्ट्याद्यर्थसौभर एवानियमेन प्राप्तानि तानि नियम्यन्ते? इति सन्देहे पूर्वपक्षमाह—**सौभरे निधने** सौभरसम्बन्धिनिधने **कामसंयोगः** फलसम्बन्धः कुतः **पुरुषश्रुतेः** वृष्टिकामपुरुषस्य वृष्टिकामपदेन श्रवणात् रेवतीवाक्यवत् वृष्टिफलकस्य हीषादिविशिष्टनिधनान्तरस्य विधानौचित्यात् । यदि तु प्रकरणादिह सौभरस्याश्रयतयाऽन्वयसम्भवात् रेवत्यधिकरणनयाप्रवृत्तिः । न च रेवतीवाक्ये अग्निष्टोमस्तोत्रस्यैवैतद्वाक्ये निधनस्यानुवादानुपपत्तिरिति वाच्यं तत्तच्छाखासु निधन एव हीषादिपाठात् निधनस्य हीषाद्याधारतायाः प्राप्तत्वेनेह तदनुवादसम्भवात् इत्युच्यते तथेन्द्रियकामाधिकरणनयेन **सौभरे निधने** सौभरसम्बन्धिनिधनसम्बन्धिहीषादेः कामसंयोगः आस्तां पुरुषश्रुतेः वृष्टिकामपुरुषपरपदश्रवणात् तदर्थफलस्य हीषादिनाऽन्वेतुमुचितत्वादिति ॥ २७ ॥ सिद्धान्तमाह—वा इति

पूर्वपक्षव्यावृत्तिः । सर्वस्य निखिलस्यापि सौभरस्य उक्तकामत्वात् "यो वृष्टिकामः" इत्यादिवाक्येन प्रतिपन्नफलत्वात् तत्फलस्यैवेह प्रत्यभिज्ञायमानतया **तास्मिन्** सौभर एव **कामश्रुतिः** फलसम्बन्धप्रतिपादनपरमिदं वाक्यं **स्यात्** । ननु सौभरे फलसम्बन्धस्य "यो वृष्टिकामः" इति वाक्येनैव प्राप्तत्वादिदं व्यर्थमित्यत आह—**पुनश्श्रुतिः** सौभरफलपुनश्श्रवणरूपमिदं वाक्यम् **निधनार्था** वृष्टिसाधनीभूतविजातीयसौभरवृत्तिनिधनलाक्षणिकतया तत्र वृष्टिपदस्य तादृशनिधन एव हीषित्यादिरीत्या निधननियमार्थं नियमविधिलाघवानुरोधेनाश्रीयते । वस्तुतस्तु—वृष्ट्यादिफले स्वसाधनविजातीयसौभरवृत्तिनिधनाधारत्वसम्बन्धेन हीषादेर्नियमस्स्वीक्रियते इति न लक्षणाऽपि । तथा च न वैयर्थ्यमिति भावः । प्रयोजनं पूर्वपक्षे सौभरफलाद्वृष्ट्यादेरतिरिक्तं हीषादिफलं वृष्ट्यादिकम् । सिद्धान्ते तु नातिरिक्तमिति ध्येयम् ॥ २८ ॥

**इति सारबोधिन्यां द्वितीयस्य द्वितीयः.**

---

**ब्रह्मसामाख्यं स्तोत्रं प्रकृत्य समाम्नातैः "यो वृष्टिकामो योऽन्नाद्यकामो यस्स्वर्गकामस्स सौभरेण स्तुवीत" इत्येतैरुक्तस्तोत्राश्रितं सौभरं साम फलत्रयोद्देशेन विधीयते । उद्देश्यानेकत्वेन स्तुवीत इत्यस्यानुषङ्गेण वाक्यभेदप्रतीतेः । सौभरे च शाखाभेदेन निधनाख्यान्तिमसामावयवाधारतया 'हीष् ऊ ऊर्क्' इत्यादीन्यक्षराण्याम्नातानि तदेव सौभरं प्रकृत्य "हीषिति वृष्टिकामाय निधनं कुर्याद् इति स्वर्गकामाय ऊर्गित्यन्नाद्यकामाय" इति श्रुतम् । तत्र वृष्टिकामादिशब्दानां फलपरत्वात् तदुद्देशेनैव हीषादयो गुणा विधीयन्ते । सौभरं च प्रकृतत्वाद्यूपादिवदाश्रयः निधनाधारतया हीषादिपाठस्यैव नियामकत्वात्**

भागान्तरे स्तोभाद्यक्षरान्तरबाधापत्तेश्च न निधनातिरिक्तभागस्याश्रयत्वापत्तिः । न च लाघवाद्वृष्टिसाधनसौभरीयनिधने अनियमेन प्राप्तानां हीषादीनां नियममात्रकरणात् व्यवस्थार्थत्वं शङ्क्यम् । तथात्वे वृष्टिकामादिपदैस्तत्तत्साधनीभूतसौभरलक्षणाद्यापत्तेः । तस्य च निधनविशेषणत्वे विशिष्टोद्देशापत्तेश्च । अतस्सौभरफलात् फलान्तरार्थानि हीषादीनीति प्राप्ते—

नियमाख्यविधिलाघवानुरोधेन वृष्टिकामादिपदैर्वृष्टिसाधनसौभरलक्षणामङ्गीकृत्यापि हीषादिनियमविधिरेवाश्रीयते पक्षप्राप्तिश्च पाठान्निधनस्थान एवेति नियमस्यापि तत्स्थानकत्वलाभः । वस्तुतस्तु—नियमविधिलाघवानुरोधेन हीषादेर्वृष्ट्याद्यर्थतैव स्वसाधनसौभराधारत्वसम्बन्धेनाश्रीयत इति न लक्षणाऽपि । सम्बन्धघटकीभूतं च सौभरं न सौभरत्वावच्छिन्नं अपि तु सौभरविशेष एव । शाखाभेदेन हि कचिद्विजातीयानि सौभराणि निधनान्तरयुक्तानि समाम्नातानि । तत्र हीषः पक्षेऽप्यप्राप्तत्वात् न तस्य सौभरस्य सम्बन्धघटकत्वम् । अपि तु यज्जातीयसौभरे हीषादीन्यनियमेन समाम्नातानि तज्जातीयस्यैव तत् । अतश्च वृष्ट्यर्थे निरुक्तसम्बन्धेन हीषेवेति नियमकरणात् सम्बन्धघटकीभूतसौभरे निधनान्तरव्यावृत्तिवत् विजातीयसौभरान्तरस्यापि वृष्ट्याद्यर्थत्वव्यावृत्तिसिद्धिः । अतश्च तन्नित्यप्रयोगविषयमेव सम्पद्यत इति विवेकः ॥ १३ ॥

इति खण्डदेवकृतायां भाट्टदीपिकायां
द्वितीयस्य द्वितीयः पादः.

---

**(१)–गुणस्तु क्रतुसंयोगे कर्मान्तरं प्रयोजयेत्संयोगस्याशेषभूतत्वात् ॥ १ ॥ एकस्य तु लिङ्गभेदात्प्रयोजनार्थमुच्येतैकत्वं गुणवाक्यत्वात् ॥ २ ॥**

कृतिसाध्यत्वेनानिश्चितविधेयताकगुणप्रयोज्यभेदनिरूपणमेतत्पादार्थः । पूर्वपादे हि वाजिनादयो गुणाः पक्षद्वये निश्चितविधेयताका एव भेदकत्वेन विचारिताः । अत्र तु रथन्तरसामकत्वादिः पूर्वपक्षे विधेयो गुणः सिद्धान्ते त्वविधेय इत्यनिश्चितविधेयताक इति रीत्या द्रष्टव्यम् । ज्योतिष्टोमे—"यदि रथन्तरसामा सोमस्स्यादैन्द्रवायवाग्रान्ग्रहान्गृह्णीयात् यदि बृहत्सामा शुक्राग्रान्गृह्णीयात्" इत्याम्नातम् । येषु दारुपात्रेषु तत्तद्देवताभेदेन सोमरसो गृह्यते ते ग्रहा ऐन्द्रवायवमैत्रावरुणाश्विनादयः प्रातस्सवने गृह्यन्ते । तत्र रथन्तरसामत्वपक्षे ऐन्द्रवायवमादितः कृत्वा ते ग्रहा ग्राह्याः । बृहत्सामत्वपक्षे तु शुक्रमादितः कृत्वेति तदर्थः । तत्र **गुणस्तु** रथन्तरं साम यस्येति बहुव्रीहौ वर्तिपदार्थरूपो रथन्तरसामात्मको गुण अन्यपदार्थतयाऽवगतसोमक्रतुरूपविशेष्यसम्बन्धे सति **कर्मान्तरं** प्रकृतज्योतिष्टोमाद्भिन्नमेव कर्म **प्रयोजयेत्** गमयेत् कुतः **संयोगस्य** विशेषणसम्बन्धस्य **अशेषभूतत्वात्** विशेष्यभूताशेषवस्तुव्याप्तत्वात् । तथा च 'शङ्खः पाण्डुरः' इत्यादौ पाण्डुरत्वादेश्शङ्खत्वादिरूपविशेष्यतावच्छेदकावच्छेदेन स्वायोगव्यावृत्त्या विशेषणत्वदर्शनात् प्रकृते च ज्योतिष्टोमे गायत्रादिसामान्तराणामपि सत्त्वेन अवच्छेदकावच्छेदेन रथन्तरसामान्वयस्याप्राप्ततया निमित्तत्वासम्भवात् केवलरथन्तरसाम्नः ऐन्द्रवायवाग्रतायाश्च विधाने वाक्यभेदात् तदुभयविशिष्टं क्रत्वन्तरमेवात्र विधीयते । प्राप्तिद्योतकस्याप्यत्र यदिशब्दस्य "यदाग्नेयः"* इत्यादौ य-

*तै. सं. २-१-२.

दादिपदस्येव प्रमाणान्तरप्राप्त्यसम्भवादविवक्षितार्थकतेति भावः ॥ १ ॥ सिद्धान्तमाह—तुश्शङ्काव्यावृत्त्यर्थः । एकस्य प्रकृतस्यैव ज्योतिष्टोमस्य क्रतोः **लिङ्गभेदात्** रथन्तरबृहदादिरूपाङ्गभेदेन ग्रहाग्रताविशेषरूपप्रयोजनभेदसिद्ध्यर्थं "यदि रथन्तरसामा" इत्यादिवाक्यं यदिशब्दघटितं **उच्येत** आरभ्येत । अतोऽस्मिन्वाक्ये अन्यपदार्थभूतस्य क्रतोः **एकत्वं** प्रकृतज्योतिष्टोमापेक्षया अभिन्नत्वमेव । **गुणवाक्यत्वात्** पूर्वकर्मणि सम्भवन्निवेशगुणवाक्यत्वात् । न च प्रकृतक्रतावन्यपदार्थे रथन्तरसाम्नः गुणस्य विशेषणस्य विशेष्यतावच्छेदकव्यापकतया अन्वयासम्भवादसम्भवन्निवेशतेति वाच्यं स्वावान्तरकार्यपृष्ठस्तोत्रावच्छेदेन विशेष्यतावच्छेदकव्यापकताया अपि सम्भवात् । क्रत्वन्तरविधिपक्षेऽपि प्रोक्षणावघातादौ रथन्तरसामाद्यभावेन स्तोत्रावच्छेदेनैव विशेष्यतावच्छेदकव्यापकताया उपपादनीयत्वात् इति । प्रयोजनं तु पूर्वपक्षे ज्योतिष्टोमाङ्गभूतं सोमयागान्तरं बृहन्मात्रसामकं रथन्तरमात्रसामकं च कार्यम् । सिद्धान्ते नेति । तथा ज्योतिष्टोमे रथन्तरसामत्वाभावेऽपि पाठप्राप्तैन्द्रवायवाग्रतैव पूर्वपक्षे । सिद्धान्ते नेति ॥ २ ॥

**ज्योतिष्टोमे "यदि रथन्तरसामा सोमस्स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयाद्यदि बृहत्सामा शुक्राग्रान्" इति श्रुतम् । तत्र यदिशब्दोपात्तस्य निमित्तत्वस्य न तावद्रथन्तरे बृहति वाऽन्वयः तस्य विशेषणत्वेन वृत्त्यनर्हत्वात् । नाप्यन्यपदार्थे तस्य कादाचित्कत्वाभावात् । नापि विशिष्टे ज्योतिष्टोमे सामान्तराणामपि नियतत्वेन बृहद्रथन्तरयोरन्ययोगव्यावृत्त्या विशेषणत्वासम्भवात् । ज्योतिष्टोमत्वावच्छेदेनायोगस्यापि व्यावर्तयितुमशक्यत्वाच्च । अतस्समासार्थस्य केवलरथन्तरसामकत्वस्य प्रकृते कर्मणि ग्रहाग्रतानिमित्तत्वेन निवेशायोगात् उभयविशिष्टं कर्मान्तरमेव विधीयते । यदिशब्दस्त्वविवक्षितार्थ इति प्राप्ते—**

बृहद्रथन्तरयोर्ज्योतिष्टोमे पाक्षिकत्वात् स्वायोगव्यावृत्त्या परस्परायोगव्यावृत्त्या वा विशेषणत्वोपपत्तेः । न च ज्योतिष्टोमत्वावच्छेदेन तदभावः स्वावान्तरकार्यपृष्ठस्तोत्रत्वावच्छेदेन तदुपपत्तेः । अन्यथा तवापि साक्षाद्यागे प्रोक्षणावघातादौ तदसम्भवावश्यम्भावात् । अतो युक्तैव रथन्तरयुक्तस्य क्रतोर्निमित्तता । वस्तुतस्तु—न क्रतोर्निमित्तान्तर्भावः । प्रयोजनाभावात् । प्रकरणावगतक्रत्वङ्गत्वबलेनान्यपदार्थसम्बन्धस्यानुवादत्वात् अन्यथा ज्योतिष्टोमरूपान्यपदार्थस्य विकृतावभावेन शुक्राग्रतादेरनापत्तेः । अतो लक्षणयाऽपि रथन्तरमेव निमित्तं नैमित्तिकं त्वग्रताविशेषः प्रकृतापूर्वसाधनीभूतग्रहोद्देशेन विधीयते न च पाठादैन्द्रवायवाग्रत्वनियमस्य प्राप्तेस्तद्विधिवैयर्थ्यम् । ततः पूर्वमेव नैमित्तिकतया विधानात् । तत्प्रयोजनं च निमित्ताभावे प्रकृतौ विकृतौ च लोपः । यद्यपि च सर्वत्र निमित्तस्य स्वसत्त्वे नैमित्तिकावश्यकत्वमात्रं प्रमेयं तथाऽपि तस्यात्र पाठादेव सिद्धेस्तदभावे तदभाव एव प्रमेयं बोध्यम् । तस्मान्न कर्मान्तरविधिः ॥ १ ॥

## (२)—अवेष्टौ यज्ञसंयोगात्क्रतुप्रधानमुच्यते॥३॥

राजसूयप्रकरणे—"आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणैन्द्रमेकादशकपालमृषभो दक्षिणा वैश्वदेवं चरुं पिशङ्गी पष्ठौही दक्षिणा मैत्रावरुणीमामिक्षां वशा दक्षिणा बार्हस्पत्यं चरुं शितिपृष्ठो दक्षिणा"* इति वाक्यैरवेष्टिसंज्ञकेष्टयः पञ्च विहिताः । अत्रैकावेष्टिसंज्ञायोगेऽपि उत्पत्तिवाक्ये प्रत्येकं दक्षिणाऽऽम्नानाद्दक्षिणायाश्च कर्त्रानत्यर्थत्वात्तद्भेदेन कर्तृभेदप्रतीतेस्तद्भेदने च प्रयोगभेदावगतेरेकैकं कर्मा-

*तै. सं. १-८-१९.

मयन्वाधानादिब्राह्मणतर्पणान्ताङ्गविशिष्टं भेदेनानुष्ठेयमित्येकादशे चतुर्थे 'अवेष्टौ चैकतन्त्र्यं स्याल्लिङ्गदर्शनात्" इत्यत्र वक्ष्यते । तदेतदवेष्ट्यवान्तरप्रकरणे "यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वा तमभिघारयेद्यदि राजन्य ऐन्द्रं यदि वैश्यो वैश्वदेवं" इत्याम्नायते । ब्राह्मणो यदि यजेत तदा पञ्चानामप्येतेषां हविषां वेद्यामासादने पञ्चमस्थाने पठितस्य बार्हस्पत्यस्य तृतीयस्थाने मध्यमे आसादनं कृत्वाऽवशिष्टहविषां प्रत्येकं क्रमेणाहवनीये प्रक्षेपानन्तरं तद्धविस्संस्कार्योपस्तरणाभिघारणाज्यशेषेण जुहूस्थेन बार्हस्पत्यस्य मध्ये आसादितस्याभिघारणं कृत्वाऽन्ते तस्य होमः कर्तव्य इति ब्राह्मणवाक्यस्यार्थः । एवमितरयोरप्यर्थो बोध्यः । वैश्यवाक्ये स्वत एव वैश्वदेवस्य तृतीयस्थाने पठितत्वात्तेनैव मध्ये निधानप्राप्तेः मध्ये निधानविधिर्नित्यानुवादः । तदत्र पूर्वाधिकरणन्यायेन यदिशब्दबलात् ब्राह्मणकर्तृकानिमित्ते नैमित्तिकं मध्ये निधानं विधीयते इति बहिः पूर्वपक्षे सिद्धान्तमाह— **अवेष्टौ** अवेष्टिसन्निधौ पठितमुदाहृतं वाक्यं **क्रतुप्रधानं** ब्राह्मणादिकर्तृविशिष्टापूर्वक्रतुप्रयोगविधिपरं **उच्यते** न्यायविद्भिः कुतः **यज्ञसंयोगात्** यज्ञे राजसूयाख्ये क्षत्रियस्याधिकारितया सम्बन्धात् "राजा राजसूयेन स्वाराज्यकामो यजेत" इत्यत्र राजपदस्य क्षत्रियरूढस्य श्रुतेः । तथा च राजसूयाङ्गभूतायामवेष्टौ ब्राह्मणवैश्ययोः कर्तृतयाऽप्राप्तत्वात् निमित्ततया तदनुवादायोगेन विधेयत्वावश्यकत्वात्प्राप्तयागानुवादेन ब्राह्मणादिकर्तृत्वरूपानेकगुणविधौ वाक्यभेदापत्तेर्ब्राह्मणादिकर्तृत्वरूपात्पूर्वत्रानिविशमानात्प्रयोगान्वयिगुणात्प्रयोगभेदः "एतयाऽन्नाद्यकामं याजयेत्" इति विनियोगावगतफलार्थं बहिःक्रतु विधीयत इति स्वीकार्यमिति भावः ॥ ३ ॥

**राजसूये राजकर्तृके प्रत्येकदक्षिणाम्नानात् अवेष्टिसंज्ञकाः पञ्चेष्टयः पृथक्प्रयोगास्समाम्नाताः । तदवान्तरप्रकरणे 'यदि ब्राह्म-**

णो यजेत बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वाऽभिघारयेत् यदि राजन्य ऐन्द्रं यदि वैश्यो वैश्वदेवं' इति श्रुतम्। तत्रापि पूर्ववत् ब्राह्मणकर्तृकत्वादि निमित्तमेव यदिशब्दश्रुतेः। राजसूयस्य त्रैवर्णिककर्तृकत्वेन ब्राह्मणादेः प्राप्तत्वाच्च। राजशब्दस्य प्रजापालनकर्तरि सर्वलोकप्रसिद्धेः क्षत्रियमात्रे द्रविडप्रसिद्धेस्तु म्लेच्छप्रसिद्धत्वेनासाधकत्वात्। व्याकरणप्रसिद्धेस्तन्मूलकत्वेनानियामकत्वाच्च। सर्वलोकप्रसिद्धेश्श्रौतयादिशब्दमूलकत्वाच्च। अतो ब्राह्मणादिकर्तृकत्वे निमित्ते मध्ये निधानपूर्वकप्रत्याहुत्यभिघारणविशिष्टपञ्चहविष्कैकेष्टिप्रयोगो राजसूयान्तर्गतो विधीयते प्रत्येकप्रयोगाश्च पञ्चानुलोमविषया इति बोध्यम्। 'एतयाऽन्नाद्यकामं याजयेत्' इत्यनेन चोभयोरपि नित्यनैमित्तिकप्रयोगयोः फलार्थं बहिःक्रत्वनुष्ठानमिति न ब्राह्मणादिगुणस्य भेदकत्वमिति प्राप्ते—

'राजानमभिषिञ्चेत्' इति श्रुतौ राजोद्देशेनाभिषेकविधानादभिषिक्ताधिकारिकराज्ययोगात्पूर्वमेव राजशब्दस्य क्षत्रियत्ववाचित्वप्रतीतेः 'तस्य कर्माणि' इत्यधिकृत्य 'पत्यन्तपुरोहितादिभ्यो यक्' इति स्मृत्या पुरोहितादिगणपठितात् राजशब्दात् यगादिविधानेन च राजशब्दस्य राजशब्दप्रसिद्धिपूर्वकत्वावगतेर्द्रविडप्रयोगानुसारेण राजशब्दः क्षत्रियवचन एव। अतश्चावेष्टौ ब्राह्मणादीनां प्राप्त्यभावात् विधेयत्वावगतेः कर्तृरूपाद्गुणात् अवेष्टिप्रयोगान्तरमेव पञ्चहविष्कैकेष्टिरूपं समस्तगुणविशिष्टं बहिःक्रतु विधीयते। तस्य चोक्तवचनेनान्नाद्यं फलम्। अन्तःक्रतौ तु प्रत्येकं पञ्च प्रयोगा एव। यद्यपि च पूर्वपक्षसिद्धान्तयोः पञ्चहविष्कैकेष्टिप्रयोगस्तुल्यः। तथाऽपि ब्राह्मणादिगुणस्य पूर्वपक्षे न भेदकत्वं

सिद्धान्ते तु तदिति विशेषः । तत्प्रयोजनं पक्षद्वयोपपादनेनैवोक्तम् । न चैवं राजन्यवाक्ये तस्य प्राप्तत्वात् विधेयत्वाभावेन भेदकत्वानापत्तिः । राजन्यपदस्याभिषिक्तानभिषक्तक्षत्रियमात्रवाचित्वेन राजसूयेऽप्राप्तस्यैव तस्य विधेयतया भेदकत्वोपपत्तेः । राजसूये हि राजपदस्य क्षत्रियमात्रशक्तस्यापि 'राजेत्येतानभिषिक्तानाचक्षते' इति निरूढलक्षणातात्पर्यग्राहकाल्लिङ्गादभिषिक्तक्षत्रियस्यैवाधिकारः । अतस्सिद्धं त्रिष्वपि वाक्येषु कर्तृरूपस्य गुणस्य प्रयोगभेदकत्वम् । यदिशब्दश्च 'अभिघारयेत्' इति लिङः प्रयोज्यत्वापरपर्यायहेतुमदर्थकत्वे आख्यातद्वयैकवाक्यत्वे च तात्पर्यग्राहकः । तेन मध्ये निधानपूर्वकप्रत्याहुत्यभिघारणप्रयोजकीभूतैर्ब्राह्मणादिकर्तृकैर्यागैरिष्टं भावयेदिति वाक्यार्थो बोध्यः ॥ २ ॥

## (३)–आधानेऽसर्वशेषत्वात् ॥ ४ ॥

" वसन्ते ब्राह्मणोऽग्नीनादधीत ग्रीष्मे राजन्यः शरदि वैश्यः " इति वाक्ये ब्राह्मणादिषु निमित्तेषु वसन्तादिकालस्य आधाने विधिः । पूर्वाधिकरणीयात्विष्टिवाक्ये ब्राह्मणादेः प्राप्त्यसम्भवेन निमित्ते नैमित्तिकविधानासम्भवेऽपि सर्ववर्णसाधारणस्वर्गकामनावदाधिकारिकक्रत्वङ्गभूताग्निसाधनभूते आधाने सर्वेषामपि वर्णानामर्थप्राप्ततया निमित्ततया तदनुवादेन नैमित्तिकविधानसम्भवादिति बहिःपूर्वपक्षे सिद्धान्तमाह—**आधाने** आधानविषयकं "वसन्ते" इत्यादिवाक्यमपि ब्राह्मणादिवर्णवसन्तादिकालोभयविशिष्टाधानादिपरमेव; न गुणप्रधानं **असर्वशेषत्वात्** सर्वस्य ब्राह्मणादिवर्णवसन्तादिकालैतदुभयस्य शेषतया विधानासम्भवात् । किं ब्राह्मणादिवर्णे निमित्ते कालविधानं किं वा काले निमित्ते ब्राह्मणादिकर्तृविधानमिति विनिगमनाविरहादुभयोः प्रत्येकं विधानासम्भव इति भावः ॥४॥

"वसन्ते ब्राह्मणोऽग्नीनादधीत । ग्रीष्मे राजन्यः । शरदि वैश्यः" इति श्रुतम् । तथा—"वसन्ते ब्राह्मणमुपनयीत । ग्रीष्मे राजन्यम् । शरदि वैश्यम्" इति च । तत्र सर्ववर्णसाधारणानां क्रतूनामग्निविद्यासाध्यत्वात् अग्नेश्च उपायभूतस्याधानस्य "य एवं विद्वानग्निमाधत्ते" इत्यनेनानन्याक्षिप्तशक्तिकेन अग्न्युद्देशेनाधानविधायिना प्राप्तत्वादाधाने ब्राह्मणादीनां प्राप्तेर्निमित्तार्थं श्रवणम् । ब्राह्मणकर्तृकत्वे निमित्ते वसन्तः काल आधानाङ्गत्वेन विधीयते । अथवाऽस्त्वेतस्य 'अथ सम्भारान् सम्भरति' इति विध्यन्तरशेषस्य वर्तमानापदेशता । तथाऽपि 'सम्भारेष्वग्निमादधाति' इत्ययमाधानप्रापको विधिः । अत्र हि न सम्भारा विधेयाः, प्रमाणान्तरप्राप्तत्वात् । नापि तदधिकरणत्वं 'तास्मिन्नाधायिताऽयम्' इति मन्त्रवर्णादेव प्राप्तत्वात् । अत आधानमात्रविधिपरम् । अथवा प्राप्ताधानानुवादेन कालविधेः आत्मनेपदार्थस्य अनाधातुराहवनीयत्वाभावरूपस्य च विधिरिति वाक्यभेदापत्तेः 'जातपुत्रः कृष्णकेशोऽग्नीनादधीत' इत्ययमाधानप्रापको विधिः । उक्तवाक्ये तु अभ्युदयशिरस्कतया मन्त्रवर्णात्पूर्वमेवाधिकरणत्वविधिः । एवं च—जातपुत्रवाक्ये वयोवस्थाविशेषलक्षणापि नापद्यते । सर्वथा आधानप्राप्तेर्निमित्तार्थानि ब्राह्मणादिश्रवणानि न भेदकानि । तथा विद्यासाधनतया अध्ययनं तत्साधनत्वेनोपनयनं चार्थप्राप्तम् । अध्ययनस्य तु "स्वाध्यायोऽध्येतव्यः"* इत्यनेन नियमोऽपि । अतस्सर्वसाधारण्येन प्राप्तोपनयनोद्देशेन ब्राह्मणकर्तृकत्वे निमित्ते वसन्तः कालो विधीयते इति प्राप्ते—

सर्वकर्तृत्ववत् सर्वकालकत्वस्याप्याधानादौ प्राप्तिसम्भवेन ब्राह्मणकर्तृकत्वे निमित्ते कालविधिः काले वा निमित्ते कर्तृवि-

* तै. आ. २-१५.

धिरित्यत्र विनिगमनाविरहात् उभयविशिष्टाधानविधिरेव । उपनयनस्य च पक्षेऽप्यसम्भवत्प्राप्तिकत्वेन सुतरां विध्युपपत्तिः । अत एव—विनिगमनाविरहात् कर्तृकालादिरूपस्य प्रयोगान्वयिगुणस्य प्रयोगविध्यापाद्यकत्वावश्यंभावे एतद्विधिविहितप्रयोगानुवादेनैव जातपुत्रादिवाक्येषु वयोऽवस्थाविशिष्टकर्तृविधिः । आत्मनेपदार्थस्य चोत्पत्त्याद्यन्वयिनो गुणस्य श्रवणात् उत्पत्त्यादिकमप्यत्रैव; न तु जातपुत्रादिवाक्ये वाक्यभेदापत्तेः । प्राथम्याद्वा ब्राह्मणवाक्य एवोत्पत्त्यादि । इतरयोस्तु प्रयोगमात्रम् । तेन सिद्धोऽत्रापि गुणात्प्रयोगभेदः । एतयोश्चाधानोपनयनयोरग्निर्विद्याफलकत्वेपि अकरणे प्रत्यवायादिश्रवणान्नित्यत्वमपि । एवं च स्वविधिप्रयुक्ताधानोपनयनजन्याग्निविद्यालाभे क्रतुविधयः नाग्निविद्ये तदुपायान्वा प्रयुञ्जत इति न तद्रहितस्य शूद्रादेरधिकार इति प्रयोजनं षष्ठे वक्ष्यते ॥ ३ ॥

**(४)–अयनेषु चोदनान्तरं संज्ञोपबन्धात् ॥ ५ ॥ अगुणा च कर्मचोदना ॥ ६ ॥ समाप्तं च फले वाक्यम् ॥ ७ ॥ विकारो वा प्रकरणात् ॥ ८ ॥ लिङ्गदर्शनाच्च ॥ ९ ॥ गुणात्संज्ञोपबन्धः ॥ १० ॥ समाप्तिरविशिष्टा ॥ ११ ॥**

अयनेषु "दाक्षायणयज्ञेन यजेत प्रजाकामः" "साकंप्रस्थायीयेन यजेत पशुकामः"* "सङ्क्रमयज्ञेन यजेतान्नाद्यकामः" इत्यादिषु दर्शपौर्णमासप्रकरणाम्नातवाक्येष्वपि अयनपदोपलक्षितेषु पूर्वाधिकरणनयेन

* तै. सं. २-६-४.

**चोदनान्तरं** प्रकृतात्कर्मणोऽन्यस्य कर्मणो विधायकं स्यात् न गुणस्य कुतः **संज्ञोपबन्धात्** दाक्षायणयज्ञादिसंज्ञानां कर्मसमानाधिकरणानां तत्तद्वाक्ये आम्नानात् । तत्तत्पदानां गुणे अप्रसिद्धत्वेन तत्तत्पदानां गुणविधिपरत्वानुपपत्तेः ॥ ५ ॥ **अगुणा** असम्भवद्गुणचोदनारूपा **च** चोदना **कर्मचोदना** एव । अयंभावः—दाक्षायणपदार्थस्य लौकिकगुणस्याप्रसिद्धत्वेऽपि दक्षस्य यजमानस्येमे दाक्षाः ऋत्विजस्तेषामयनं प्रयोगावृत्तिः दाक्षायण इत्येवमवयवव्युत्पत्त्यवगतः आवृत्तिरूपो गुण एव फलाय विधीयत इति न वाच्यम् । "द्वे पौर्णमास्यौ द्वे अमावास्ये" इत्यादितस्तादृशगुणस्यापि प्रकृतकर्मणि प्राप्तिसम्भवेन गुणधात्वर्थयोरुभयोरपि प्राप्तौ भावार्थाधिकरणन्यायेन विशिष्टधात्वर्थस्यैव फलसम्बन्धोपपत्तेरिति ॥ ६ ॥ **फले** प्रकृतकर्मणः फलसम्बन्धबोधकमपि **वाक्यं** "सर्वेभ्यो दर्शपूर्णमासौ" इत्यादिकं **समाप्तं च** अवगतमेव ततश्च दाक्षायणवाक्यस्य प्रकृते कर्मणि फलसम्बन्धपरताया अप्यसम्भवादनन्यपरपुनश्श्रवणरूपादभ्यासादपि कर्मभेदोऽत्र सुलभ इति ॥ ७ ॥ सिद्धान्तमाह—उक्तवाक्येषु दाक्षायणादिपदवाच्यः आवृत्त्यादिर्गुणः **विकारो वा** नित्यगुणविकार एव फलार्थं विधीयते **प्रकरणात्** अधिकाराख्यप्रकरणानुग्रहात् । अपूर्वकर्मविधौ दर्शपूर्णमासाधिकारबाधापत्तेः ॥ ८ ॥ **लिङ्गदर्शनाच्च** "त्रिंशद्वर्षाणि जीर्णो दर्शपूर्णमासाभ्यां यजेत यदि दाक्षायणयाजी स्यात् अथोपि पञ्चदशैव वर्षाणि यजेतात्रिव ह्येषा सम्पत्सम्पद्यते द्वे पौर्णमास्यौ द्वे अमावास्ये यजेत" इत्यत्र यावज्जीवपक्षानुकल्पतया त्रिंशद्वर्षपक्षमुक्त्वा तदनुकल्पत्वेनापि दाक्षायणयाजिनः पञ्चदशवर्षपक्षमुपदिश्य तदर्थवादे तावतैव या त्रिंशद्वर्षसाध्यप्रयोगाप्तिरुच्यते तादृशस्य लिङ्गस्य दर्शनादपि दाक्षायणयज्ञवाक्ये फलायगुणविधानं स्वीकार्यम् । तथा च सति "द्वे पौर्णमास्यौ" इत्यादौ गुणवाक्ये पौर्णमास्यादिप्रधानसम्बन्धितया श्रुताऽपि द्विरावृत्तिः फलवाक्ये

दक्षयजमानसम्बन्धिकर्त्विक्सम्बन्धित्वेन श्रवणात् दर्शपूर्णमासप्रयोगा- श्रितेति विज्ञायते । अतश्च फलार्थमपि सन्ततफलकामेन काकतालीयन्यायेन पञ्चदशवर्षपर्यन्तं द्विरावृत्ति दर्शपूर्णमासप्रयोगानुष्ठाने तावतैव त्रिंशद्वर्षसाध्यप्रयोगसङ्ख्यासम्पत्तेः पञ्चदशवर्षपक्षस्तुतिरुपपन्ना भवति । अपूर्वकर्मविधानस्वीकारे तु तस्याऽऽवृत्तत्वेन ज्योतिष्टोमविकारत्वात् दर्शपूर्णमासविकारत्वेऽपि वा पञ्चदशवर्षपर्यन्तमावृत्तावेव प्रमाणाभावात्तदसङ्गतिस्स्पष्टैवेति ॥ ९ ॥ **गुणात्** दक्षयजमानसम्बन्धिकर्त्विक्कर्तृकावृत्तिरूपगुणनिमित्तकः **संज्ञोपबन्धः** दाक्षायणयज्ञसंज्ञानिबन्धः तत्पदस्य कर्मणि योगरूढतया संज्ञात्वेऽपि तद्बोध्यावृत्तेः फले विधौ न किञ्चिद्बाधकम् । एवं साकंप्रस्थायः सहप्रस्थानं तत्सम्बन्धी यागः साकंप्रस्थायीयः इति व्युत्पत्त्या सहत्वमेव फलाय विधीयते । तस्य चाश्रयाकांक्षायां "आज्यभागाभ्यां प्रचर्याग्नेयेन च पुरोडाशेनाग्नीधे स्रुचौ प्रदाय सह कुम्भीभिरभिक्रामेत्" इति वाक्यान्तरेणाभिक्रमणं सान्नाय्यहोमाङ्गभूतमाश्रयत्वेन सम्बध्यते । एवं सङ्क्रमवाक्येऽपि लोकप्रसिद्ध्यैव सङ्क्रमणे फलार्थं विहिते किमर्थं क्वेत्यपेक्षायां भवेदेव निम्नोन्नतवचनवशेन आहवनीयदेश इत्यवगम्यते इति ॥ १० ॥ **समाप्तिः** फलप्राप्तिः प्रधानादिव गुणादपि दध्यादिरूपात् **अविशिष्टा** दृश्यत इति फलायगुणविधावत्र न किञ्चिद्बाधकमिति ॥ ११ ॥

**दर्शपूर्णमासयोः "दाक्षायणयज्ञेन स्वर्गकामो यजेत"* इति श्रुतम् । तथा "साकंप्रस्थायीयेन यजेत पशुकामः"† इति च । तत्र दाक्षायणादिपदवाच्यस्य गुणस्य लोके अप्रसिद्धत्वात् उद्भिदादिवन्नामधेयत्वावगतेस्संज्ञया अभ्यासाद्वा कर्मान्तरं विधीयते फलसम्बन्धस्यापि सार्वकाम्यवाक्यवशादेव प्राप्तत्वेनान्यपरत्वाभावादिति प्राप्ते—**

*तै. सं. २-५-५. †तै. सं. २-५-४.

अभिधीयते—यद्यपि लोके गुणो न प्रसिद्धः तथापि द-क्षस्य यजमानस्य इमे दाक्षाः ऋत्विजः तत्कर्तृकं अयनं प्रयोगावृत्तिर्यस्य यज्ञस्येति व्युत्पत्त्या आवृत्तिपरत्वावगतेः सह प्रस्थानं यत्रेति व्युत्पत्त्या च सहत्वपरत्वावगतेर्नातिरिक्तशक्तिकल्पनया नामधेयत्वाध्यवसानम् । अतोऽप्राप्तावृत्तिरूपः सहत्वरूपश्च गुण एव फलोद्देशेन विधीयते । आवृत्तिश्च कियतीत्यपेक्षायां 'द्वे पौर्णमास्यौ द्वे अमावास्ये यजेत' इति वाक्येन विशेषविधानात् द्विरावृत्तिरेव । सहत्वं च प्रस्थाने केनेत्यपेक्षायां 'सह कुम्भीभिरभिक्रामेत्' इति वचनात् कुम्भीभ्याम् । अनेनैव च वचनेन सहत्वाश्रयत्वमभिक्रमणस्य विदधता अवान्तरप्रकरणाभावेपि तस्याश्रयत्वसिद्धिः । आवृत्तेस्तु प्रकरणाद्दर्शपूर्णमासावेवाश्रयः । अतोऽत्र संज्ञात्वाभावात् गुणफलसम्बन्धपरत्वेन चाभ्यासाभावान्न कर्मान्तरम् । वस्तुतस्तु—'पूर्वपदात्संज्ञायामगः' इति स्मृत्या संज्ञात्वाभावे णत्वानापत्तेर्दाक्षायणयज्ञपदे संज्ञात्वावश्यम्भावेऽपि अवयवार्थप्रतीत्या योगरूढिस्वीकारादवयवार्थरूपावृत्तिरप्राप्तत्वात् फलोद्देशेन विधीयत इति न विरोधः ॥ ४ ॥

## (५)—संस्कारश्चाप्रकरणेऽकर्मशब्दत्वात् ॥ १२ ॥ यावदुक्तं वा कर्मणश्श्रुतिमूलत्वात् ॥ १३ ॥ यजतिस्तु द्रव्यफलभोक्तृसंयोगादेतेषां कर्मसम्बन्धात् ॥ १४ ॥ लिङ्गदर्शनाच्च ॥ १५ ॥

**अप्रकरणे** प्रकरणविशेषे अपठिते अनारभ्याधीते "वायव्यं श्वेतमालभेत"* इति वाक्ये "सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः"

* तै. सं. २-१-१.

इति वाक्ये च **संस्कारश्च** " ईषामालभेत " " चतुरो मुष्टीन्निर्वपति " इति दार्शपौर्णमासिकप्रकरणपठितेषालम्भचतुर्मुष्टिनिर्वापादिरूपसंस्कार एव अनूद्यते श्वेतत्वादिगुणविधानाय । न त्वत्र यागाख्यं कर्म विधीयते । कुतः **अकर्मशब्दत्वात्** यागरूपकर्मबोधकशब्दरहितत्वात्तद्वाक्यस्य ॥ १२ ॥ पक्षान्तरमाह पूर्वपक्षी—**यावदुक्तं वा** श्वेतद्रव्यालम्भरूपं धातूक्तमेव, विधीयतेऽत्रेति स्वीकर्तुमुचितम् । कुतः **कर्मणः** आलम्भादिरूपस्य **श्रुतिमूलत्वात्** पदश्रुतिमूलकविधिशक्तिसङ्क्रान्तिकत्वात् । पदश्रुत्या हि विधिशक्तिर्धात्वर्थ एव संक्रामति । उपपदार्थे श्वेतत्वादौ विधिसङ्क्रमे च पदश्रुतिबाधस्स्यादिति ॥ १३ ॥ सिद्धान्तमाह—**यजतिस्तु** आलभत्यादिलक्षितो याग एवात्र अर्थकर्मतया विधीयते । कुतः? **द्रव्यफलभोक्तृसंयोगात्** तद्धितोपात्तद्रव्यस्य भोक्तुर्देवतायाः तद्धितप्रकृत्युपात्तायाः फलस्य भूतिकामादिपदोपात्तस्य च संयोगात् सम्बन्धात् । **एतेषां** द्रव्यफलभोक्तॄणां **कर्मसम्बन्धात्** कर्मण्येव सम्बन्धसम्भवात् । तथा च वायव्यमित्यादि तद्धितोपात्तद्रव्यदेवतासम्बन्धस्य यागमन्तरा असम्भवात् याग एवात्र लक्षितो विधीयते नालम्भमात्रम् । भूतिकामादिफलपदश्रवणाच्च न श्वेतत्वादिगुणविधिः प्रथमपक्षोक्त इति ॥ १४ ॥ **लिङ्गदर्शनाच्च** " सोमारौद्रं घृते चरुं निर्वपेत् "* इति प्रक्रम्य " परिश्रिते याजयेत् "* इति गुणविधिपरे वाक्ये यजिश्रवणरूपस्य लिङ्गस्य दर्शनादपि यजिरहितेऽपि निर्वपत्यादिवाक्ये लक्षितो यागो विधीयत इत्यवगम्यते अन्यथा गुणवाक्ये यागानुवादानुपपत्तेरिति ॥ १५ ॥

**" ईषामालभेत " " चतुरो मुष्टीन्निर्वपति " इत्येताभ्यां विहितयोर्दार्शपूर्णमासिकयोरीषा लम्भचतुर्मुष्टिनिर्वापयोरनुवादेन अनारभ्याधीताभ्यां ' वायव्यं श्वेतमालभेत भूतिकामः '† ' सौर्यं चरुं**

---

*तै. सं. २-२-१०. †तै. सं. २-१-१.

निर्वपेत् ब्रह्मवर्चसकामः' इत्येताभ्यां श्वेतचरुगुणौ विधीयेते—आलम्बकर्मीभूता ईषा श्वेता कर्तव्येति निर्वापः चरुशब्दलक्ष्यस्थाल्यां कर्तव्य इति । सर्ववृक्षाणां च वायुसम्बन्धात् वायव्यमित्यनुवादः । सौर्यमिति चाग्नेयस्यैव तेजोदेवत्यत्वसामान्यात् । न तु देवताविधिः । यागाश्रवणात् । उभयत्रापि फलपदं सार्वकाम्यवाक्यप्राप्तफलप्रयोजकत्वानुवाद इति प्रथमः पक्षः । द्वितीयस्तु फलपदवैयर्थ्यप्रसङ्गात् प्राकरणिकाश्रयालाभेन च गुणफलसम्बन्धानुपपत्तेर्गुणविशिष्टं यावदुक्तमालम्भनिर्वापाख्यं कर्मान्तरमेव फलोद्देशेन विधीयत इति ॥

सिद्धान्तस्तु—वायव्यं सौर्यं इत्यादितद्धितान्तपदवैयर्थ्यापत्तेः द्रव्यदेवतासम्बन्धानुमितो याग एवालभतिनिर्वपतिधातुलक्षितो द्रव्यदेवताविशिष्टः फलोद्देशेन विधीयत इति । अतिदेशप्राप्तौ चालम्भनिर्वापौ न विधीयेते ॥ ५ ॥

## (६)–विशये प्रायदर्शनात् ॥ १६ ॥ अर्थवादोपपत्तेश्च ॥ १७ ॥

**विशये** अग्निहोत्रप्रकरणाम्नाते "वत्समालभेत"* इत्यादौ यागविधिपरत्वालम्भरूपसंस्कारविधिपरत्वाभ्यां सन्देहे सति **प्रायदर्शनात्** संस्कारविधिबहुले सन्दर्भे पाठदर्शनात् संस्कारविधिरित्येव निर्णीयते यथा अग्रयप्राये लिखितोऽग्रय इति निर्धार्यते । इदमुपलक्षणं—द्रव्यदेवतासम्बन्धपरतद्धिताद्यभावादित्यपि बोध्यम् ॥ १६ ॥ **अर्थवादोपपत्तेश्च** "वत्सनिकान्ता हि पशवः" इत्येतस्य वत्से नितरां कान्ताः अभिलाषिणः पशव इत्यर्थपरस्य तदुत्तरपठितार्थवादस्योपपत्तेरप्ययं संस्कार-

---

* तै. सं. २-१-४.

विधिः । पशूनां वत्सप्रियत्वात्समीपधारणफलस्पर्शेन अग्निहोत्रदोहनाङ्गभूताया गोः प्रस्रवणं जायत इति स्तुतिरर्थवादोपात्ता आलम्भविधित्वे सत्युपपद्यते. न यागविधित्वे । तदानीं तु वत्सविशसनात् पशूनां वत्सप्रियत्वोक्तिरनुपयोगिन्येवेति ॥ १७ ॥

**यत्र तु न देवताश्रवणं तत्र न यागकल्पना अपितु संस्कारमात्रविधानम् । यथा—अग्निहोत्रे ‘ वत्समालभेत ’* इत्यत्र आलम्भमात्रं वत्ससंस्कारकत्वेन विधीयते । आलभतेः स्पर्शमात्रवाचित्वात् ॥ ६ ॥**

## (७)—संयुक्तस्त्वर्थशब्देन तदर्थश्श्रुतिसंयोगात् ॥

अग्निचयनप्रकरणे “ नैवारश्चरुर्भवति । बृहस्पतेर्वा एतदन्नम् । यन्नीवाराः ”† इत्यनन्तरं “ चरुमुपदधाति ” इत्याम्नाते वाक्ये **अर्थशब्देन** स्थलनिष्पत्तिरूपार्थोन्नायकेन शब्देन उपदधातिना **संयुक्तस्तु** चरुः **तदर्थः** स्थलनिष्पत्त्यर्थ एव न यागार्थः । कुतः? **श्रुतिसंयोगात्** तादृशप्रयोजनोन्नायकशब्दसंयोगस्य श्रौतत्वात् । यागपरशब्दस्याश्रूयमाणत्वादिति ॥ १८ ॥

**अग्नौ श्रूयते ‘ चरुमुपदधाति बृहस्पतेर्वा एतदन्नं यन्नीवाराः ’ इत्यत्र यजमानस्यान्नं बृहस्पतेः कथं स्यात् यदि न बृहस्पतिर्देवता इत्यर्थात् बृहस्पतेर्देवतात्वावगतेः । तैत्तिरीयशाखायां ‘बार्हस्पत्यो भवति’‡ इति तद्धितपदयुक्तवाक्यशेषश्रवणाच्च द्रव्यदेवतासम्बन्धानुमितयागविधानमेवेदम् । तस्य चौषधद्रव्यकत्वेन आग्नेयातिदेशतस्स्विष्टकृदादिप्रतिपत्तिप्राप्तौ ‘चरुमुपदधाति’ इत्यनेनोपधानं प्रतिपत्तित्वेन विधीयत इति प्राप्ते—**

---

* तै. सं. २-१-४, † तै. ब्रा. १-३-७, ‡ तै. सं. ५-६-२.

यद्यपि तैत्तरीयशाखायां तद्धितश्रवणं तथापि विध्यभावात् विध्यन्तरैकवाक्यत्वभङ्गापत्तेश्च नायं देवतातद्धितः । 'चरुमुपदधाति' इत्यनेन च स्थण्डिलनिष्पादकचरुसंस्कारकतयोपधानविधानाद्देवतानाकाङ्क्षतया नार्थवादोन्नीतस्यापि देवताविधेः कल्पनम् । अत एव चर्वपेक्षितप्रकृतिद्रव्यस्यैव नीवाररूपस्य विधिकल्पनम् । अतश्च बृहस्पतेर्ब्राह्मणस्यान्नं नीवार इत्येवं स्तुत्युपपत्तेः न बृहस्पतेर्वा इत्ययं देवताकल्पनद्वारा यागकल्पक इति सिद्धम् ॥ ७ ॥

## (८)–पात्नीवते तु पूर्वत्वादवच्छेदः ॥ १९ ॥

पात्नीवते तु "त्वाष्ट्रं पात्नीवतमालभेत" इत्येतदनन्तरमाम्नाते "पर्यग्निकृतं पात्नीवतमुत्सृजति"* इति वाक्ये तु पूर्वत्वात् त्वाष्ट्रयागस्य पूर्ववाक्यावगततयाऽत्रापि प्रत्याभिज्ञायमानत्वात् तदनुवादेन पर्यग्निकृतपदार्थपर्यग्निकरणान्ताङ्गकलापस्य गुणस्यैव विधिरिति पर्यग्निकरणोत्तराङ्गानां अवच्छेदः व्यवच्छेदो निवृत्तिः । न तु पुनरत्र वाक्ये पत्नीवद्देवताकगुणेन पत्नीवद्देवताकयागान्तरविधानमिति ॥ १९ ॥

'त्वाष्ट्रं पात्नीवतमालभेत' इत्यनेन द्रव्यदेवताविशिष्टं यागं विधाय 'पर्यग्निकृतं पात्नीवतमुत्सृजति'* इति श्रुतम् । तत्रोभयदेवत्यस्य पूर्वयागस्य 'आग्नेयं चतुर्धा करोति' इतिवत् केवलपात्नीवतपदेनानुवादायोगात् पर्यग्निकरणादेश्च विधेयस्य गुणस्य अतिदेशेनैव प्राप्तत्वात् इतराङ्गपरिसङ्ख्यायां च त्रैदोष्यापत्तेः पर्यग्निकृतपदस्यानुवादत्वमङ्गीकृत्य कर्मान्तरविधिरेवायमिति प्राप्ते—

---

* तै. सं. ६-६-६.

प्रत्यभिज्ञानात् न कर्मान्तरम्। न चानुवादानुपपत्तिः सत्यप्यग्नीषोमादिवत्त्वष्टृपत्नीवतोर्व्यासज्यवृत्तिदेवतात्वे मनोतास्थाग्निशब्दवत् लक्षणयाऽभिधानोपपत्तेः। वस्तुतस्तु — पृथक्तद्धितश्रवणात् देवताद्वयमेवेदम्। एकवाक्योपादानाच्च समुच्चयः। अतो डित्थडपित्थयोर्माता डित्थमाता इतिवत् शक्यत एव केवलेन पात्नीवतपदेनानुवादः। अतः पूर्वकर्मानुवादेन गुण एव विधीयते। न च विधेयाभावः। वृत्तपर्यग्निकरणत्वस्यैव क्तप्रत्ययान्तार्थस्य विधेयत्वात्। तस्य च गृहमेधीयाज्यभागन्यायेन प्राकृतस्यैवातिदेशतः पूर्वप्रवृत्त्या विधेयत्वात् क्लृप्तोपकारकत्वेन च तेनैव नैराकाङ्क्ष्यात् अतिदेशाकल्पनेनोत्तराङ्गानामर्थादेव निवृत्तौ त्रैदोष्यानापत्तेः। वृत्तपर्यग्निकरणत्वस्य च पूर्वाङ्गेष्वकृतेष्वसम्भवात्तान्याक्षिप्यन्ते। न च क्तप्रत्ययबलेन प्रमाणान्तरप्रमितत्वावगमात् अतिदेशाप्रतिबन्धकत्वम्। 'प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति' इत्यादौ प्रमाणान्तराभावेप्येतद्विधिविधेयस्यापि क्तप्रत्ययेनोपात्तत्वेन बाधकाभावात् ॥ ८ ॥

## (९)-अद्रव्यत्वात्केवले कर्मशेषस्स्यात् ॥ २० ॥

केवले प्रकरणविशेषरहिते अनारभ्याधीते "एष ह वै हविषा हविर्यजति योऽदाभ्यं गृहीत्वा सोमाय जुहोति परा वा एतस्यायुः प्राण एति योंऽशुं गृह्णाति"* इति वाक्ये अद्रव्यत्वात् द्रव्यस्य तदुपलक्षितदेवताया वा ग्रहण एवान्वयेन यागे तदन्वयाभावात् ग्रहणमेव विधीयमानं कर्मशेषः कर्मणो ज्योतिष्टोमस्य अङ्गभूतं स्यात् न पुनस्तत्र यागस्य ज्योतिष्टोमाङ्गभूतस्य विधिः। तत्रादाभ्यग्रहणस्य

*तै. सं. ३-३-४, †तै. सं. ६-६-९, ‡तै. सं. ६-६.१०.

अंशुग्रहणस्य च ज्योतिष्टोमाङ्गत्वं ज्योतिष्टोमप्रकरणाम्नातेन "देवा वै यद्यज्ञेऽकुर्वत तदसुरा अकुर्वत ते देवा अदाभ्ये छन्दांसि सवनानि समस्थापयन्ततो देवा अभवन्परासुरा यस्यैवं विदुषोऽदाभ्यो गृह्यते"* इत्यादिवाक्येन "देवा वै प्रबाहुग्ग्रहानगृह्णत स एतं प्रजापतिरंशुमपश्यत् तमगृह्णीत"† इति वाक्येन च बोध्यम् ॥ २० ॥

अनारभ्य श्रुतं "एष ह वै हविषा हविर्यजति योऽदाभ्यं गृहीत्वा सोमाय जुहोति परा वा एतस्यायुः प्राण एति योऽशुं गृह्णाति"‡ इति। अत्र हविः सोमः स एव देवता स एव द्रव्यमिति प्रथमस्यार्थवादस्यार्थः । प्राणो आयुर्मर्यादामभिवर्धेत इति द्वितीयस्यार्थः । तत्र न तावद्ग्रहणमेव ज्योतिष्टोमे विधीयते । संस्काररूपस्य ग्रहणस्य अवघातादिवत् अंश्वदाभ्यनामकत्वानुपपत्तेः द्वितीयान्तयोस्तयोस्संस्कार्यद्रव्यनामत्वाङ्गीकारे तु अव्यभिचारितक्रतुसम्बन्धाभावात् न द्रव्यमात्रोद्देशेन ग्रहणविधिसम्भवः । अतो द्रव्यदेवताविशिष्टयागान्तरविधानमेवेदम् । अदाभ्यपदेन हिंसानर्हसोमाख्यद्रव्यस्य अंशुपदेन च निर्यासद्रव्यस्याभिधानात् । द्वितीया चोभयत्र सक्तुन्यायेन । देवता तु एकत्र सोमः अन्यत्र "प्रजापतये स्वाहा"§ इति मन्त्रवर्णात् प्रजापतिः । गृह्णातिश्चाद्येऽनुवादः द्वितीये यागलक्षकः । तयोश्च यागयोः प्राकरणिकैतत्समानजातीयतैत्तिरीयशाखास्थवाक्याज्ज्योतिष्टोमाङ्गत्वमितिप्राप्ते—

गृह्णातौ यागलक्षणायां प्रमाणाभावात् आद्यवाक्ये गुणसङ्क्रान्तशाकेना विधिना ग्रहणस्यैव विधेयत्वावगमाच्चोभयत्रापि

* तै. सं. ६-६-९ † तै. सं. ६-६-१० ‡ तै. सं. ३-३-४. § तै. ब्रा. ३-१-४,

ग्रहणमेवोक्तसंज्ञकं उक्तसंज्ञकद्रव्यसंस्कारकत्वेन वा विधीयते। एवं च—विनियोगभङ्गोपि द्वितीयाया न कल्पितो भवति। देवता तु सोमरूपा आद्यवाक्ये ग्रहण एवान्वेतीति देवताविशिष्टं ग्रहणमेव तत्र विधीयते। द्वितीये तु—"उपयामगृहीतोसि प्रजापतये त्वा जुष्टं गृह्णामि"* इति मन्त्रवर्णात् ग्रहणाङ्गतया देवताप्राप्तिर्द्रष्टव्या। होममन्त्रस्तूत्तरभावियागोपकारकत्वमादाय नेयः। देवताविशिष्टग्रहणद्वये च प्राकरणिकवाक्येन ज्योतिष्टोमाङ्गत्वस्य तदुपपाद्यत्वस्य च बोधोपपत्तेः न कश्चिद्विरोधः॥

प्रयोजनं पूर्वपक्षे यागस्याङ्गत्वाद्यथाशक्तिन्यायविषयत्वम्। सिद्धान्ते प्रधानत्वान्नेति ॥ ९ ॥

## (१०)–अग्निस्तु लिङ्गदर्शनात्क्रतुशब्दः प्रतीयेत ॥ द्रव्यं वा स्याच्चोदनायास्तदर्थत्वात् ॥ २२ ॥ तत्संयोगात्क्रतुस्तदाख्यस्स्यात्तेन धर्मविधानानि ॥ २३ ॥

**अग्निस्तु** 'य एवं विद्वानग्निं चिनुते'† इत्यत्र अग्निशब्दस्तु चिनोति लक्षितक्रतुसमानाधिकरणः **क्रतुशब्दः** यागवाची **प्रतीयेत** कुतः **लिङ्गदर्शनात्** 'अग्नेस्स्तोत्रमग्नेश्शस्त्रम्' 'चित्यस्याग्नेष्षडुपसदः' इत्यादौ अग्निशब्दार्थस्य स्तोत्रशस्त्रोपसत्सम्बन्धिताया यागलिङ्गस्य दर्शनात्। न खलु स्तोत्रादिसम्बन्धोऽयागे सम्भवति। तथा चोत्तरवाक्ये "अथातोऽग्निमग्निष्टोमेनानुयजन्ति तमुक्थ्येन तमतिरात्रेण तं द्विरात्रेण' इत्यादौ अनुयजनप्रतियोगित्वरूपस्य गुणस्य यागमन्तरेणानुप-

---

* तै. सं. १-७-१२,  † तै. सं. ५-६-२,

पद्यमानस्य श्रवणात्तदनुरोधेन चिनोतेरपि लक्षणया यागपरत्वनिश्चयात्तत्समानाधिकरणोऽग्निशब्दः क्रतुपर इति ॥ २१ ॥ एवं पूर्वपक्षे सिद्धान्तमाह—अग्निशब्दार्थः **द्रव्यं वा** ज्वलनरूपं आहवनीयपर्यवसितमेव **स्यात् चोदनायाः** "अग्निं चिनुते"* इति विधेः **तदर्थत्वात्** तादृशद्रव्योद्देशेन स्वनिष्पादितस्थण्डिलाधारत्वसम्बन्धेन चयनरूपसंस्कारविधिपरत्वात् । तथा च चिनोतेर्न यागलक्षकत्वमाश्रयणीयम् । उत्तरवाक्ये अनुशब्दस्य "पाकमनुभुङ्क्ते" इत्यादाविव चयनानन्तर्यपरतयाऽप्युपपत्तेः । चयनसंस्कृतस्य चाग्नेरग्निशब्दलक्षितचयनस्य वा उत्तरवाक्येन ज्योतिष्टोमाङ्गतया विनियोग इति ॥ २२ ॥ पूर्वपक्षोक्तस्य लिङ्गदर्शनस्यान्यथासिद्धिमाह—'अग्नेस्स्तोत्रं' इत्यादौ **क्रतुः** सोमयागः **तत्संयोगात्** अग्निसम्बन्धात् चयनसम्पादितस्थण्डिलस्थापिताग्निसम्पादितयागत्वेन तदाख्यः अग्न्याख्यः अग्निपदलक्ष्यः **स्यात् तेन** 'अग्नेस्स्तोत्रं' इत्यादीनि यागोद्देशेन **धर्मविधानानि** स्तोत्रादिरूपधर्मविधायकानि उपपद्यन्ते इति ॥ २३ ॥

**अनारभ्यैव श्रुतं 'य एवं विद्वानग्निं चिनुते'* इति । तत्र चिनोतिना नाग्निसंस्कारार्थत्वेन चयनविधिः अपि तु अग्निसंज्ञकस्य यागस्यैव विधिः । 'अथातोऽग्निमग्निष्टोमेनानुयजन्ति तमुक्थ्येन तमतिरात्रेण तं द्विरात्रेण' इत्याद्युत्तरवाक्येषु अग्निष्टोमादियज्ञानामग्न्यनुयजनत्वरूपगुणाम्नानात् । न ह्यग्न्यनुयजनत्वमग्नेरयागत्वेऽवकल्पते; देवदत्तमनुगच्छति यज्ञदत्त इत्यादौ तुल्यक्रियायोग एवानुशब्ददर्शनात् । अतश्चाग्निसंज्ञकस्य यागस्य तस्मिन्नेव विधौ गौरवात् विद्वद्वाक्य एव चिनोतिना लक्षणया तद्विधानम् । स चाव्यक्तत्वाज्ज्योतिष्टोमविकारः । उत्तरवा-**

---

*तै. सं. ५·६-२.

क्यैश्च तस्य क्रत्वङ्गत्वसिद्धिः । 'इष्टकाभिरग्निं चिनोति'* इत्यनेन च चयनस्य प्राप्तत्वात् चिनोतिर्निर्वपतिवत् अनुवादश्चयनस्येति प्राप्ते —

'पाकमनुभुङ्क्ते' इत्यादौ तुल्यक्रियायोगाभावेऽप्यनुशब्द-दर्शनात् न तदनुरोधेनाग्निशब्दस्य चयनशब्दस्य च यागपरत्वक-ल्पना युक्ता । अतो विद्वद्वाक्ये चयनमेवाग्निसंस्कारार्थं विधीयते । अग्निशब्देन च यद्यपि शक्त्या ज्वलन एवाभिधीयते तथापि तदर्थ-त्वे वैयर्थ्योपत्तेर्निरूढलक्षणया आहवनीयादिपरत्वावसायात् तदु-द्देशेनैव चयनं संस्कारकतया विधीयते । संस्कारश्च सामर्थ्या-च्चयननिष्पादितस्थण्डिलस्थापनरूपः । स्थापितस्याग्नेरुपयोगापेक्षा-यां 'अथातः' इति वाक्येन तस्य ज्योतिष्टोमाङ्गत्वेन विधानम् । तत्र ह्यग्निशब्देन चयननिष्पादितस्थण्डिलस्थापितोऽग्निः चयनमे-व वा लक्षणयाऽभिधीयते । अग्निष्टोमशब्दश्च जातिन्यायेन सं-स्थावचनोपि व्यक्तिन्यायेन ज्योतिष्टोममेव प्रचुरप्रयोगादभिधत्ते पार्थशब्द इवार्जुनम् । अतश्च ज्योतिष्टोमत्वमेव लाघवादुद्देश्यता-वच्छेदकं न त्वग्निष्टोमसंस्थाकत्वमपि । यद्यपि चयनस्य ज्यो-तिष्टोमप्रयोगसंवलितत्वादनुष्ठानसादेश्यादेव तदङ्गत्वसिद्धिः । त-थापि 'पशुकामश्चिन्वीत'† इति वाक्यैः अग्नेः काम्यत्वावगमात् क्र-त्वङ्गत्वप्रतिप्रसवार्थं तन्न विरुध्यते । अयं चाग्निः प्रकृतौ 'अ-ग्निस्सोमाङ्गं वेच्छतां' इत्यादिवचनाद्वैकल्पिकः । अग्निपक्षे च 'उत्तरवेद्यां ह्यग्निश्चीयते'† इति वचनादुत्तरवेद्या समुच्चयः । त-दभावे चोत्तरवेदिमात्रं 'उत्तरवेद्यामग्निं निदधाति' इति वच-नात् । अतश्च 'तमुक्थ्येन' इत्यादिवाक्यानि वैकल्पिकत्वात्; वि-

---

* तै. सं. ५-६-६. † तै. आ. १-२६.

कृत्स्नविनियोगे तानियमार्थानि चयनाश्रितश्येनाकारतादिफलार्थगुणानां प्राप्त्यर्थकानि चेति दशमे वक्ष्यते ॥ १० ॥

## (११)–प्रकरणान्तरे प्रयोजनान्यत्वम् ॥ २४ ॥

कुण्डपायिनामयनप्रकरणाम्नाते 'उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहुति मासं दर्शपूर्णमासाभ्यां' इति वाक्ये **प्रकरणान्तरे** अनुपादेयगुणसहकृतानुपस्थितिरूपे सति **प्रयोजनान्यत्वं** प्रयोजनस्य उपादेयस्य विधेयस्य कर्मणः अन्यत्वं भेदः । तथा च तत्र मासरूपानुपादेयगुणसत्त्वात् प्रसिद्धाग्निहोत्रादेश्च प्रकरणाभावेनानुपस्थितत्वात् तदुद्देशेन मासादिगुणविधानासम्भवात् विधेयतायाश्च प्रकृते उपादेयताव्यधिकरणत्वे प्रमाणाभावात् मासादिगुणविशिष्टमग्निहोत्रादिनामकं प्रसिद्धाग्निहोत्रादन्यदेव कर्म विधीयते । भवति चैवं सत्यत्र उपादेयत्वविधेयतयोस्सामानाधिकरण्यमिति । एवं कालरूपानुपादेयगुणयोग इव 'सरस्वत्या दक्षिणेन तीरेणाग्नेयोऽष्टाकपालः' इत्यत्र देशरूपानुपादेयगुणयोगेऽपि प्रसिद्धाग्नेयानुपस्थितेः विशिष्टकर्मान्तरविधिः । 'सत्रायागूर्य विश्वजिता यजेत' इत्यत्र सत्रसंकल्पस्य निमित्तरूपानुपादेयगुणस्य योगेऽपि सत्रमकुर्वतः प्रसिद्धविश्वजिदन्यकर्मविधिर्बोध्यः ॥ २४ ॥

कुण्डपायिनामयने 'उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहुति मासं दर्शपूर्णमासाभ्यां' इत्यादि श्रुतम् । तत्र जुहोतिना अग्निहोत्रादिपदैश्च दूरस्थस्यापि कर्मण उपस्थितत्वात्तदनुवादेन 'यदाहवनीये जुहोति' इतिवत् मासादिरूपगुणविधिः उपादेयवदनुपादेयस्यापि दूरस्थकर्मानुवादेन विधाने बाधकाभावात् । कर्तृबहुत्वकालादिरूपानेकगुणविशिष्टप्रयोगविधानाच्च न वाक्यभेदः । अतो न कर्मान्तरविधिरिति प्राप्ते—

सर्वत्र प्रवर्तकस्य विधेः कृतिविषयत्वापरपर्यायमुपादेयत्वं प्रमाणत्वाद्यज्ञातज्ञाप्यत्वाख्यं विधेयत्वं च प्रमेयम्। तदुभयमप्येकवृत्ति समानाभिधानश्रुत्यादिना च धात्वर्थभावनावृत्तीत्युत्सर्गः। योग्योपपदसत्त्वे तु विशिष्टविधिगौरवभिया तन्मात्रवृत्ति। यथा—'यदाहवनीये जुहोति' इत्यत्राहवनीयस्योपादेयत्वविधेयत्वोभयाश्रयत्वाद्योग्यत्वम्। अत एव तत्र धात्वर्थानुवादापेक्षायां दूरस्थानामपि सर्वहोमानां कथंचिदनुवादः। प्रकृते तु मासस्यानुपादेयत्वादुपादेयत्वं धात्वर्थ एव वाच्यम्। अतस्तत्सामानाधिकरण्येन विधेयत्वमपि तत्रैवेति विहितस्य विधानायोगान्नेदः। एवं सत्यपि यदि 'यत्सायं जुहोति'* इत्यादिवत् प्रत्यभिज्ञापकं सन्निध्यादि प्रमाणं भवेत् ततोऽगत्या कालादौ विधेयत्वं कर्मणि च प्राप्तेऽप्युपादेयत्वमिति वैयधिकरण्यमप्याश्रीयेत। न त्वेतदस्ति। न च सन्निध्यभावेऽपि नाम्न एव पूर्वकर्मोपस्थापकता। 'अग्निहोत्रं जुहोति'† इत्यनेन जुहोतिना हि यादृशी विजातीयहोमत्वप्रकारिका होमोपस्थितिस्तादृश्येव सन्निधिनोपनीता युक्तं यत् 'सायं जुहोति'* इत्येतद्वाक्यस्थजुहोतेरपि स्वविषयविषयत्वमापादयन्ती भवति तद्गतविधेयार्थकत्वप्रतिबन्धिका। अग्निहोत्रादिनाम त्वग्निदेवताकहोमत्वप्रकारकहोमविशेष्यकबोधं जनयत् जुहोतेर्न पूर्वकर्मोपस्थापकत्वमापादयितुं क्षमम्। न ह्यग्निदेवताकं पूर्वं कर्मैवेत्यत्र प्रमाणमस्ति। विजातीयहोमत्वस्य नाम्नाऽनुपस्थितेः। अन्यथा पर्यायत्वेन सहप्रयोगानापत्तेः। अतिप्रसङ्गनिराकरणस्य प्राचीनप्रयोगाभावेनैवोद्भिदधिकरणे स्थापितत्वेन योगरूढ्यनङ्गीकाराच्च। अन्यथा मत्वर्थलक्षणादिभियाऽतिप्रसङ्गभङ्गार्थमपि रूढ्यङ्गीकारे सोमादावपि तदापत्तेः। अतो न

*तै. ब्रा. २-१-२.                    † तै. सं. १-५-९.

नाम्ना तदुपस्थितिः । अत एव यत्र नाम्नैवानुपादेयगुणयोगेन श्रुतं न तु धातुः यथा 'सर्वेभ्यो दर्शपूर्णमासौ' इत्यादौ तत्र नामार्थस्यैवोपादेयत्वसामानाधिकरण्येन विधेयत्वप्रसक्तौ नामजन्योपस्थित्या तत्प्रतिबन्धान्न कर्मान्तरं अस्तु वा तद्वाक्यस्य प्राकरणिकत्वादकर्मान्तरत्वम् । अतो नाम्ना प्रकृते जुहोतेर्विधेयार्थत्वप्रतिबन्धायोगादनुपादेयगुणयुक्तानुपस्थितिरूपप्रकरणान्तरात् सिद्धं कर्मान्तरत्वम् । अत्र चानुपादेयगुणयोगस्य स्ववृत्त्युपादेयत्वापनयद्वारा पारिशेष्याद्धात्वर्थवृत्त्युपादेयत्वापादनं व्यापारः । अनुपस्थितेः उपादेयत्वसामानाधिकरण्येन विधेयत्वाप्रतिबन्धस्तः । अत एव न प्राचीनरीत्याऽनुपादेयगुणयोग एव प्रयोजकः अपि तु उपादेयगुणसामान्याभाव एवेति ध्येयम् । अतस्सिद्धं कालविशिष्टकर्मान्तरविधानमेवेदम् ॥

एवं 'सरस्वत्या दक्षिणेन तीरेण आग्नेयोऽष्टाकपालः' इति देशरूपानुपादेयस्याग्नेयपदस्य साधारणत्वेन पूर्वकर्मोपस्थापकत्वाभावात् । निमित्तस्य तु 'सत्रायागूर्य विश्वजिता यजेत' इति आगूरणं सङ्कल्पः तदुत्तरं सत्रमकुर्वतोऽयं 'विश्वजिता यजेत' इत्यस्मात् कर्मान्तरम् । न चानेन विनियुक्तस्य प्रयुक्तस्य वा तेनोत्पत्तिः । विनियोगादिसामानाधिकरण्येनावगताया उत्पत्तेस्सन्निधिं विना बाधे प्रमाणाभावात् ॥ ११ ॥

---o---

## (१२)–फलं चाकर्मसन्निधौ ॥ २५ ॥

अकर्मसन्निधौ प्रसिद्धकर्मानुपस्थितौ "आग्नेयमष्टाकपालं निर्वपेद्रुक्कामः" इत्यादौ श्रूयमाणं फलं रुगादिरूपं चकारात् "औदु-

म्बरीं प्रोक्षति" इत्यादौ श्रुतं औदुम्बर्यादिरूपं संस्कार्यं च प्रसिद्धादाग्नेयव्रीहिप्रोक्षणादिकर्मतो भेदकं भवति । फलसंस्कार्ययोरङ्गत्वाद्विनियोगविधिविषयत्वापरपर्यायाङ्गत्वमात्रस्य धात्वर्थवृत्तितयाऽऽक्षेपात्तत्सामानाधिकरण्येनोत्पत्तिविधिविषयत्वापरपर्यायविधेयत्वाक्षेपकत्वेऽपि उपादेयत्वानाक्षेपकत्वान्न प्रकरणान्तरविधया भेदकत्वम् । कालदेशनिमित्तानां तु अनुष्ठापकत्वेन प्रयोगविशेषणत्वाद्धात्वर्थे अनुष्ठाप्यत्वापरपर्यायोपादेयताक्षेपकत्वाद्युक्तं तद्विधया भेदकत्वमित्यधिकाशङ्कया फलसंस्कार्ययोः पृथक्करणम् । फलसंस्कार्ययोस्सत्यप्यङ्गत्वे अनुष्ठापकत्वस्यापि कामनाविषयत्वेन सत्त्वादुपादेयत्वाक्षेपकत्वोपपत्तेरकर्मसन्निधौ युक्तं तद्विधया भेदकत्वमिति तदाशङ्कानिरासो बोध्य इति कौस्तुभे ॥ २९ ॥

**फलस्य 'आग्नेयमष्टाकपालं निर्वपेद्रुक्कामः' इति । संस्कार्यस्य तु 'औदुम्बरीं प्रोक्षति' इति व्रीहिप्रोक्षणात् कर्मान्तरम् । पञ्चैव यथाऽनुपादेयानि तथा वाजपेयाधिकरणे कौस्तुभे प्रपञ्चितम् ॥ १२ ॥**



## (१३)–सन्निधौ त्वविभागात्फलार्थेन पुनश्श्रुतिः ॥

अनुपादेयगुणसत्त्वेऽपि **सन्निधौ** कर्मण उपस्थितौ सत्यां **तु** धातोस्सन्निहितकर्मपरामर्शकत्वस्यैव युक्ततया तदर्थस्य **अविभागात्** सन्निहितकर्मापेक्षया भेदासम्भवात् **फलार्थेन** अनुपादेयगुणसम्बन्धरूपप्रयोजनानुरोधेन **पुनश्श्रुतिः** सन्निहितस्य कर्मण एव पुनश्श्रवणं न पुनस्तदतिरिक्तकर्मविधानार्थामिति । फलपदमत्रानुपादेयमात्रोपलक्षकं बोध्यम् ॥ २६ ॥

**पञ्चानामप्यनुपादेयानां सन्निधौ प्रत्युदाहरणानि—दर्शपूर्णमासप्रकरणे 'पौर्णमास्यां पौर्णमास्या यजेत' 'समे दर्शपूर्णमासाभ्यां यजेत' 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' 'दर्श-**

पूर्णमासाभ्यां स्वर्गकामो यजेत' इति चतुर्णां; स्विष्टकृतं प्रकृत्य 'शेषात्स्विष्टकृतं यजति' इति शेषरूपसंस्कार्यस्य । अत्र सर्वत्र सन्निधानात्स्वविषयवृत्तिविधेयत्वप्रतिबन्धात् प्राप्तस्यैव कर्मणः कालदेशविशिष्टप्रयोगमात्रं विधिलाघवायानुमन्यते न तु कर्मोत्पत्तिमपि विधत्ते । यत्र तु प्रयोगोपि प्राप्तः 'य इष्ट्या' इत्यादौ तत्र प्राप्तप्रयोगानुवादेन कालादिमात्रविधिस्सम्भवाति । देशकालयोरुपादेयत्वासम्भवेऽपि यागाङ्गत्वेन विनियोगविधिः । निमित्तस्थले तु मिथो निमित्तनैमित्तिकयोरङ्गाङ्गित्वासम्भवात् प्राप्तस्यापि कर्मणो निमित्तसम्बन्धानुमितपापक्षयार्थत्वेन विनियोगविधिरिति वक्ष्यते । फलसंस्कार्ययोस्तु तदुद्देशेन प्राप्तकर्मविनियोगविधिस्स्पष्ट एव । अतो न सन्निधिसत्त्वेऽनुपादेयगुणयोगेऽपि कर्मान्तरम् ॥ १३ ॥



## (१४)–आग्नेयस्तूक्तहेतुत्वादभ्यासेन प्रतीयेत॥२७ अविभागात्तु कर्मणो द्विरुक्तेन विधीयेत॥२८॥ अन्यार्था वा पुनश्श्रुतिः ॥ २९ ॥

"यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति"* इत्याग्नेयं विधाय तत्रैव प्रदेशान्तरे समाम्नाते "आग्नेयोऽष्टाकपालोऽमावास्यायां भवति" इति वाक्ये श्रूयमाणः **आग्नेयः** आग्नेययागः **तु अभ्यासेन** अभ्यासयुक्तः **प्रतीयेत** अमावास्यायां द्विराग्नेयोऽभ्यस्य इति यावत् । कुतः? **उक्तहेतुत्वात्** उक्तहेतुकत्वात् अभ्यासरूपस्य उक्तस्य भेदकहेतोस्सत्त्वात ॥ २७ ॥ एवं पूर्वपक्षे सिद्धान्त्येकदेशी समाधत्ते—**द्विरुक्तेन** उपदर्शितवाक्यद्वयेन एकमेव कर्म

*तै. सं. २-६-३.

विधीयेत कुतः? कर्मणः अविभागात् कर्मभेदकप्रमाणाभावात्। न चैकेन वाक्येनैव विधौ प्रवृत्त्युपपत्तेर्वाक्यान्तरेण विधौ फलाभाव इति वाच्यम् । द्विराम्नानबलाद्वाक्यद्वयविहितस्यैवाभ्युदयकारित्वकल्पनया पूर्वकर्मण एव विधिफलविषयत्वोपपत्तेः ॥ २८ ॥ सिद्धान्तमाह—पुनश्श्रुतिः "आग्नेयोऽष्टाकपालः" इति पुनश्श्रवणं अन्यार्थो वा ऐन्द्राग्नविध्यर्थमेव अर्थवादरूपं ऐन्द्राग्नविध्येकवाक्यत्वात् । सम्भवति चातिप्रशस्ताग्नेयसाहित्ये सत्यैन्द्राग्नस्यातिप्रशस्ततरत्वमिति स्तुतिः । तस्मादस्य वाक्यस्य विधित्वस्यैवाभावात् न यागान्तरविधायकत्वशङ्का । न वा अभ्युदयशिरस्कत्वकल्पनाप्रयास इति ध्येयम् ॥ २९ ॥

इति सारबोधिन्यां जैमिनिसूत्रवृत्तौ
द्वितीयस्य तृतीयः.

**कालद्वययोगेनाग्नेयं विधाय 'आग्नेयोऽष्टाकपालोऽमावास्यायां भवति' इति श्रुतम् । तत्र कालद्वययुक्तादाग्नेयात्कर्मान्तरमिदं. प्रकरणान्तरादभ्यासाद्वा भेदोपपत्तेः । अनेनैव विहितस्येतरेण पौर्णमासीमात्रविधिस्तु उत्पत्तिशिष्टकालावरोधान्निराकर्तव्यः । न चैकस्यैव कर्मणोऽभ्युदयशिरस्कतया विधिद्वयेन विधानं पिङ्गाक्ष्यैकहायनीशब्दाभ्यामिव द्रव्यविशेषस्येति वाच्यम् । पिङ्गाक्ष्यैकहायनीशब्दाभ्यामुपस्थितस्याप्येकेन विधिना विधाने बाधकाभावात् । प्रकृते त्वेकेन विहितस्य नेतरेण विधिसम्भव इति कर्मान्तरमेव । अत एवामावास्यायामाग्नेयद्वयकरणं पूर्वपक्षे प्रयोजनमिति प्राप्ते—**

**एतस्यैन्द्राग्नविधिशेषत्वान्न स्वातन्त्र्येण विधायकत्वम् । प्रशस्ताग्नेयसाहित्येन चैन्द्राग्नप्रशंसा । अतो न कर्मान्तरम् ॥ १४ ॥**

**इति श्रीखण्डदेवकृतौ भाट्टदीपिकायां**
**द्वितीयस्याध्यायस्य तृतीयः पादः.**

**(१)—यावज्जीविकोऽभ्यासः कर्मधर्मः प्रकरणात् ॥ कर्तुर्वा श्रुतिसंयोगात् ॥ २ ॥ लिङ्गदर्शनाच्च कर्मधर्मो हि प्रक्रमेण नियम्येत तत्रानर्थकमन्यत्स्यात् ॥ ३ ॥ व्यपवर्गं च दर्शयति कालश्चेत्कर्मभेदस्स्यात् ॥ ४ ॥ अनित्यत्वात्तु नैवं स्यात् ॥ ५ ॥ विरोधश्चापि पूर्ववत् ॥ ६ ॥ कर्तुस्तु धर्मनियमात्कालशास्त्रं निमित्तं स्यात् ॥ ७ ॥**

विनियोगभेदनिरूपणं चैतत्पादार्थः ॥ 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इत्यादौ किं दर्शपूर्णमासादिकर्माणि स्वर्गाद्यर्थं जीवनपर्याप्तकालविधिः किं वा क्लृप्तफलात्फलान्तरार्थं जीवनाख्यनिमित्तरूपगुणवशेन दर्शादेर्विनियोगान्तरविधिरिति संशयः । **यावज्जीविकः** यावज्जीवपदेन 'यावद्दोहं तिष्ठति' इत्यादौ यावद्दोहपदेनेव निरूढलक्षणया प्रतिपाद्यः **अभ्यासः** प्रयोगपौनःपुन्यरूपस्याभ्यासस्यापादकः कालः **कर्मधर्मः** कर्मणो दर्शादेरङ्गं विधीयते. कुतः? **प्रकरणात्** स्वर्गाद्यर्थस्य दर्शादेरितिकर्तव्यताकांक्षालक्षणप्रकरणसत्त्वात् । प्रकरणं हीत्थमनुगृहीतं भवति ॥ १ ॥ सिद्धान्तमाह—उपदर्शितवाक्ये दर्शादिः **कर्तुः वा** कर्तुरेव पुरुषस्य निमित्तवतः **धर्मः** पुरुषार्थतया विधीयते कुतः? **श्रुतिसंयोगात्** यावज्जीवमिति पदश्रुतेस्समन्वयसंभवात् । यावच्छब्दो हि जीवनान्वयिसामस्त्यवाची । धातुश्च जीवनवाची । 'धातुसंबन्धे प्रत्ययाः' इत्यधिकारविहितश्च णमुल् स्वप्रकृत्यर्थस्य जीवनस्य यजत्यर्थे संबन्धमवगमयति । तत्र संबन्धविशेषजिज्ञासायां च

सम्बन्धान्तरासंभवात् यावच्छब्दस्य च तात्पर्यग्राहकस्य सत्त्वात् निमित्तत्वरूपमेव व्यक्तिन्यायेनाश्रीयते इति ॥ कालविधिपरत्वे च तद्वाक्यस्य यावज्जीवपदे काललक्षणा स्यात् । सा च श्रुत्यर्थे संभवति न युक्ता ॥ २ ॥ **लिङ्गदर्शनाच्च** 'अव वा एष सुवर्गाल्लोकाच्छिद्यते यो दर्शपूर्णमासयाजी सन्नमावास्यां वा पौर्णमासीं वाऽतिपादयेत्'।* इति दर्शपूर्णमासातिपातरूपलिङ्गदर्शनादपि यावजीववाक्ये जीवने निमित्ते दर्शादिः पुरुषार्थतया विधीयते इत्येव युक्तम् । **कर्मधर्मो हि** काले विधीयमाने जीवनकालव्यापकस्यैवैकप्रयोगस्यैकफलसाधनत्वात् दर्शपूर्णमासयाजिपदस्य कृतदर्शपूर्णमासकरणकभावनाकपरत्वानुपपत्तेः तत्पदं **प्रक्रमेण** प्रक्रान्तदर्शपूर्णमासकरूपप्रक्रमघटितार्थपरतया **नियम्येत** व्याख्यायेत । संभावनायां लिङ् । न चेष्टापत्तिश्शङ्क्या । तथा सति दर्शपूर्णमासयाजिनः 'अतिपातयेत्' इत्यनुपक्रमदर्शनविरोधात् । यदि तु अतिपातयेदित्यपि न समापयेदित्यर्थपरतया व्याख्यायेत तथाऽपि **तत्र** दर्शपूर्णमासातिपाते निमित्ते **अन्यत्** 'सोऽग्नये पथिकृतेऽष्टाकपालं निर्वपेत्' इति प्रायश्चित्तविधानरूपमर्थान्तरं **अनर्थकं स्यात्** समापनकाले जीवनान्त्यक्षणरूपेऽतीते हि मृतावस्थायां तव मते अतिपत्तिस्स्यात् । तदा च नैमित्तिकप्रायश्चित्तानुष्ठानासंभवात् तद्विधानं विफलमेव । अस्मन्मते तु माससाध्यस्यैकप्रयोगस्यैकफलसाधनत्वात् एकस्मिन्मासे कृतदर्शपूर्णमासकरणकभावनाकत्वं मासान्तरे च तदकरणरूपमतिपातनं चेति द्वयमपि संभवति । ननु मन्मतेऽपि तत्तत्कालकव्याप्यप्रयोगाभ्यासानां भेदात्तदुभयोपपत्तिरिति चेन्न तत्तदभ्यासानां मुख्यस्वर्गादिफलकत्वाभावेन ग्रहयागाभ्यासव्यक्तिषु सोमयागपदवाच्यत्वस्येव दर्शपूर्णमासपदवाच्यत्वस्यासंभवेन दर्शपूर्णमासयाजिपदस्यौपचारिकत्वापत्तेरिति । तस्माद्विनियोगभेद एवेहाश्रयणीयः ॥ ३ ॥ 'द-

* तै. सं. २-२-६.

र्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इत्यत्र इष्ट्वेति पदं दर्शपूर्णमासकरणकभावनायाः **व्यपवर्गं च** समाप्तिमपि **दर्शयति** उत्तरकालत्वप्रतियोगितया प्रतिपादयति । अत्रापि हेतोः उत्तरकालानुग्रहार्थं यावज्जीववाक्ये दर्शादिकर्मणां विनियोगभेद एवाश्रयणीयः । पूर्वपक्षरीत्या **कालश्चेत्** जीवनकालो यदि विधीयेत तदा जीवनकालव्यापकस्य दर्शपूर्णमासप्रयोगस्य मध्ये **कर्मभेदः** सोमयागादिकं कर्मान्तरं अनुष्ठेयं **स्यात्** । तथा च 'विवा एतद्यज्ञस्य छिद्यते यदन्यस्य तन्त्रे विततेऽन्यस्य तन्त्रं प्रताय्यते' इति श्रुतिविरोधः । न चानन्यगतिकत्वं दर्शप्रयोगवृत्तिपिण्डपितृयज्ञप्रयोगवदिति वाच्यम् । सिद्धान्तरीत्याऽप्युपपत्तेः ॥ ४ ॥ किंच—दर्शादिनित्यविनियोगविधिपक्षे सिद्धान्ते. "जरामर्यं वा एतत्सत्रं यदग्निहोत्रं जरया वा एताभ्यां मुच्यते मृत्युना वा" इति जरामरणाभ्यां निर्मोकावधारणमुपपन्नं स्यात् । काम्य एव दर्शादौ कालविधिपक्षे **तु** दर्शादेः **अनित्यत्वात् नैवं स्यात्** । तदा ह्यप्रयोगादपि मुच्येतैव । न च सत्रसादृश्यं प्रयोगभेदे नोपपद्यत इति वाच्यं तस्य दीर्घकालिकैककर्मरूपतयाऽप्युपपत्तेः ॥ ५ ॥ अङ्गत्वेन जीवनकालविधिपक्षे तस्य सौर्यादिविकृतिष्वप्यतिदेशावश्यकतया कामनावशेनारब्धानामनेकासां विकृतीनां यावज्जीविकाभ्यासे अशक्यार्थतारूपो **विरोधश्चापि** स्यात् **पूर्ववत्** पूर्वसत्रोक्तजरामर्यवादविरोधवत् । जीवनस्य निमित्तत्वसिद्धान्ते तु निमित्तस्यानङ्गतया अनतिदेशान्नासौ विरोधः ॥ ६ ॥ एवं—**कालशास्त्रं** वसन्तादिकालविधिपरतयाऽऽपाततः प्रतीयमानं यावज्जीवश्रुतिरहितं "वसन्तेवसन्ते ज्योतिषा यजेत" इत्यादिवाक्यमपि निमित्तं वसन्तादेर्निमित्ततापरमेव स्यात्, कुतः, **कर्तुस्तु** कर्तुरेव पुरुषस्य **धर्मनियमात्** धर्मनियमाङ्गीकारे लाघवात् । वसन्तस्य निमित्तत्वे हि वीप्सार्थस्यार्थसिद्धत्वात् न विधेयता । अङ्गत्वे तु वीप्सार्थोपि विधेयस्स्यादिति गौरवमिति ॥ ७ ॥

'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इत्यत्र काम्य एव स्वर्गाद्यर्थे दर्शपूर्णमासकर्मणि जीवनपर्याप्तकालविधिः । न च पौर्णमास्यादिकालविरोधः । व्याप्यव्यापकभावेनामावास्यापराह्णादिवदुपपत्तेः । अत एव विनिगमनाविरहात् कालद्वयविधावपि प्रयोगद्वयविधिः । जीवनपर्याप्तकालविधिसामर्थ्यादेव च प्रतिपौर्णमास्याद्यर्थाद्दर्शपूर्णमासावृत्तिः । अतश्च तावद्व्याप्यप्रयोगव्यासक्तव्यापकप्रयोगादेव स्वर्गादिफलमिति प्राप्ते—

काललक्षणापत्तेर्नायं कालविधिः । अतो धातुसम्बन्धाधिकारविहितणमुल्प्रत्ययेन जीवनस्य कर्मसम्बन्धावगतेस्स्वावच्छिन्नकालकत्वादिरूपसम्बन्धाश्रयणे च गुणभूतकालानुरोधेन प्रधानावृत्तेर्न्यायलभ्यत्वाभावेन यावच्छब्दार्थस्यापि विधेयत्वापत्तेर्लाघवान्निमित्तत्वमेव सम्बन्धः प्रतीयते । तदा हि प्रतिनिमित्तं नैमित्तिकावृत्तेर्न्यायलभ्यत्वाद्यावच्छब्दार्थोऽनुवादः । निमित्तत्वं च स्वान्वयव्यतिरेकानुविधाय्यवश्यानुष्ठानवत्त्वं यथा राहूपरागान्वयव्यतिरेकानुविधाय्यवश्यानुष्ठानं यस्य स्नानस्य तद्वत्त्वं राहूपरागे । अत्र च व्यतिरेकानुविधानस्य सर्वत्र प्रापकप्रमाणाभावादेव सिद्धेरन्वयानुविधान एव विधेस्तात्पर्यम् । अतश्च निमित्तसत्त्वे नैमित्तिकस्यावश्यानुष्ठानबोधनादकरणे प्रत्यवायोऽनुमीयते । करणे च 'धर्मेण पापमपनुदति'* इत्यादिवाक्यशेषात् रात्रिसत्रन्यायेन पापक्षय एवानुषङ्गिको नित्यनैमित्तिकस्थले फलम् । यत्र तु रथन्तरसामत्वादिनिमित्तसत्त्वे नैमित्तिकस्य पाठादेव प्राप्तिसम्भवेनान्वयानुविधानस्य प्रमाणान्तरेण प्राप्तिस्तत्र व्यतिरेकानुविधान एव विधेस्तात्पर्यम् । अत एव रथन्तराभावे ऐन्द्रवायवाग्रत्वस्याभावः । अतश्च यावज्जीवपदे

---

*प्राग्निकी ७८.

लाघवाद्यनुरोधेन जीवनस्य निमित्तत्वावगतेस्तदनुरोधेन पापक्षयार्थं विनियोगान्तरमेवेदमिति सिद्धम् ॥ १ ॥

(२) नामरूपधर्मविशेषपुनरुक्तिनिन्दाऽशक्तिसमाप्तिवचनप्रायश्चित्तान्यार्थदर्शनाच्छाखान्तरेषु कर्मभेदस्स्यात् ॥ ८ ॥ एकं वा संयोगरूपचोदनाख्याविशेषात् ॥ ९ ॥ न नाम्ना स्यादचोदितत्वात् ॥ १० ॥ सर्वेषां चैककर्म्यात् ॥११॥ कृतकं चाभिधानम् ॥ १२ ॥ एकत्वेऽपि परम् ॥ १३ ॥ विद्यायां धर्मशास्त्रम् ॥ १४ ॥ आग्नेयवत्पुनर्वचनम् ॥ १५ ॥ अद्विर्वचनं वा श्रुतिसंयोगाविशेषात् ॥ १६ ॥ वाक्यासमवायात्* ॥ १७ ॥ अर्थासन्निधेश्च ॥ १८ ॥ न चैकं प्रतिशिष्यते ॥ १९ ॥ समाप्तिवच्च सम्प्रेक्षा ॥२०॥ एकत्वेऽपि पराणि निन्दाऽशक्तिसमाप्तिवचनानि ॥ २१ ॥ प्रायश्चित्तं वा निमित्तेन ॥२२॥ प्रक्रमाद्वा नियोगेन ॥२३ समाप्तिश्च पूर्ववत्त्वाद्यथाज्ञाते प्रतीयेत ॥२४

---

*वार्तिके कौस्तुभे चेदं सूत्रं दृश्यते।

**लिङ्गमविशिष्टं सर्वशेषत्वान्न हि तत्र कर्मचोदना तस्माद्द्वादशाहारव्यपदेशस्स्यात् ॥२५ द्रव्ये चाचोदितत्वाद्विधीनामव्यवस्था स्यान्निर्देशाद्व्यवतिष्ठेत तस्मान्नित्यानुवादस्स्यात् ॥ २६ ॥ विहितप्रतिषेधात्पक्षेऽतिरेकस्स्यात् ॥ २७ ॥ सारस्वते विप्रतिषेधाद्यदेति स्यात् ॥ २८ ॥ उपहव्ये प्रतिप्रसवः ॥ २९ ॥ गुणार्था वा पुनश्श्रुतिः ॥ ३० ॥ प्रत्ययं चापि दर्शयति ॥ ३१ ॥ अपि वा क्रमसंयोगाद्विधिपृथक्त्वमेकस्यां शाखायां व्यवतिष्ठेत ॥ ३२ ॥ विरोधिनां त्वसंयोगादैककर्म्ये तत्संयोगाद्विधीनां सर्वकर्मप्रत्ययस्स्यात् ॥ ३३ ॥**

एकवेदगतनानाशाखासु श्रुतानामग्निहोत्रादीनामुत्पत्तिप्रयोगविनियोगभेदा पवादोऽत्र क्रियते । नानाशाखासु श्रुता अग्निहोत्रादयो भिद्यन्ते न वेति सन्देहः । तत्र पूर्वपक्षमाह—एकस्यां शाखायामग्निहोत्रादिविधिपरायां सत्यां **शाखान्तरेषु** तद्भिन्नशाखास्वपि तद्विधिपरासु सतीषु **कर्मभेदः** अग्निहोत्रादिकर्मणां तत्तत्प्रतिपाद्यानां भेदः **स्यात्** । कुतः? **नामरूपधर्मविशेषपुनरुक्तिनिन्दाऽशक्तिसमाप्तिवचनप्रायश्चित्तान्यार्थदर्शनात्** । नाम तावत् काठकं कालापकमित्यादिकं कर्मणि वैदिकैः प्रयुज्यमानम् । तच्च संज्ञाविधयैव भेदमाह-

कम् ।. रूपं द्रव्यदेवताख्यं तद्रूपाद्गुणाद्भेदः । यथा—कस्यां चिच्छाखायामग्नीषोमीय एकादशकपालः शाखान्तरे तु द्वादशकपाल इति । एवं धर्मविशेषेऽपि गुणो भेदकः । यथा—कारीरीवाक्यान्यधीयानास्तैत्तिरीया भूमौ भोजनमाचरन्ति अन्ये नेति । तदिदं भूमिभोजनरूपमध्ययनाङ्गमुपकारकत्वात् कारीरीभेदं गमयति । पुनरुक्तिः एकशाखायां श्रुतस्य शाखान्तरे पुनश्श्रवणरूपोऽभ्यासः ".अग्निहोत्रं जुहोति "* इत्यादौ अग्निहोत्रादेर्भेदकः । निन्दाऽपि अग्निहोत्रादिकर्मभेदिका गुणविधया "प्रातःप्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति येऽग्निहोत्रम् । दिवाकीर्त्यमपि वा कीर्तयन्तस्सूर्यो ज्योतिर्न तदा ज्योतिरेषाम् ॥" इत्येषा उदितहोमसन्निधौ । अनुदितहोमविधिसन्निधौ च "यथाऽतिथये प्रद्रुतायान्नं हरेयुस्तादृगेव तद्यदुदिते जुह्वति" इत्येवंरूपा । अशक्तिः कर्मण एकत्वे सर्वशाखास्थाङ्गोपसंहारस्य । तथा चैकशाखाविहिते अग्निहोत्रादिकर्मण्यसम्भवन्निवेशाच्छाखान्तरीयाङ्गरूपाद्गुणाद्भेदः । **समाप्तिवचनं** "अस्माकं मैत्रायणीयानां योऽग्निस्सोऽन्वारोहेषु समाप्यते अन्येषामन्यत्र" इत्यादिकं अग्निचयनादिसमाप्तिभेदव्यवहरणं याज्ञिकानां गुणविधया अग्निचयनादिकर्मभेदकम् । अन्वारोहा नाम स्थलारोहणमन्त्राः । **प्रायश्चित्तं** उदितहोमिनामनुदितहोमिनां च तत्तद्धोमव्यतिक्रमे विधीयमानं अनिषिद्धप्रायश्चित्तासम्भवान्निन्दावद्गुणविधया अग्निहोत्रकर्मभेदकम् । निन्दा हि अनिषिद्धेऽपि कथं चित्सम्भवेत्स्तुत्यर्थं न तु प्रायश्चित्तमिति पृथगुक्तिः । अन्यार्थदर्शनं नाम रूपाद्युक्तार्थातिरिक्तस्याप्यर्थस्य कालादिरूपस्यानुपादेयगुणस्य दर्शनमपि प्रकरणान्तरविधया भेदकम् । तदिदं परिहारसूत्रवशात्पञ्चसु स्थलेषु प्रदर्श्यते । यथा कचिच्छाखायां प्रायणीयं द्वादशाहान्तर्गतं प्रक्रम्य श्रुतं "यदि पुरा दिदीक्षाणास्स्युस्तत्र तमेव बृहत्सामानमतिरात्रमुपेयुरु-

---

*तै. सं. १-६-९.

पेतमेषां रथन्तरमथ यद्यदीक्षाणास्ततो रथन्तरसामानमेव" इति । यदि पुरा दीक्षितवन्तस्ततो बृहत्सामानमतिरात्रमुपेयुः पूर्वदीक्षायां रथन्तरस्य प्रयुक्तत्वात् । अथ न दीक्षितवन्तस्ततो रथन्तरसामानमेवोपेयुरित्येवं प्रागदीक्षितानामपि द्वादशाहे दर्शनं शाखाभेदेन द्वादशाहकर्मणो भेदे सत्येवोपपद्यते । एकत्वे हि "एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्यो। तिष्टोमो य एतेनानिष्ट्वाऽथान्येन यजते गर्तपत्यमेव तद्भवति" इति ताण्डकशाखास्थवचनेन विकृत्यन्तराणामिव सर्वशाखास्थस्यापि द्वादशाहस्य ज्योतिष्टोमपश्चाद्भावनियमात् तत्रादीक्षितदर्शनानुपपत्तिः । भेदे तु ताण्डकशाखास्थयज्ञानामेवोपस्थितत्वादन्यपदेनोपादानात्तच्छाखास्थद्वादशाहस्यैव ज्योतिष्टोमपश्चाद्भावनियमादेतच्छाखास्थद्वादशाहस्य तन्नियामकप्रमाणाभावेन पक्षे अदीक्षितार्थदर्शनोपपत्तिः । तथा—यूपैकादशिन्याम् "यत्पक्षसम्मितां मिनुयात्कनीयांसं यज्ञक्रतुमुपेयात्...वेदिसम्मितां मिनोति"* इति लिङ्गमनियमेनार्थप्राप्तयोश्श्येनाख्यपक्ष्याकारस्थलावयवभूतपक्षद्वयसम्मितत्ववेदिसम्मितत्वपक्षयोर्मध्ये एकं निन्दित्वा इतरविधिरूपं भेदपक्ष उपपद्यते । कर्मैकत्वपक्षे तु शाखान्तरीयस्य "रथाक्षमात्राणि यूपान्तरालानि भवन्ति" इति विधिविहितस्य रथाक्षमात्रान्तरालस्याप्युपसंहारान्न वेदिसंमानं विधातुं शक्यम्-वेदेरल्पपरिमाणत्वात्सुतरां च पक्षसम्मानं निन्दितुं अप्रसक्तत्वात् । तथा शाखाभेदेन ज्योतिष्टोमातिरात्रे "तिस्रस्संस्तुतानां विराजमतिरिच्यन्ते" इति "द्वे संस्तुतानां विराजमतिरिच्येते" इति च श्रूयते । तत्र संस्तुतपदवाच्यानां स्तोत्रीयाणां मध्ये विराट्पदवाच्येन दशकेन भागं दत्वा द्वयोस्तिसृणां चावशेषवचनं कर्मैकत्वेनोपपद्यते । तथा सारस्वतसत्रे—'ये पुरोडाशिनस्त उपवसन्ति ये सान्नाय्यिनस्ते वत्सान् धास्यन्ति' । इत्यसोमयाज्यधिकारिकैन्द्राग्नाभिप्रायेण पुरोडाशिन इति वचनमनिष्टप्रथनयज्ञत्वज्ञापकमदीक्षितदर्शनवत्कर्मभेदे उपपद्यते । प-

---

* तै. सं. ५-६-८.

रिहारभेदात्तु पृथगुपन्यासः । तथा उपहव्ये क्रतौ शाखाभेदेन "उप-हव्योऽनिरुक्तोऽग्निष्टोमो रथन्तरं सामाश्वश्श्यावो दक्षिणा" "उपहव्योऽनिरुक्त उक्थ्यो बृहत्सामाश्वश्श्वेतो दक्षिणा" इत्येताभ्यां वाक्याभ्यां बृहद्रथन्तरसामनी विहिते । तत् कर्मैकत्वपक्षे विकल्पापत्तेर्विकल्पस्य चातिदेशेनैव प्राप्तत्वादनर्थकम् । भेदपक्षे तु विकल्पेन प्राप्तयोर्नियमार्थमिति भेदपक्ष एव न्याय्य इति ॥ ८ ॥ सिद्धान्तमाह—सर्वशाखासु अग्निहोत्रादि कर्म **एकं वा** एकमेव **संयोगरूपचोदनाख्याविशेषात्** संयोगः स्वर्गादिफलसम्बन्धः रूपं द्रव्यदेवतालक्षणं चोदना धात्वर्थावच्छिन्नभावनाविषयकविधिरूपा आख्या अग्निहोत्रादिनामधेयं एतेषां प्रतिशाखमविशेषात् अवैलक्षण्यात् । तथा च तदेवेदमिति प्रत्यभिज्ञायते ॥ ९ ॥ पूर्वपक्ष्युक्तान् हेतून् क्रमेण निरस्यति । **नाम्ना** काठकादिकेन अग्निहोत्रादीनां न भेदः काठकादिनाम्नः अचोदनाऽभिधानत्वात चोदनायां विद्यमानं यदभिधानं नामधेयं तत्त्वाभावात् । तद्धि ग्रन्थाभिधानम् । विधिगता च संज्ञा कर्मभेदहेतुरिति ॥१० ॥ ग्रन्थसंज्ञाभेदस्यापि कर्मभेदकत्वमिति तु न युक्तं तथा सति तुल्ययुक्त्या ग्रन्थसंज्ञैक्यस्यापि कर्मैक्यहेतुत्वमवश्याश्रयणीयामिति प्रायः **सर्वेषां च** सर्वेषामपि कर्मणां **ऐककर्म्यात्** एककर्मत्वप्रसङ्गात् । अस्ति हि तैत्तिरीयमित्यादि संज्ञैक्यम् ॥ ११ ॥ इतश्च काठकादिसंज्ञाभेदो न कर्मभेदहेतुः यतः अभिधानं काठकादिकं **कृतकं च** वैशम्पायनान्तेवासिपुरुषविशेषवाचिकठशब्दघटितत्वात्तस्य च सादित्वात्ततः परमेव प्रवृत्ततया अनित्यमपि । न खल्वनित्यसंज्ञया नित्यचोदनाविहितकर्मभेदो युज्यते ॥ १२ ॥ यत्तु एकादशकपालत्वद्वादशकपालत्वारूपभेदाख्या **परं** अग्नीषोमीयस्य भेदकारणमुक्तं तत्तु तस्य **एकत्वेऽपि** व्रीहियवन्यायेन विकल्पेनोपपत्तेर्न भेदकम् ॥ १३ ॥ यत्पुनः भूमिभोजनादिपरं **धर्मशास्त्रं** तत् कारीरीवाक्याद्यध्ययनसाध्यायां **वि-**

**द्यायां** विघ्ननिवृत्तिद्वारा उपयोगिनमर्थं विधत्ते न पुनः कारीर्यादिकर्माङ्गम् । वक्ष्यते चायमर्थो द्वादशे । अतो न ततः कारीर्यादिकर्मभेदः ॥ १४ ॥ यत्तु शाखाभेदेनाग्निहोत्रादेः **पुनर्वचनं** भेदकमुक्तं तत् **आग्नेयवत्** आग्नेयस्य "यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति"* इत्येतदनन्तरश्रुते "आग्नेयोऽष्टाकपालोऽमावास्यायां भवति"* इति वाक्ये पुनर्वचनमिव न भेदकं भवितुमर्हति । स्पष्टं चेदमाग्नेयाधिकरणे प्राक् ॥ १५ ॥ अथवा नानाशाखासु अग्निहोत्रादेश्श्रवणं **अद्विर्वचनं** अनन्यपरपुनश्श्रवणरूपोऽभ्यास एव न भवति **श्रुतिसंयोगाविशेषात्** अपूर्वश्रुतिसंयोगाख्याज्ञातज्ञापकत्वस्य सर्वत्राविशेषात् । तत्तच्छाखावाक्यस्य तत्तच्छाखाध्येतृपुरुषान् प्रत्यज्ञातज्ञापकत्वात् ॥ १६ ॥ ननु यश्शाखाद्वयाध्येता तं प्रति तादृशशाखाद्वयगतवाक्यद्वयस्याज्ञातज्ञापकता न सम्भवतीति चेन्न **वाक्यासमवायात्** एकशाखावाक्यस्य शाखान्तराध्येतृषु नियमेन अध्ययनतस्सम्बन्धासम्भवात् । ये खल्वेकैकमात्रशाखाध्यायिनः तान्प्रत्यज्ञातज्ञापकत्वं सर्वेषां वाक्यानामस्त्येवेति ॥ १७ ॥ **अर्थासन्निधेश्च** शाखाभेदेनाग्निहोत्रादेः अद्विर्वचनमपौनरुक्त्यमवगन्तव्यम् । तत्र नाम पुनरुक्तता भवति यत्र पूर्वोक्तोऽर्थस्तस्यैव पुंसस्सन्निहितो भवति । न त्विह शाखान्तरगतस्य सन्निधानमित्यपुनरुक्तता ॥ १८ ॥ शाखाभेदेनाग्निहोत्रादिभेदे हि तत्तत्कर्मसु अधिकारिविशेषव्यवस्था न कल्पयितुं शक्यते **न च** न हि **एकं प्रति** क्वचिदपि शाखायां **शिष्यते** विधीयते । अर्थिमात्रोद्देशेन विधेरेव स्वर्गकामादिपदैरवगमात् ॥ १९ ॥ "अस्माकं मैत्रायणीयानां योऽग्निस्सोऽन्वारोहेषु समाप्यतेऽन्येषामन्यत्र" इति समाप्तिव्यपदेशः **समाप्तिवच्च सम्प्रेक्षा** असमाप्तावपि स्वशाखाधीताङ्गसमाप्तिमभिप्रेत्य समाप्तिवदुत्प्रेक्षामात्रमेव । अचन्द्रेऽपि मुखे

*तै. सं. २-६-३.

आह्लादकत्वाद्यभिप्रायेण चन्द्रत्वोत्प्रेक्षावत् । तथा च योऽग्निस्सोऽस्माकमत्र समाप्यते अन्येषामन्यत्रेत्यन्वयाङ्गीकारेण तद्व्यपदेशेनाप्यभेद एव प्रतीयते इत्याशयः ॥ २० ॥ यानि पुनः पुनर्वचनात् **पराणि निन्दाऽशक्तिसमाप्तिवचनानि** तानि **एकत्वेऽपि न** प्रतिकूलानि । उदितानुदितकालयोर्हि एकत्र कर्मणि विकल्प एवेतीतरेतरनिन्दयोर्न हि निन्दान्यायेनेतरेतरस्तुत्यर्थतयोपपत्तेः । सर्वाङ्गोपसंहारेऽपि च तत्तच्छाखागताङ्गानां बाहुल्येन समानत्वात्केषांचिदेव त्वाधिक्येन न अशक्तिः प्रसञ्जनीया । समाप्तिवचनं च स्वशाखाधीनाङ्गापेक्षयेत्युक्तमेव [१९] सूत्रे ॥ २१ ॥ शङ्कते—**निमित्तेन** उदितानुदितहोमयोस्स्वस्वकालातिक्रमरूपनिमित्तेन अनुष्ठेयतया आम्नातं प्रायश्चित्तं कथं सङ्गच्छताम् ॥ २२ ॥ समाधत्ते—**प्रक्रमाद्वा** प्रथमप्रयोगमारभ्यैव **नियोगेन** कालादिनियमस्वीकारेण स्वीकृतकालव्यतिक्रमे प्रायश्चित्ताम्नानं युज्यत एव । तथा च छन्दोगपरिशिष्टे—

रूपं कालोऽनुनिर्वापश्श्रवणं देवतास्तथा । य आदौ विधृताः पक्षास्त इमे सर्वदा स्मृताः ॥ इति ॥ २३ ॥

**समाप्तिः** समाप्तिव्यवहारः **पूर्ववत्त्वात्** पूर्वोपपादितकर्मभेदग्राहकयुक्तिसहकृतत्वात् **यथाज्ञाते** यथादर्शितयोजनावगते कर्मभेद एव तात्पर्यवानिति **प्रतीयेत** निर्धार्येत । अतस्समाप्तिव्यवहारस्य आपातप्रतीयमाना कर्मभेदपरता न स्वीकार्येति भावः ॥ २४ ॥ **लिङ्गं** अदीक्षितदर्शनरूपं यदुक्तं तत् तवापि **अविशिष्टं** "एष वाव प्रथमो यज्ञः" इत्यनेन ताण्डकवाक्येनानारभ्याधीतेन ज्योतिष्टोमविकारेषु यज्ञान्तरेष्विव द्वादशाहसामान्येऽप्यग्निष्टोमोत्तरत्वस्य विधानात् **न हि तत्र** ताण्डकवाक्ये **कर्मचोदना** द्वादशाहरूपकर्मणश्चोदना प्रकृताऽस्ति । अपि तत्र यज्ञांशे ताण्डकशाखागतत्वमप्युपेक्ष्यतावच्छेदककोटिनिविष्ट

मानाभावात् । शाखान्तरगते ज्योतिष्टोमविकारेऽपि ज्योतिष्टोमपश्वाद्या-वावश्यकत्वाच्च । तस्मात् " यदि दीक्षितः " इति वाक्ये द्वादशाहस्य आहारव्यपदेशः प्रयोगभेदतात्पर्यकः दीक्षितादीक्षिताधिकारव्यपदेशः **स्यात्** तथा च द्वादशाहैक्येऽपि नास्माक तल्लिङ्गदर्शनानुपपत्तिरिति ॥ २५ ॥ द्रव्ये अग्नयाख्यद्रव्यप्रकरणे अन्तरालस्य **अचोदितत्वात् विधीनां** अन्तरालविध्यादेः **अव्यवस्था** प्रकरणे व्यवस्थितिविरहः **स्यात्** वेदिसम्मानमेव तु प्रकरणे निर्देशात् व्यवतिष्ठेत । **तस्मात्** पक्षसम्मितिनिन्दा नित्यानुवादः **स्यात्** वेदिसम्मानं तु शाखान्तरे यूपैकादशिन्या अपि चयनप्रकरणे समाम्नानात् ज्योतिष्टोमापूर्वसाधनीभूताग्नयङ्गयूपैकादशिन्युद्देशेनैव विधीयत इत्यङ्गीक्रियते । अनारभ्याधीतो रथाक्षमात्रान्तरालताविधिस्तु यास्वग्निरहितासु विकृतिषु यूपैकादशिनी विहिताऽस्ति तासु गमिष्यतीति वार्तिककाराशयः । भाष्यकारपक्षे तु **द्रव्ये** अग्नयाख्ये यूपैकादशिन्या अचोदितत्वात् **विधीनां** वेदिसम्मानविधिरथाक्षमात्रान्तरालविधिपक्षसम्मानविधीनां **अव्यवस्था स्यात्** सति ह्यग्नौ यूपैकादशिनीनिर्देशे तस्मात् निर्देशात् व्यवतिष्ठेत विरुद्धानां मानविधीनां व्यवस्था अपेक्ष्येत । **तस्मात्** तादृशनिर्देशाभावात् पक्षसम्मानानिन्दा **नित्यानुवादः** सन् वेदिसम्मानस्तुत्यर्थः **स्यात्** । स्तुतिपूर्वकस्तद्विधिरपि च न विधानार्थः । अपि तु जर्तिलयवागून्यायेन पश्वेकादशिनीवृत्तियूपैक्याविधिस्तुत्यर्थः एकवाक्यतालाभात् । पक्षसम्मानापेक्षया प्रशस्तमपि वेदिसम्मानं यूपैक्यापेक्षया अप्रशस्तमेवेत्येवं स्तुतिः । एवं च रथाक्षमात्रान्तरालता यत्र वाचस्तोमादौ यूपैकादशिनी विहिता तद्विषयेत्यवधेयमिति ॥ २६ ॥ 'तिस्रः संस्तुतानां विराजमतिरिच्यन्ते द्वे संस्तुतानां विराजमतिरिच्येत' इति लिङ्गमपि कर्मैक्यपक्षेऽप्युपपद्यते **विहितप्रतिषेधात्** " अतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णाति " इति विहितस्यैव षोडशिनः प्रतिषेधात्

वैकल्पिकत्वावगतेः। करणपक्षे हि बहिष्पवमाने नव। आज्येषु चतुर्षु माध्यंदिनपवमाने च पञ्चदशस्तोमकत्वात् मिलित्वा पञ्चसप्ततिः पृष्ठेषु चतुर्षु आर्भवे च सप्तदशस्तोमकत्वात् तथैव पञ्चाशीतिः अग्निष्टोमस्तोत्रे त्रिषूक्थ्यपर्यायेषु षोडशिनि चैकविंशस्तोमकत्वात् तथैव पञ्चोत्तरं शतम्। द्वादशस्वतिरात्रस्तोत्रेषु पञ्चदशस्तोमकत्वादशीत्युत्तरं शतम्। रथन्तरे नव। तत्र सर्वेषां मेलने कृते त्रिषष्ट्युत्तरशतचतुष्टयोपजननाद्दशकेन भागे दत्ते तिस्रोऽवशिष्यन्त इति तिसृणां **अतिरेकस्स्यात्** अकरणपक्षे तु एकस्या एकविंशतेरगणने द्विचत्वारिंशदुत्तरचतुश्शत्युपजननाद्दशकेन भागदाने द्वेऽवशिष्येते इति द्वयोरतिरेकस्स्यादिति ॥२७॥ **सारस्वते** मित्रावरुणयोरयनाख्ये सारस्वतसत्रे **विप्रतिषेधात्** सर्वेषामेव क्रतूनां ज्योतिष्टोमविकाराणामग्निष्टोमपूर्वकत्वेन 'ये पुरोडाशिनः' इति पुरोडाशदर्शनविरोधस्य कर्मभेदवादिमतेऽपि दुर्वारत्वात्। सर्वैरेव तद्विरोधवारणाय **यदेति** पदमध्याहरणीयं **स्यात्** तथा च सारस्वतसत्रे प्रतिपक्षममावास्यापौर्णमास्याख्यकर्मविधानात् ये यदा पुरोडाशिनः पुरोडाशसाध्यकर्मकर्तारः ते तदा उपवसन्ति। ये यदा सान्नाय्यिनः सान्नाय्यसाध्यकर्मकर्तारस्ते तदा वत्सं धारयन्तीति कालभेदमात्रपर्यवसितं तद्वाक्यं न तु कर्मभेदपरमिति ध्येयम् ॥ २८ ॥ **उपहव्ये** क्रतुविशेषे बृहद्रथन्तरयोर्वैकल्पिकयोः प्रकृतित एव प्राप्तयोश्शाखाभेदेन पुनर्विधानरूपः **प्रतिप्रसवः** कथं सङ्गच्छत इति शङ्कापरमिदं सूत्रम् ॥ २९ ॥ समाधत्ते—प्राप्तयोरपि बृहद्रथन्तरयोः **पुनश्श्रुतिः** पुनश्श्रवणं गुणार्था वा संस्थाव्यवस्थार्थं दक्षिणाव्यवस्थार्थं चोपपद्यते। 'उपहव्योऽग्निष्टोमो रथन्तरसामाऽश्वश्श्यावो दक्षिणा' इत्यत्र रथन्तरसाम्नि निमित्ते अग्निष्टोमसंस्थाश्यावाश्वदक्षिणोभयविशिष्टस्य उपहव्यनामकस्य कर्मणो विधानाङ्गीकारात् संस्थादक्षिणयोर्गुणयोर्व्यवस्था भवति। एवं 'उपहव्य उक्थ्यो यज्ञो बृहत्सामाश्वश्श्वेतो दक्षिणा' इति शाखा-

न्तरवाक्येऽपि बोध्यमिति ॥ ३० ॥ एवं कर्मैक्यबाधकानि लिङ्गानि परिहृत्य तत्साधकमपि लिङ्गमाह—मैत्रायणीयशाखायां 'ऋतवो वै प्रयाजाः'. इत्यनेन तैत्तिरीयशाखाविहितान् प्रयाजाननूद्य 'समाना प्रतिष्ठा होतव्या' इत्येषः पञ्चानां तेषां सहहोमाख्यं गुणं विदधत् सन्दर्भः **प्रत्ययं चापि** सर्वशाखाप्रत्ययमेकं कर्मेत्यपि **दर्शयति**। मैत्रायणीयशाखायां प्रयाजानामभिधानेन स्वशाखाविहितानुवादासम्भवात् । अत्रैव विशिष्टप्रयाजान्तरविधाने विशिष्टविधिनिमित्तगौरवापत्तेरिति ॥ ३१ ॥ शङ्कते—**अपि वेति** शङ्काद्योतकम् । **एकस्यां शाखायां विधिपृथक्त्वं** विधेः विधीयमानस्याग्निहोत्रादेः कर्मणः पृथक्त्वं शाखान्तरविहितादग्निहोत्रादिति । **व्यवतिष्ठेत** निर्णीयेत **क्रमसंयोगात्** पाठक्रमाद्यवगतक्रमादेस्तथैव समन्वयात् । अपृथक्त्वे हि क्रमकालपरिमाणभेदापत्तिः । तथा हि दर्शपूर्णमासयोस्स्विष्टकृदुत्तरं प्राशित्रदानं पठितं तत इडावदानमेकस्यां शाखायां पठितम् । अन्यस्यां तु तद्विपरीतम् । ततश्च कर्मैक्ये पाठक्रमेण क्रमनियमो न स्यात्। एवं शाखान्तरावगताङ्गोपसंहारे कालाधिक्यप्रसङ्गेन पूर्वाह्णादिकालः तथा प्रयोगविध्यवगतं परिमाणमपि च नोपपद्यते ॥ ३२ ॥ समाधत्ते—**ऐककर्म्ये** पूर्वोक्तयुक्तिभिस्सर्वशाखाप्रत्ययकर्मैक्ये तु न किञ्चिद्बाधकमस्ति **विरोधिनां** क्रमाणां एकस्मिन् प्रयोगे **असंयोगात्** अनन्वयात्। प्रयोगभेदेन विरोधिनोः क्रमयोस्सम्बन्धो नानुपपन्नः । ततश्च **विधीनां** अङ्गविधीनां सर्वेषां **तत्संयोगात्** तेनैव कर्मणा प्रधानेन सम्बन्धात् **सर्वप्रत्ययः** नानाशाखावगतसर्वाङ्गोपसंहारः **स्यात्** एव। सर्वाङ्गोपसंहारेणैव प्रयोगविधिप्रवृत्तेः परिमाणभेदस्यापि नावसरः । कतिपयपदार्थमात्राधिक्येऽपि पूर्वाह्णादिकालातिक्रमोपि नाशङ्कनीय इति भावः ॥ ३३ ॥

इति सारबोधिन्यां द्वितीयस्य चतुर्थः.

अग्निहोत्रादौ सत्स्वपि भेदकप्रमाणेषु न कर्मभेदः । भेदकप्रमाणैर्हि स्ववाक्यस्य कर्मोत्पत्तिपरत्वावगतेरुत्पन्नस्योत्पत्त्ययोगात्कर्मान्तरत्वसिद्धिः । प्रकृते तूक्तप्रमाणैरुत्पत्तिपरत्वावगमेऽपि पुरुषभेदात्तत्तच्छाखाध्यायिपुरुषान् प्रत्येकस्यैव कर्मणस्सर्वत्रोत्पत्तिसम्भवान्न कर्मभेदः । न हि सर्वशाखास्सर्वपुरुषैरध्येयाः स्वाध्यायविधौ 'अध्वर्युं वृणीते' इतिवत्स्वीयत्वैकत्वयोर्विवक्षितत्वेनानेकशाखाध्ययनानुपपत्तेः । न चैवं वेदान्तरस्थशाखाध्ययनस्याप्यनापत्तिः । 'वेदानधीत्य' इत्यादिवचनान्तरानुरोधेन वेदत्रयगतैकैकशाखाध्ययनस्यैवावश्यकत्वावगतेः । अत एव वेदभेदे पुरुषाभेदादेकत्रैवोत्पत्तिरपरत्र गुणार्थं श्रवणमित्यत्र नियामकं वक्ष्यते । वेदैकत्वे तु प्रतिशाखं पुरुषभेदात् सत्यपि सर्वेषामुत्पत्तिपरत्वे न कर्मभेदः । अत एवैकस्मिन् कर्मणि विरुद्धानां नानाशाखागताङ्गानां विकल्पः । स च न तत्तत्पुरुषभेदेन व्यवस्थितः । तत्तदङ्गानां तत्तदध्येत्रर्थत्वे प्रमाणाभावेन प्रकरणाच्छुद्धक्रत्वर्थत्वावगतेः । अविरुद्धाङ्गेषु तु समुच्चयः । शाखान्तरीयाङ्गज्ञानं च कल्पसूत्रादिभिस्सुलभम् । यत्तु 'बह्वल्पं वा स्वगृह्योक्तं' इत्यादिवचनं तत् सर्वाङ्गोपसंहारासम्भवेऽनुकल्पविधानार्थमिति कौस्तुभे द्रष्टव्यम्-

तदेवं शब्दान्तराभ्याससङ्ख्यासंज्ञागुणप्रकरणान्तरैर्निरूपितः कर्मणां भेदः । अतःपरं तेषां विनियोगो निरूपयिष्यते ॥२॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
द्वितीयस्याध्यायस्य चतुर्थः पादः.
अध्यायश्च समाप्तः

## (१)–अथातश्शेषलक्षणम् ॥ १ ॥

अथ, षट्प्रमाणककर्मभेदनिरूपणानन्तरं अतः तादृशभेदनिरूपणनिष्ठहेतुताया निरूपकं **शेषलक्षणं** भावप्रधाननिर्देशाद शेषत्वनिरूपणं सानुबन्धिकं आरभ्यते । कर्मणां परस्परं भेदे सत्येव तत्र केषांचिदाग्नेयादीनां शेषित्वं केषांचिच्च प्रयाजादीनां शेषत्वमिति स्यात् नान्यथा । अतश्शेषत्वनिरूपणस्य भेदनिरूपणहेतुकत्वं बोध्यम् ॥ १ ॥

**षट्प्रमाणके भेदे निरूपिते सम्प्रति शेषिनिरूपितं शेषत्वापरपर्यायमङ्गत्वं निरूप्यते । भिन्नानां च तत्सम्भवाति नाभिन्नानामिति तन्निरूपणस्य तत्र हेतुत्वम् । यद्यपि च द्रव्यकर्मणोर्मिथोऽङ्गाङ्गिभावे न पूर्वोक्तनिरूपणस्य हेतुता । तथाऽप्यङ्गत्वसामानाधिकरण्येन हेतुतामादायैव सङ्गत्युपपत्ताववच्छेदकावच्छेदेन तदसत्त्वेऽपि न कश्चिद्विरोधः । अंश एव हेतुत्वं अंशान्तरस्य तु तत्प्रसङ्गान्निरूपणमित्यपि वा बोध्यम् । अङ्गत्वमेव चाध्यायार्थः । अङ्गित्वं त्वर्थात् । तदपि च श्रुत्यादिषट्प्रमाणकं अतिदेशप्रमाणकस्येहाविचार्यत्वात् । तच्चानेकप्रकारं विचार्यते । अङ्गत्वलक्षणं, शेषपदशक्यतावच्छेदकं, अङ्गाङ्गितयोरवच्छेदकं, श्रुत्यादीनि षडङ्गत्वे प्रमाणानि, तयोर्विरोधे बलाबलं, विरोधश्च कास्ति क नास्ति इत्यादि ॥ १ ॥**

---

## (२)–शेषः परार्थत्वात् ॥ २ ॥

**परार्थत्वात** परः अन्यः अर्थः प्रवृत्त्युद्देश्यः यस्येति बहुव्रीहौ यदीयविधिविहितकारकताकप्रवृत्त्युद्देश्यः स परार्थः इति लभ्यते तस्वात

अन्योद्देश्यकपरप्रवृत्तिकारकत्वेन विहितत्वात् हेतोः व्रीह्यादिः शेषः शेषव्यवहारविषयः व्यवहार्यतायां च व्यवहर्तव्यतावच्छेदकस्यैव नियामकत्वेन निरुक्तं पारार्थ्यं शेषपदप्रवृत्तिनिमित्तमिति लभ्यते ॥ २ ॥

इहाद्यं प्रकारद्वयं निरूप्यते । यदेव ह्यङ्गत्वलक्षणं तदेव शेषपदशक्यतावच्छेदकं नान्यत् । तत्राङ्गत्वं नाम पारार्थ्यं; तच्च यदुद्देशप्रवृत्तकृतिकारकत्वेन विहितं यत् तत्त्वं तदङ्गत्वम् । स्वर्गोद्देशप्रवृत्तपुरुषकृतौ यागानुकूलायां यागस्य कारकत्वेन विध्यन्वयाद्यागे लक्षणसमन्वयः । प्रधानोद्देशप्रवृत्तपुरुषकृतौ प्रयाजाद्यनुकूलायां प्रयाजादेः कारकत्वेन विध्यन्वयात्प्रयाजादावपि सः । द्रव्यगुणकर्तृकालदेशादौ च यागाद्युद्देश्यकयागानुकूलकृतौ करणत्वकर्तृत्वाधिकरणत्वादिकारकत्वेन विधेयत्वाद्यागाङ्गत्वाविघातः । षष्ठीस्थले च सम्बन्धसामान्याभिधानेऽपि कारकत्व एव पर्यवसानान्नाव्याप्तिः । निमित्तस्य च क्रियान्वयिनोपि कारकत्वाभावान्नाङ्गत्वापत्तिः निमित्तस्यानुष्ठापकत्वाख्योद्देश्यत्वेऽपि ईप्सितत्वाख्योद्देश्यत्वाभावाच्च न यागस्य निमित्ताङ्गत्वम् । लक्षणे तादृश्या एवोद्देश्यताया विवक्षितत्वात् । उद्देश्यतापदेनैव च कर्मकारकलाभात् कारकपदं तदतिरिक्तपरम् । कृष्यादेरपि यागकृतिकारकत्वात् अङ्गत्वप्रसक्तौ विधेयत्वान्तम् । यथा चास्य न काप्यव्याप्त्यतिव्याप्ती तथा कौस्तुभे विस्तरः । एवं च यत्रेदं न लक्षणं यथा यागादेर्भावनादिकं प्रति तत्र भाक्तोऽङ्गत्वव्यवहारश्शास्त्रे । यद्यपि च नेदृशमङ्गत्वं श्रुत्यादिप्रमाणकं कारकत्वमात्राभिधायित्वात्तृतीयादेः तथाऽपि यत्पदार्थस्स्वर्गादिपदात् तदुद्देश्यकत्वं संसर्गादिना । कृतिराख्याताद कारकत्वं तृतीयादेः विध्यन्वयित्वं विधिपदसमभिव्याहाराद । विधिर्हि विशिष्टभावनां विदधदर्थाद्विधो-

**षणान्यपि विधत्ते इति सर्वेषामुद्देश्यत्वेन विधेयत्वेन वा विध्यन्वयः । अत एवाङ्गत्वघटकीभूतपदार्थान्तराणां प्रमाणान्तरेण प्रसिद्धावपि तद्धटककारकत्वस्य श्रुत्यादिगम्यत्वात्तेषामङ्गत्वप्रामाण्यव्यवहारः ॥ २ ॥**

---

**(३)—द्रव्यगुणसंस्कारेषु बादरिः ॥३॥ कर्माण्यपि जैमिनिः फलार्थत्वात् ॥ ४ ॥ फलं च पुरुषार्थत्वात् ॥ ५ ॥ पुरुषश्च कर्मार्थत्वात्॥६**

यागप्रयाजादीनां कर्मणां स्वर्गफलादिकं प्रति शेषत्वं नास्ति उत अस्तीति संशये पूर्वपक्षमाह—**द्रव्यगुणसंस्कारेषु** द्रव्यं व्रीह्यादि गुणः आरुण्यादिः संस्कारः अवघातादिः एतेष्वेव तृतीयाद्वितीयादिश्रुतितो लिङ्गाच्च शेषत्वं न तु यागप्रयाजादीनां कर्मणामिति **बादरिः** नामाचार्यो मन्यते ॥ ३ ॥ सिद्धान्तमाह—**कर्माण्यपि** यागप्रयाजादीन्यपि शेषभूतानि **फलार्थत्वात्** स्वर्गक्रतूपकारादिरूपफलोद्देश्यकक्रतिकारकतया वाक्यप्रकरणादिभिः प्रमाणैरवगमात् । इति **जैमिनिः** सिद्धान्तं मन्यते ॥ ४ ॥ **फलं च** स्वर्गादिकमपि **पुरुषार्थत्वात्** भोक्तृपुरुषोपसर्जनत्वात् पुरुषं प्रति गौण्या शेषव्यवहारविषयः मुख्यस्य परोद्देश्यकक्रतिकारकत्वस्य विरहात् ॥ ५ ॥ **पुरुषश्च** स्वर्गकामादिः **कर्मार्थत्वात्** यागाद्युद्देश्यकक्रतौ कर्तृकारकत्वात् शेषभूत इत्युभयवादिसम्प्रतिपन्नमेव । पुरुषस्य द्रव्यान्तर्गतत्वात् । प्रयाजादीनां शेषत्वे अतिदेशस्सिद्धान्ते फलमिति बोध्यम् ॥ ६ ॥

**यद्यपि पारार्थ्यमङ्गत्वं तथाऽपि न यागादेर्लक्ष्यता समानपदश्रुत्या यागादेरेव भावनाभाव्यत्वेन तस्य स्वर्गोद्देशेन विहि-**

त्वाभावात् । विधेः प्रवृत्तिस्वरूपयोग्यत्वेनैव लिङर्थतया इष्टसाधनत्वानाक्षेपकत्वात् । आक्षेपकत्वेऽपि वा भ्रमप्रमासाधारण्येनेष्टसाधनत्वज्ञानस्यैव कारणतया इष्टसाधनत्वसिद्धौ प्रमाणाभावाच्च । स्वर्गकामपदस्य तु परस्त्रीकामः प्रायश्चित्तं कुर्यादितिवत् कर्तृपरत्वादिनाऽप्युपपत्तेर्न भाव्यपरत्वावश्यकता । अतो न यागादेर्लक्ष्यत्वम् । वस्तुतस्तु—उपकारकत्वमेव शेषत्वम् । तदर्थेऽप्यपकारके शेषत्वव्यवहाराभावात् । तच्च श्रुतिलिङ्गवाक्यरूपप्रमाणत्रयगम्यमेव । अत एव व्रीह्यादेर्द्रव्यस्य आरुण्यादेर्गुणस्य अवघातादेस्संस्कारस्य चोपकारकत्वदर्शनाच्छेषत्वम् । प्रोक्षणादिसंस्कारस्य तु लिङ्गेनाङ्गत्वासम्भवेऽपि श्रुतिवाक्याभ्यामङ्गत्वप्रतीतेस्तद्बलेनैवोपकारकत्वकल्पनया शेषत्वोपपत्तिरिति तेषामेव लक्ष्यत्वमिति प्राप्ते—

नोपकारकत्वं शेषत्वं गोदोहनदध्यानयनादेरपि प्रणयनवाजिनयागाङ्गत्वापत्तेः । अपि तु पारार्थ्यमेव । अपकारकस्थले तु तदपकारस्यैवेष्टत्वेन उद्देश्यता न तु तस्येति न तदर्थेऽप्यपकारके शेषत्वव्यवहारः । तदपि श्रुत्यादिषट्प्रमाणगम्यमिति वक्ष्यते । अतश्च वाक्याद्यागोऽपि फलाङ्गम् । तथा हि यद्यपि विधेस्स्वरूपयोग्यतयैव प्रवृत्त्यनुकूलत्वं लिङाऽवगम्यते तथाऽपि कदाचिदपि प्रवृत्त्यभावे विधिवैयर्थ्यापत्तेः अवश्यं कदाचित्तया भवितव्यम् । तथा चेष्टसाधनताज्ञानं विना तदसम्भवात् तस्य च बाधकाभावे भ्रमत्वायोगात् इष्टसाधनत्वं तावद्यागस्य विधिबलादवगम्यते । इष्टविशेषसाधनत्वं च स्वर्गकामादिपदसमभिव्याहारादिति यागस्य स्वर्गाङ्गत्वसिद्धिः । एवं फलस्यापि भोक्तृपुरुषाङ्गत्वम् । भोक्ता च उत्सर्गतो विधिबलात् कामनाबलात् आत्मनेपदबलाच्च कर्तैव । प्रमाणस-

त्त्वे त्वन्यः । अत्राङ्गत्वव्यवहारो भाक्त इति तु ध्येयम् । पुरुषः पुनः कर्तृत्वादिना यागाद्युद्देश्यकक्रुतिकारकत्वात् वाक्यादेव तदङ्गमित्यविवादमेव ॥ ३ ॥

---

## (४)—तेषामर्थेन सम्बन्धः ॥ ७॥ विहितस्तु सर्वधर्मस्स्यात्संयोगतोऽविशेषात् प्रकरणाविशेषाच्च ॥ ८ ॥ अर्थलोपादकर्म स्यात् ॥ ९ ॥ फलं तु सह चेष्टया शब्दार्थोऽभावाद्विप्रयोगे स्यात् ॥ १० ॥

श्रुतिप्रमाणकविनियोगोपयोगि निरूपणमेतत्पादार्थः । 'व्रीहीनवहन्ति' 'आज्यमुत्पुनाति' इत्यादौ **तेषां** अवघातादीनां **अर्थेन** व्रीह्यादिपदार्थेन सह **सम्बन्धः** अन्वयः । न तु प्रकरणदृष्टैराज्यादिभिरपि ॥ ७ ॥ एवं सिद्धान्ते शङ्कते—**विहितस्तु** 'व्रीहीनवहन्ति' इत्यादिविधिविहितोऽवघातादिः **सर्वधर्मः** सर्वेषामेव व्रीहीणामाज्यादीनां च शेषः **स्यात्. संयोगतः** प्रकृतापूर्वसम्बन्धितायास्तत्रतत्र व्रीह्यादिपदविवक्षणीयायाः **अविशेषात्** अविशिष्टत्वात् । **प्रकरणाविशेषात्** दर्शपूर्णमासप्रकरणस्याप्यविशिष्टत्वात् **च.** सामान्यधर्मावच्छिन्नबोधकस्यापि व्रीह्यादिपदस्य प्रकरणवशात्सङ्कोचोऽप्यत्र नाशङ्क्यः, प्रकरणस्याप्यविशेषादिति । तथा च आज्यादावप्यवहननादिकं व्रीह्यादावुत्पवनादिकं च सङ्कीर्णं स्यात् ॥ ८ ॥ समाधत्ते—अवघातादेः **अर्थलोपात्** अर्थस्य दृष्टरूपस्य वितुषीभावादेः लोपात् अदर्शनात् **अकर्म** अकरणमेव **स्यात्** आज्यादिष्ववघातादेः ॥ ९ ॥ दृष्टार्थसम्भवेऽपि अदृष्टार्थोयैवा-

ज्यादिष्ववघातादिकं स्यादित्याशङ्कायामाह—चेष्टया अवघातादिरूपया तु सह दृश्यमानं फलं वैतुष्यादिरूपं सम्भवेत् । स एव व्रीह्यादिः व्रीह्यादिपदार्थः । नाज्यादिः व्रीह्यादिपदेन अतिप्रसक्तलक्षणायां प्रमाणाभावेन प्रदेयप्रकृतिभूततण्डुलफलकवैतुष्यादिद्वारिकायाः प्रकृतापूर्वसाधनताया एव विवक्षणात् आज्यादौ च तस्या अभावात् । विप्रयोगे दृष्टफलासम्भवे तु 'सर्वौषधानवहन्ति' इत्यादौ अदृष्टफलद्वारकापूर्वसाधनतावानप्यगत्या उद्देश्यपरशब्दार्थः स्यात् ॥ ११ ॥

तदेवमङ्गत्वे निरूपिते श्रुत्यादीनि षट् प्रमाणानीत्युक्तम् । तत्र श्रुतिर्नाम अङ्गत्वघटकीभूतोद्देश्यत्वकृतिकारकत्वयोरन्यतरस्य प्राधान्येन वाचकश्शब्दः । स च द्वितीयातृतीयाविभक्तिरूपः । कृदन्तस्थले निष्ठातृजादिव्यावृत्त्यर्थं प्राधान्येनेति । तस्य कारकत्वविशिष्टद्रव्यवाचित्वेन प्राधान्येन कारकत्ववाचित्वाभावात् । अत एव 'प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति' 'वारणो यज्ञावचरः' इत्यादौ वाक्यीय एव विनियोगः न श्रौतः । अत्र द्वितीया उद्देश्यत्वपरा सती प्रोक्षणादेरङ्गत्वे हेतुः । वस्तुतस्तु—ईप्सितत्वाख्याया उद्देश्यतायास्साध्यतामात्रवाचिद्वितीयावाच्यत्वाभावात् तत्रापि न मुख्या श्रुतिः । अपितु भाक्त एव तत्र श्रुतिव्यवहारः । ईप्सितत्वांशे लक्षणाङ्गीकारात् । अतश्चोद्देश्यतापदमपि नैव लक्षणे देयम् । एवं षष्ठ्यादावपि कारकत्वशक्तत्वाभावाच्छ्रुतित्वव्यवहारो भाक्त एव । एवं यत्रापि विभक्त्या लक्षणयैव कारकान्तरप्रतिपादनं तत्रापि वाक्यीय एव विनियोगः न श्रौतः । एवं समानपदश्रुत्यादिष्वपि द्रष्टव्यम् ॥

तदेवं श्रुतेर्विनियोजकत्वे तद्भूताधिकरणेनैव सिद्धे अधुना

गौणमुख्यसाधारणश्रुतिविनियोगोपयोग्यङ्गाङ्गित्वयोरवच्छेदकविचारः क्रियते—

दर्शपूर्णमासयोः 'व्रीहीनवहन्ति' 'आज्यमुत्पुनाति' इत्यादयः आज्यौषधसान्नाय्यसम्बन्धिनस्संस्काराश्श्रुताः। तेषु किं सर्वसाधारणमवघातविधावुद्देश्यतावच्छेदकं उताज्यादिव्यावृत्तम्? एवमन्यत्रापीति विचारः। तत्र न तावच्छ्रुतं व्रीहित्वादिकमेवोद्देश्यतावच्छेदकं आनर्थक्यापत्तेः। अवघातप्रोक्षणादिव्यतिरेकेणापि व्रीहित्वावच्छिन्नादेर्जायमानत्वात् यवेष्वनापत्तेश्च। अतो नवमाद्याधिकरणन्यायेन व्रीहित्वाविवक्षया अपूर्वसाधनत्वलक्षणाया आवश्यकत्वात् तत्र फलप्रत्यासन्नत्वादेकत्वादारादुपकारकेषु क्लृप्तप्रयोजकशक्तिमत्वाच्च परमापूर्वस्य तत्साधनत्वमेव प्रदेयघटकत्वसम्बन्धेन लक्ष्यते। अस्ति चाग्नेयादेस्तत्प्रत्यापि साधनता। अत एव न वाक्यभेदन्यायोऽपि। अतश्चोद्देश्यतावच्छेदकस्य सर्वसाधारणत्वात् आज्यादिष्वप्यवघातादेस्सङ्करः। न च प्रतिनियतनिर्देशात् व्यवस्था। तथात्वे व्रीहित्वादिविवक्षाया आवश्यकत्वेन नीवारादिष्वनापत्तेरिति प्राप्ते—

यद्यपि विधिरविशेषप्रवृत्तस्स्यात् तथाऽपि दृष्टार्थत्वे नियमविधिलाघवाद्यनुरोधेन विशेषे व्यवस्थाप्यते किमुत यदा सोपि विशेषप्रवृत्त एव। व्रीह्यादिपदे प्रत्यासत्त्या आग्नेयाद्युत्पत्त्यपूर्वसाधनत्वस्यैव लक्ष्यत्वात्। तस्याप्यनिर्ज्ञातप्रकारत्वेन धर्मप्रयोजकत्वोपपत्तेः आनर्थक्याभावेन तदतिक्रमकारणाभावात्, परम्परया फलवत्त्वाच्च। अतो व्रीहिपदेन व्रीहिसाध्यानि यान्याग्नेयाग्नीषोमीयैन्द्राग्नोत्पत्त्यपूर्वाणि तन्निष्ठकार्यतानिरूपितयागादिनिष्ठकारणतासमानाधिकरणकार्यतानिरूपितप्रदेयप्रकृतिभूततण्डुल-

रूपव्यापारकसाधनतासामान्याश्रयत्वस्यैवोद्देश्यतावच्छेदकत्वेन विवक्षितत्वान्नाज्यादिष्वतिप्रसङ्गः । अत्र चापूर्वत्रयस्यैकानुगमकाभावेऽप्येकपदोपादानाद्वाक्यभेदः । तत्तद्व्यापारकसाधनता एव च विवक्ष्यन्ते न तु साधनतावच्छेदकादीन्यपि । तेन यागत्वपुरोडाशत्वव्रीहित्वाद्यभावेऽपि न क्षतिः । यथा च व्रीहियवयोः कारणताभेदेऽपि यवसाधारण्यं तथा कौस्तुभे विस्तरः । तत्रतत्र नवमादौ चोपपादयिष्यते ॥ ४ ॥

---

## (५)–द्रव्यं चोत्पत्तिसंयोगात्तदर्थमेव चोद्येत ॥११॥

'स्फ्यश्च कपालानि चाग्निहोत्रहवणी च शूर्पं च कृष्णाजिनं च शम्या चोलूखलं च मुसलं च दृषच्चोपला चैतानि वै दश यज्ञायुधानि सम्भार्याणीत्याहुः'* इत्यत्र श्रुतं **द्रव्यं** स्फ्यादिद्रव्यदशकं **च उत्पत्तिसंयोगात्** 'स्फ्येनोद्धन्ति । कपालेषु पुरोडाशं श्रपयति । अग्निहोत्रहवण्या हवींषि निर्वपति । शूर्पेण तण्डुलान्विविनक्ति । कृष्णाजिनमुलूखलस्याधस्तादवस्तृणाति । शम्यायां दृषदमादधाति । उलूखलमुसलाभ्यामवहन्ति । दृषदुपलाभ्यां पिनष्टि' इत्युत्पत्तिवाक्ये उद्धननादिक्रियासम्बन्धावगमात् **तदर्थमेव** श्रुतोद्धननादिक्रियार्थमेव **चोद्येत** विधीयेत । न तु सामान्यवाचिना यज्ञायुधशब्देन यज्ञसाधनवाचिना यज्ञसम्बन्धिशक्यक्रियासामान्यार्थम् । सामान्यशब्दस्यापि वाक्यान्तरश्रुतविशेषमात्रपरतयैवोपपत्तेः न तद्बलेनोद्धननादिवाक्ये उद्धन्त्यादिना उद्देश्यपरेण शक्यक्रियामात्रलक्षणा शङ्कनीया ॥ ११ ॥

दर्शपूर्णमासयोः "स्फ्यश्च कपालानि च"* इति दश द्रव्याण्यनुक्रम्य "एतानि वै दश यज्ञायुधानि"* इतिश्रुतेन वाक्येन

---

* तै. सं. १-६-७.

दशानामपि द्रव्याणां यज्ञसाधनत्वेन विधानात् उत्पत्तिशिष्टपुरोडाशाद्यवरोधेन च साक्षाद्यागसाधनत्वायोगादङ्गेष्ववतारात् प्रकृतापूर्वसाधनीभूतद्रव्यसाकाङ्क्षशक्यक्रियात्वावच्छिन्नोद्देशेन द्रव्याणि विधायन्ते "स्फ्येनोद्धन्ति" इत्यादिविशेषविनियोगास्त्ववयुत्यानुवादा इति प्राप्ते—

तेनतेन प्रत्यक्षविधिना तृतीयाश्रुतिसहकृतेन स्फ्यादीनां विशिष्यविनियोगात् यज्ञायुधवाक्यमेवैकमश्रुतविधिकं वैशब्दोपबद्धमनुवादकम्। बहूनामनुवादानां वैयर्थ्यात्। अस्य च "यज्ञायुधानि सम्भरति"* इत्येतद्विध्यर्थवादत्वेन सार्थकत्वात्। तस्मादुद्धननमात्रजन्यव्यापारकप्रकृतापूर्वसाधनत्वाश्रयत्वमेव उद्धननपदेन लक्षयित्वा तदुद्देशेनैव स्फ्यादिविधिः ॥ ९ ॥

---

## (६)—अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमस्स्यात्॥

'अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति'† इत्यादौ **द्रव्यगुणयोः** एकहायन्यादिरूपद्रव्यस्य आरुण्यादिरूपगुणस्य च **अर्थैकत्वे** अर्थस्य विशेष्यभूतस्य क्रियारूपस्य एकत्वे अर्थात् तदुभयस्य एकक्रियान्वयित्वे सम्भवति तयोः **नियमः** परिच्छेद्यपरिच्छेदकभावेन अन्वयनियमः **स्यात् ऐककर्म्यात्** एकं कर्म कार्यं क्रियारूपं यस्य तत्त्वात् एकक्रयसाधनत्वसम्भवेन एकवाक्यत्वस्य सम्भवात्। न त्वेकहायन्या क्रयं भावयेत् आरुण्येन प्रकृतक्रयसम्बद्धं वस्त्रादिकं कृत्स्नं द्रव्यं भावयेदिति द्रव्यगुणयोः पृथगन्वयः वाक्यभेदप्रसङ्गादिति ॥ १२ ॥

ज्योतिष्टोमे—'अरुणया एकहायन्या पिङ्गाक्ष्या सोमं क्रीणाति'† इति श्रुतम्। तत्रारुणशब्दोऽरुणगुणवचनः, अरुणत्वजातिवचनो

---

*तै. सं. १-६-७. †तै. सं. ६-१-६,१०.

वा। न तु विशिष्टव्यक्तिवचनः। तृतीयया च शक्यस्यैव करणत्वमुच्यते। न तु तदर्थे द्रव्यलक्षणा। टाबाद्यर्थोऽपि तत्रैव सामानाधिकरण्येनान्वीयते। न तु तदर्थमपि व्यक्तिलक्षणा। अव्युत्पत्त्यापत्तेः। यथा चैवं सति "गुणवचनानामाश्रयतो लिङ्गवचनानि भवन्ति" इत्याद्यनुशासनोपपत्तिस्तथा कौस्तुभे द्रष्टव्यम्। एकहायन्यादिपदानां तु बहुव्रीहित्वादवयवार्थविशिष्टान्यपदार्थरूपे द्रव्य एव शक्तिरिति प्राञ्चः। अन्यपदार्थे पदद्वयस्य लक्षणेति तु बहवः। न च द्रव्यस्यैकेनैव पदेन विधिसम्भवे इतरेण विधानानुपपत्तिः वैयर्थ्यं चेति वाच्यम्। उभयोर्युगपत्प्रवृत्तेर्विहितविधानाभावात् गुणान्तरपरत्वेन सार्थक्याच्च। शक्यते त्वत्रापि अरुणान्यायेन लक्षणाऽपि नेति वक्तुम्। समासानुशासनस्य मतुबाद्यनुशासनवदुपपत्तेः। द्रव्ये पार्ष्ठिकगुणसम्बन्धोपपादनं च प्रमाणान्तरप्रमितद्रव्यमादायोपपादनीयमिति न कश्चिद्विरोधः॥

तदिहारुण्यस्य योग्यत्वेऽपि कारकत्वेनाव्युत्पन्नस्य वाक्यीयद्रव्यान्वयायोगात् व्युत्पन्नत्वेऽपि वा अमूर्तत्वेनायोग्यस्य वाक्यीयक्रियान्वयायोगात् ततो विच्छिन्नस्य प्रकरणकल्पितश्रुतानुमितैकदेशनिष्पन्नेन वाक्येन अरुणया प्रकृतापूर्वसाधनीभूतद्रव्यपरिच्छेदं भावयेदित्याकारकेण प्राकरणिकसर्वद्रव्याङ्गत्वमिति प्राप्ते—

न योग्यताज्ञानं शाब्दबोधहेतुः अपितु अयोग्यतानिश्चयस्य प्रतिबन्धकतामात्रम्। अतश्च प्रतिबन्धकाभावसत्त्वे आरुण्यस्यापि क्रियान्वयबोधोपपत्तेः पश्चाच्च योग्यतागवेषणायामारुण्यस्य पार्ष्ठिकद्रव्यसम्बन्धबोधोपपत्तेर्न ततो विच्छेदाशङ्का। अत एव प्र-

थमतस्सोमक्रयारुण्यादिसकलकारकाविशिष्टभावनाविधानोत्तरं क्रयस्य सोमसम्बन्धवेळायामारुण्यादित्रिकस्य मत्त्वर्थलक्षणया क्रयसम्बन्धावगतौ पश्चाद्विशेषणविधित्रयकल्पनया तेषां क्रयाङ्गत्वावगमे जाते पश्चात्परिच्छेदकीभूतद्रव्याद्यपेक्षायां पार्ष्ठिकोऽरुणैकहायन्योः परस्परं विशेषणविशेष्यभावमात्रेण सम्बन्धो द्रव्यविशेषसम्बन्धश्चेति द्रष्टव्यम् । अतश्च युक्तः क्रयसाधनीभूतैकहायन्यामेव निवेश आरुण्यस्य; न तु वासःप्रभृतिषु क्रयद्रव्यान्तरेषु । न च यवेष्विव सोमप्राप्तिसाधनक्रयद्रव्यत्वाविशेषात्प्राप्त्याशङ्का । तेषां क्रयान्तरद्रव्यत्वात् । भिन्ना हि गुणादत्र क्रयाः । न च विक्रेत्रानतिवशादुत्पत्तिशिष्टद्रव्यावरोधेऽपि द्रव्यान्तरनिवेशसम्भवः । एकद्रव्यानतस्यैव विक्रेतुस्सम्पादनायत्वात् । अन्यथा दक्षिणानामपि प्रसङ्गबाधाद्यनापत्तेः । न च 'दशभिः क्रीणाति'* इति वचनमेव निवेशतात्पर्यग्राहकम् तस्य क्रयसमुच्चयपरत्वेनाप्युपपत्तौ गुणन्यायसिद्धभेदापवादकत्वायोगात् । न च क्रयभेदेऽपि एकसोमप्राप्त्यर्थत्वाविशेषात् क्रयान्तरद्रव्येऽपि आरुण्यस्य निवेशाशङ्का । आरुण्यविशिष्टविजातीयक्रयविध्यन्यथानुपपत्तिकल्पितस्य विशेषणविधेः पार्ष्ठिकान्वयस्य वाऽनतिप्रसक्तस्यैव कल्पनीयतया विजातीयक्रयजन्यानतिविशेषस्य विजातीयक्रयत्वस्यैव वा विवक्षितत्वेनातिप्रसङ्गशङ्कानुपपत्तेः । यथा चैवं सति त्रिवत्से सर्वक्रयद्रव्यस्थानापन्ने निवेशस्तथा कौस्तुभे द्रष्टव्यम् ॥ ६ ॥

---

## (७)एकत्वयुक्तमेकस्य श्रुतिसंयोगात् ॥ १३ ॥
## सर्वेषां वा लक्षणत्वादविशिष्टं हि लक्षणम् ॥

---

*तै. सं. १-८-१८.

**चोदिते तु परार्थत्वाद्यथाश्रुति प्रतीयेत ॥१५**

"दशापवित्रेण ग्रहं सम्मार्ष्टि" इत्यादौ **एकत्वयुक्तं** एकत्वविशिष्टं ग्रहद्रव्यं सम्मार्गविध्युद्देश्यम् स्यात्। कुतः **एकस्य** एकत्वसङ्ख्यायुक्तस्य **श्रुतिसंयोगात्** ग्रहमित्येकवचनश्रुत्या प्रतिपादनात् ॥ १३ ॥ समाधत्ते—**सर्वेषां वा** ग्रहाणां सर्वेषामेव सम्मार्गविध्युद्देश्यता। ग्रहत्वस्य **लक्षणत्वात्** उद्देश्यानुगमकविशेषणत्वात्। **लक्षणं** उद्देश्यानुगमकविशेषणरूपं ग्रहत्वं सर्वेष्वेव ग्रहेषु **अविशिष्टं हि**। एकत्वस्याप्युद्देश्य विशेषणत्वाङ्गीकारे वाक्यभेदप्रसंगः। अतः प्रतिप्रधानगुणावृत्तिन्यायेन प्रत्येकमुद्देश्येषु अर्थसिद्धस्यैकत्वस्यानुवादकमेकवचनम् ॥ १४ ॥ **चोदिते** "पशुना यजेत" इत्यादिस्थले विधेयतया उपादेये **तु** पश्वादौ **यथाश्रुतिं** एकवचनश्रुत्यनुसारात् एकत्वं विधेयविशेषणतया **प्रतीयेत** पशोः **परार्थत्वात्** यागाङ्गत्वात् प्रत्यङ्गं प्रधानावृत्त्यभावेन उपादेयसङ्ख्याकाङ्क्षानुसारेण एकत्वविवक्षा आवश्यक्येवेति वक्ष्यते पश्वेकत्वाधिकरणे। उद्देश्यगता सङ्ख्या तु न विवक्षणीयेत्येतदधिकरणे प्रतिपाद्यत इत्याशयः ॥ १५

ज्योतिष्टोमादिषु 'ग्रहं सम्मार्ष्टि' इति श्रुतम्। तत्र सम्मार्गादि प्रति ग्रहत्ववदेकत्वस्यापि उद्देश्यतावच्छेदकता, उत तस्यैव सा एकत्वं तु कथमपि विध्यन्वयासम्भवादविवक्षितमिति चिन्तायां पश्वेकत्ववत् ग्रहैकत्वस्याप्यविवक्षाकारणाभावादुद्देश्यतावच्छेदकता। अतश्चैकस्यैव ग्रहस्य सम्मार्ग इति प्राप्ते—

यत्र हि समासादौ परस्परान्वयो व्युत्पन्नः यथा—'अश्वाभिधानी' 'यत्किञ्चित्सोमलिप्तम्' इत्यादौ तत्र भवत्येव विशिष्टोद्देशः। यत्र तु स न व्युत्पन्नस्तत्र परस्परान्वयेन विशिष्टोद्देशे अव्युत्पन्नान्वयनिबन्धनवाक्यभेदापत्तेर्न विशिष्टोद्देशः। यथा

---

* तै. सं. ६-१-२.

'यस्योभयं हविरार्तिमार्छेत्'* 'ग्रहम्' इति च द्वयोस्सुबन्तयोर्भावनान्वयस्यैव व्युत्पन्नत्वेन परस्परान्वयस्याव्युत्पन्नत्वात्। अन्यथा 'पञ्चदशान्याज्यानि' इत्यत्रापि विशिष्टविधानापत्तिः। एकवचनाद्युपात्तसङ्ख्यादेस्तु समानाभिधानश्रुत्या करणत्वकर्मत्वादिरूपे प्रत्ययार्थ एवान्वितस्य पदश्रुत्या प्रातिपदिकार्थान्वयो नैव व्युत्पन्नः। एवं 'सर्वेभ्यो दर्शपूर्णमासौ' इत्यादौ एकपदात् यत्रानेकार्थप्रतीत्युत्तरं लक्षणया प्रातिपदिकादेव साहित्यप्रतीतिस्तत्रापि साहित्यस्य प्रत्ययार्थ एवान्वयः न प्रातिपदिकार्थ इति कौस्तुभे स्पष्टम्। अतश्च नैतादृशस्थले विशिष्टोद्देशसम्भवः।

अथ विशिष्टोद्देशासम्भवेऽपि उभयोरपि प्रातिपदिकवचनार्थयोः प्रत्ययार्थे कर्मत्वादावन्वयेन तद्द्वारा भावनान्वयोपपत्तेस्सम्मार्गस्य पार्ष्ठिकोद्देश्यद्वयसम्बन्धे बाधकाभावः। न चोद्देश्यानेकत्वे वाक्यभेदः। भावनायामनेककारकसम्बन्धवदनेकोद्देश्यसम्बन्धे बाधकाभावात्। न च तस्यामेकोद्देश्यतावच्छेदककत्वनियमः। 'सर्वेभ्यो दर्शपूर्णमासौ' इत्यादौ पुत्रत्वपशुत्वादेरनेकस्यापि तस्य दर्शनात्। विधेस्तु अनेकोद्देश्यकत्वे नैव काचित्क्षतिः। न चैकत्वावच्छिन्नस्य विनियोगाभावादसंस्कार्यता। पशुत्वेन विनियुक्तस्यापि लोहितादेस्संस्कार्यत्ववत् बहुत्वावच्छेदेन विनियुक्तस्यापि ग्रहस्यैकत्वावच्छेदेन संस्कार्यत्वोपपत्तेः। न चैवमपि द्वयोरुद्देश्ययोरेकप्रधानक्रियया वशीकाराभावात् कथं परस्परनियम इति वाच्यम्। वैकृताङ्गवद्गुणानुरोधेनापि पदश्रुत्यैव वा प्रधानयोरप्याकाङ्क्षां प्रकल्प्य तदुपपत्तेः। दृश्यते च यत्र भिन्नवाक्यस्थलेऽपि 'आग्नेयं चतुर्धा करोति पुरोडाशं चतुर्धा करोति' इत्यादौ गुणानुरोधेन प्रधानयोरभेदान्वयस्त-

*तै. ३-७-१.

त्रैकवाक्यस्थले सुतरां शाब्दबोधे मुख्यविशेष्यभूतया क्रियया वशीकारः। एकत्वाविवक्षापेक्षया च वशीकारकल्पनायां न कोपि दोषः। अत एकत्वादेरपि स्वातन्त्र्येणोद्देश्यतावच्छेदकत्वोपपत्तिरिति चेत्—भावनायाः करोतिपर्यायत्वेनैककर्मकत्वावसायादुद्देश्यानेकत्वे तद्भङ्गनिबन्धनवाक्यभेदापत्तिः। एककर्मकत्वं च एकबोधविषयकर्मत्वपर्याप्त्यधिकरणतावच्छेदकधर्मवत्त्वम्। अत्र च 'सर्वेभ्यो दर्शपूर्णमासौ' इत्यादौ सत्यपि पुत्रत्वपशुत्वादीनां कर्मत्वपर्याप्त्यधिकरणतावच्छेदकधर्माणां भेदे एकेनैव सर्वपदेन युगपद्बोधान्नैककर्मत्वहानिरिति आद्यं विषयेत्यन्तम्। पर्याप्तिपदकृत्यं तु कौस्तुभे द्रष्टव्यम्। अतश्च फलद्वये संस्कार्यद्वये फलसंस्कार्यद्वये वा तावद्वाक्यभेदापत्तिस्स्पष्टा। निमित्तद्वयस्थलेऽपि यावज्जीवाधिकरणन्यायेन निमित्तस्य फलद्वयाक्षेपकत्वाद्वाक्यभेदापत्तिर्द्रष्टव्या। यथा च निमित्तद्वयेन नैकस्यैव फलस्याक्षेपस्तथा कौस्तुभे स्पष्टम्। अत एव निमित्तफलस्थले निमित्तसंस्कार्यस्थले वा एककर्मकत्वभङ्गाभावान्न वाक्यभेदः। न वा कालदेशाद्युद्देश्यानेकत्वे सः। यथाऽत्र फलादिसाहित्यस्य नैकबोधविषयता तथा कौस्तुभे स्पष्टम्। अतश्च तत्साहित्यविवक्षायां वाक्यभेदो दुष्परिहर एवेत्यन्यत्र विस्तरः॥

ननु तथाऽपि नैकत्वादीनामविवक्षा सम्मार्गभावनायां गुणत्वेन विवक्षोपपत्तेः। न चैवमेकत्वांशे द्वितीयया करणत्वलक्षणात् ग्रहांशे च प्राधान्याभिधानाद्वैरूप्यापत्तिः युगपत् वृत्तिद्वयविरोधापत्तिश्चेति वाच्यम्। ईप्सितानीप्सितसाधारणकर्मत्वमात्रे द्वितीयायाश्शक्तत्वेन प्रमाणान्तराद्विशेषाव-

गमेऽपि ऐकरूप्येण उभयोरप्यन्वयोपपत्तेः । न चैवमपि सम्मार्गाङ्गभूतस्यैकत्वस्य तदनङ्गभूतग्रहद्वारकत्वासम्भवः । अङ्गत्वाद्यभावेऽपि सम्बन्धितामात्रेण 'अगन्म'* इति मन्त्रे स्वर्गस्येव ग्रहस्यापि द्वारत्वोपपत्तेः । अतश्च विवक्षितमेकत्वमिति चेत्—गुणभूतैकवचनाद्यनुरोधेन प्रत्यये करणत्वलक्षणाङ्गीकारस्य युगपद्वृत्तिद्वयविरोधवैरूप्यादेश्चान्याय्यत्वात् । तद्वरमनुवादके तस्मिन्नेव पाशाधिकरणन्यायेन लक्षणामात्रम् । न चेप्सितानीप्सितसाधारणकर्मत्वमात्राभिधानान्नोक्तदोषप्रसङ्गः । तथात्वे निरुक्तैककर्मकत्वभङ्गप्रसङ्गेन वाक्यभेदापत्तेः । अतश्च गुणत्वसिद्ध्यर्थं लक्षणाश्रयणे पूर्वोक्तदोषापत्तेरेकवचनं बहुत्वलक्षणार्थं सत्साधुत्वार्थमनुवादोऽविवक्षितः । यथा चैवं सति 'अष्टवर्षं ब्राह्मणमुपनयीत' इत्यादौ अष्टवर्षत्वादेर्विवक्षा तथा कौस्तुभ एवोपपादितम् ॥ ७ ॥

——o——

## (८)–संस्काराद्वा गुणानामव्यवस्था स्यात् ॥१६॥ व्यवस्था वाऽर्थस्य श्रुतिसंयोगात्तस्य शब्दप्रमाणत्वात् ॥ १७ ॥

पूर्वोदाहृत एव 'ग्रहं सम्मार्ष्टि' इत्यत्र वाक्ये विधीयमानानां **गुणानां** सम्मार्गादिरूपाणां **अव्यवस्था वा** ग्रहेष्वेवायं न चमसेषु इत्यादिरूपनियमविरह एव **स्यात्**. कुतः? **संस्कारात्** सम्मार्गादीनां संस्काररूपत्वात् संस्कारोद्देश्यतावच्छेदकतया स्थापितस्य प्रकृतापूर्वसाधनत्वस्य ग्रहचमसादिसाधारणत्वात् ॥ १६ ॥ सिद्धान्तमाह—

* तै. सं. १-६-६.

**व्यवस्था वा** सम्मार्गादिसंस्काराणां व्यवस्थैव नाव्यवस्था । कुतः ? अर्थस्य ग्रहादिरूपस्य **श्रुतिसंयोगात्** शब्दशक्तिबोध्यत्वात् । **तस्यां** ग्रहापूर्वसाधनत्वस्यैव उद्देश्यतावच्छेदकत्वेन **शब्दप्रमाणत्वात्** ग्रहपद-घटितशब्दप्रमाणप्रमितत्वात् । एकत्वादिविवक्षायामिव ग्रहत्वविवक्षायां-वाक्यभेदप्रसङ्गरूपबाधकविरहादिति ॥ १७ ॥

**एकत्ववत् ग्रहत्वस्याप्यविवक्षा लिङ्गादेव सम्मार्गस्य सोमावसेकानिर्हरणप्रयोजनत्वावगमेन सोमपात्रमात्रस्य संस्कार्यत्वावगतेः--उभयोरपि ग्रहचमसयोरेकज्योतिष्टोमापूर्वसाधनत्वेन यवेष्विव चमसेष्वपि सम्मार्गापत्तेश्चेति प्राप्ते—**

**ग्रहत्वविवक्षायां वाक्यभेदाद्यभावात् सत्यपि ज्योतिष्टोमैक्ये तत्तदभ्यासापूर्वाणां भेदात् 'पयसा मैत्रावरुणं श्रीणाति'* इतिवत् ग्रहजन्यापूर्वसाधनत्वस्यैव लक्षणोपपत्तेर्न चमसेषु सम्मार्गः ॥ ८ ॥**

---

## (९)—आनर्थक्यात्तदङ्गेषु ॥ १८ ॥

'सप्तदशारत्निर्वाजपेयस्य यूपो भवति' इत्यत्र वाजपेयसम्बन्धः षष्ठ्यन्तप्रतिपाद्यः यूपस्य वाजपेये **आनर्थक्यात्** साक्षाद्वाजपेयापूर्व-रूपप्रयोजनकत्वासम्भवात् **तदङ्गेषु** वाजपेयाङ्गेषु पशुयागेषु अवतरन् वाजपेयाङ्गपशुयागसम्बन्धरूपः परंपरासम्बन्धात्मकः पर्यवस्यति । अतश्च सप्तदशारत्निता वाजपेयाङ्गपशुयागाङ्गयूप एव निविशते । न तु वाज-पेयाङ्गे ऊर्ध्वपात्रे । यूपपदस्य ऊर्ध्वपात्रे लक्षणाप्रसङ्गादिति भावः॥ १८

**'सप्तदशारत्निर्वाजपेयस्य यूपः' इत्यत्राव्यवहितत्वात् प्रधानत्वात् प्रकरणानुग्रहाच्च सप्तदशारत्नित्वं वाजपेयोद्देशेन ष-**

---

*तै. सं, ६-४-८.

छीश्रुत्या विधीयते न यूपोद्देशेन अतिप्रसङ्गापत्तेः । वाजपेयेन विशेषणे विशिष्टोद्देशाच्च । अतस्सप्तदशारत्नित्वं वाजपेयोद्देशेन विधीयमानं तदीयोर्ध्वपात्रद्वारेण निविशते यूपपदं सादृश्याद्गौणमिति प्राप्ते—

यूपपदस्य गौणत्वे प्रमाणाभावात् यूपपदेन स्वकार्यं लक्षयित्वा तदुद्देशेन सप्तदशारत्निर्विधीयते । यद्यपि च द्रव्यमरत्निपरिमाणं चातिदेशतस्सम्भवत्प्राप्तिकं तथाऽपि तदनुवादेन सङ्ख्याविधाने एकप्रसरताभङ्गापत्तेः ततः पूर्वप्रवृत्त्यङ्गीकारेण विशिष्टद्रव्यमेव सङ्ख्याविधिफलकं 'लोहितोष्णीषा' इत्यादिवद्विधीयते । यूपकार्यस्वरूपे चानर्थक्यात् प्रकरणाद्वाजपेयापूर्वसाधनत्वलक्षणया वाजपेयापूर्वसम्बन्धियूपलाभात् 'वाजपेयस्य' इत्यनुवादः । षष्ठी च परम्परासम्बन्धेऽप्युपपन्ना नप्तरि देवदत्तस्यायमितिवत् । व्यवहितत्वादि च गौणत्वापेक्षया न दोषः ॥ ९ ॥

—o—

## (१०)—कर्तृगुणे तु कर्मासमवायाद्वाक्यभेदः ॥१९॥ साकाङ्क्षं त्वेकवाक्यं स्यादसमाप्तं हि पूर्वेण ॥२०

'अभिक्रामं जुहोति'* इत्यादौ **कर्तृगुणे** अभिक्रमणरूपे **तु** **कर्मासमवायात्** कर्मणि प्रयाजरूपे सन्निहितेऽपि साक्षान्निवेशासम्भवात् कर्तृरूपस्य द्वारभूतद्रव्यस्येहानुपादानाच्च तद्द्वाराऽन्वयानुपपत्तेः **वाक्यभेदः** तद्वाक्योपस्थितप्रयाजेभ्यो विच्छेदः । ततश्चाभिक्रमणस्य प्राकरणिकदर्शपूर्णमाससम्बन्धिसर्वहोमेष्वन्वयः ॥ १९ ॥ सिद्धान्तमाह— अभिक्रमणं **साकाङ्क्षं** अभिव्यक्तप्रयाजभावनयेतिकर्तव्यताकाङ्क्षं **ए-**

---

*तै. सं. २-६-१.

**कवाक्यं** तु प्रयाजभावनान्वयितया प्रयाजैकवाक्यमेव **स्यात्. हि** यतः **पूर्वेण** पूर्वश्रुतेन समानयनरूपेणाङ्गेन प्रयाजवाक्यं **असमाप्तं** न निवृत्तेतिकर्तव्यताकाङ्क्षम् । महाप्रकरणेन प्रतिबद्धा हि अङ्गभावनाया इतिकर्तव्यताकांक्षा 'समानयते जुह्वामौपभृतम्' इति वाचनिकप्रयाजानुवादपुरस्सरविधीयमानाङ्गेन समभिव्यक्ता सती समनन्तरश्रुतेऽप्यस्मिन् 'अभिक्रामं जुहोति'* इत्यभिक्रमणवाक्येऽनुवर्तत एव । एतदनन्तरश्रुते 'प्रयाजशेषेण हवींष्यभिघारयति'* इतिवाक्ये प्रयाजोद्देशेनाभिघारणविध्यनुरोधेन तदनुवृत्तेरवश्यस्वीकार्यत्वात् । अयमेव च सन्दंशन्यायः यत् वाचनिकप्रयाजादिरूपाङ्गोद्देश्यकाङ्गविधिद्वयमध्यपातित्वम् । सन्दंशस्थले आद्येनैव विधिना अङ्गभावनेतिकर्तव्यताकांक्षायाः महाप्रकरणप्रतिबद्धाया अन्तिमेनाङ्गविधिना च विनाश इत्येव लाघवात्स्वीक्रियते इत्यवधेयम् ॥ १९ ॥

**दर्शपूर्णमासयोः प्रयाजसमीपे श्रुतं 'अभिक्रामं जुहोति'* इति । तत्राभिक्रमणस्यामूर्तत्वाज्जुहोत्युपात्ते प्रयाजहोमे अन्वयानुपपत्तेरारुण्यवच्चेह कर्तृरूपस्य द्रव्यस्यानुपात्तत्वात् तद्द्वाराऽप्यन्वयानुपपत्तेः ततो विच्छिन्नस्य प्राकरणिकसर्वहोमाङ्गत्वं तदीयकर्तुराहवनीयप्रत्यासत्तिरूपदृष्टकार्यद्वारेति प्राप्ते—**

**अनुपात्तस्याप्याख्यातगम्यस्य सद्भावात् तद्द्वारैव जुहोत्यन्वयोपपत्तेः प्रयाजहोमाङ्गत्वमेवेति भाष्यकारेण सिद्धान्तितम् ॥**

**तत् तु णमुलन्तस्यास्य पूर्वकालतादिसम्बन्धेन जुहोत्यनन्वये नैराकाङ्क्ष्याभावाज्जुहोतेश्च प्रयाजहोममात्रवाचित्वे प्रमाणाभावात् अरुणाधिकरणेन गतप्रायत्वाच्च वार्तिककारेणान्यथा व्याख्यातम् ॥**

---

*तै. सं. २-६-१.

सत्यपि वाक्यीयहोमसम्बन्धे सङ्कोचे प्रमाणाभावात् 'वेद्यां हवींषि' इतिवत् प्राकरणिकसर्वहोमाङ्गत्वम्। वाचनिकाङ्गसन्दंशरूपावान्तराधिकारस्य वाक्यसङ्कोचकत्वानुपपत्तेः। यदि हि तादृशसन्दंशमध्ये अभिक्रामति इत्येव श्रूयेत ततोऽवान्तरप्रकरणेन स्यादपि प्रयाजाङ्गत्वम्। वस्तुतस्तु—नाङ्गेषु इतिकर्तव्यताकाङ्क्षालक्षणं प्रकरणं फलाभावात्। अन्यथा प्रयाजाभिक्रमणादीनामप्यनूयाजाद्यङ्गत्वापत्तेः। वाचनिकाङ्गसम्बन्धसिद्ध्यर्थं च कल्पिताया आकाङ्क्षायास्तन्मात्रग्राहकत्वेनाभिक्रमणग्राहकत्वानुपपत्तेरिति प्राप्ते—

भावनास्वाभाव्येन अङ्गभावनास्वपि क्रतूपकारभाव्यकासु इतिकर्तव्यताकाङ्क्षोपपत्तेरङ्गानामप्यस्त्येव सा। सा परं प्रधानगतबलवत्त्वेन प्रतिबध्यते सन्निध्याम्नानविषये। अतो न परस्पराङ्गत्वप्रसङ्गः। तदा तन्निवृत्तिरतिदेशेन आक्षेपलभ्यस्वसम्पादनेन साधारणैर्वा आचमनादिभिः। यत्र तु वाचनिकाङ्गसन्दंशस्तत्राद्येनाकाङ्क्षोज्जीवनमन्तिमेन च तन्नाशः। न तु मण्यादाविव वाचनिकाङ्गानां प्रत्येकमुत्तेजकता। तावदभावकूटप्रवेशे गौरवात्। तद्वदिह व्यभिचाराभावाच्च। अतो वाचनिकसन्दंशे श्रुतानामवान्तरप्रकरणेन बलवताऽङ्गाङ्गत्वमेव। प्रकृते तु होमानुवादेन विहितेऽभिक्रमणे होमस्वरूपे आनर्थक्यप्रसक्तौ अपूर्वसाधनत्वलक्षणातात्पर्यग्राहकतया वाचनिकाङ्गसन्दंशरूपावान्तराधिकार एव तत्त्वेनाश्रीयते। न तु प्रधानाधिकारः अङ्गप्रधानाधिकारो वा 'वेद्यां' इतिवत्। अस्ति चात्र 'समानयते जुह्वामौपभृतम्' इत्याद्युपक्रम्य मध्येऽभिक्रमणं विधाय अन्ते 'प्रयाजशेषेण हवींष्यभिघारयति' इति श्रवणात्सः। अतोऽभिक्रमणं प्रयाजहो-

माङ्गमेव । न च प्रयाजेषु होमाभावः। प्रक्षेपाङ्गकस्यैव त्यागस्य वृद्धव्यवहारेण यजिपदार्थत्वावसायात् आक्षेपेण श्रूयमाणयजिमात्रे होमप्राप्त्युपपत्तेः ॥ १० ॥

—o—

## (११)–सन्दिग्धे तु व्यवायाद्वाक्यभेदस्स्यात्॥२१॥

**सन्दिग्धे** अवान्तरप्रकरणसन्देहविषये **तु** 'उपव्ययते देवलक्ष्ममेव तत्कुरुते'* इत्यादिवाक्ये **वाक्यभेदः** सामिधेनीवाक्याद्विच्छेद एव स्यात् । कुतः? **व्यवायात्** सामिधेन्यवान्तरप्रकरणस्य बहुलैः निविन्मन्त्रैर्विच्छेदात् । तैत्तिरीयसंहितायां हि द्वितीयकाण्डे पञ्चमे प्रपाठके सप्तमाष्टमानुवाकयोस्सामिधेनीब्राह्मणमाम्नातम् । नवमेऽनुवाके निवित्संज्ञिकानां 'अग्ने महां असि'† इत्यादिमन्त्राणां ब्राह्मणम् । दशमे काम्यास्सामिधेनीकल्पाः 'एकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्य'‡ इत्यादयः । एकादशे 'निवीतं मनुष्याणां'* इत्यादिना उपवीतविधिः । तदनन्तरं 'तिष्ठन्नन्वाह'* इत्यादिना सामिधेनीधर्माः कतिपये विहिताः। इति स्थितिः॥

**दर्शपूर्णमासयोः 'पञ्चदश सामिधेनीरनुब्रूयात्'‡ इत्यनेन सामिधेनीर्विधाय तासां वाचनिका गुणा विहिताः । ततो निविदोनाम मन्त्राः 'देवेद्धो मन्विद्धः'† इत्यादयः। ततः 'एकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्य'‡ इत्यादयः काम्यास्सामिधेनीकल्पाः। तत उपवीतं 'उपव्ययते देवलक्ष्ममेव तत्कुरुते'* इति। ततः पुनरपि सामिधेनीगुणाः 'अन्तराऽनूच्यं सदेवत्वायं'* इत्यादयः । तत्रोपवीतं सामिधेन्यङ्गं तदवान्तरप्रकरणात् । न च तदवान्तरप्र-**

---

*तै. सं. २-५-११. †तै. ब्रा. ३-६-३. ‡तै. सं. २-५-१०.

करणस्य काम्यकल्पैर्निविन्मन्त्रैर्वा विच्छेदः । गोदोहनादीनां दर्शपूर्णमासप्रकरणाविच्छेदकत्ववत् काम्यानामपि तद्विच्छेदकत्वानुपपत्तेः । पूषानुमन्त्रणमन्त्रवन्निविन्मन्त्रस्यापि तदनुपपत्तेश्च । वस्तुतस्तु—लिङ्गादग्निसमिन्धत्वरूपसामिधेनीफलप्रकाशकानामप्यवान्तरप्रकरणात् सामिधेन्यङ्गत्वोपपत्तेर्न विच्छेदकत्वशङ्का । दृष्यत एव हि 'अ…न्म'* इति म…न्त्रस्य यागजन्यफलप्रकाशकत्वेन यागाङ्गत्वमिति प्राप्ते—

निविद्भिर्व्यवधानान्नोपवीतस्य सामिधेन्यङ्गता । न च पूषानुमन्त्रणमन्त्रन्यायः । यत्र ह्युत्तरकालं बहूनि वाचनिकाङ्गानि तत्रैकस्य पूषानुमन्त्रणमन्त्रादेः परप्रकरणस्थत्वकल्पना । यत्र तु विच्छेदकानि बहूनि उत्तरकालं च वाचनिकाङ्गं स्वल्पं तत्र वाचनिकाङ्गस्यैवानारभ्याधीतन्यायेनाङ्गत्वोपपत्तेर्न प्रकरणानुवृत्तिकल्पना । अन्यथा विश्वजिदादेरपि दर्शाङ्गत्वापत्तेः । प्रकृते च निविन्मन्त्राणां बहुत्वात् वाचनिकोत्तराङ्गानां स्वल्पत्वेन न प्रकरणानुवृत्तिकल्पना । वस्तुतस्तु—न 'अन्तराऽनूच्यम्'† इत्यादीनां सामिधेनीमात्रोद्देशेन विधानं प्रमाणाभावात् । आद्ये तु अनुवचनसामान्योद्देशेन । अतश्च सामिधेनीनां विशिष्योपस्थित्यभावात् न प्रकरणानुवृत्तिः । यत्तु अन्ते 'देवा वै सामिधेनीरनूच्य'† इत्यादि सङ्कीर्तनं तदाधारार्थवादत्वादसाधकम् । अत एवान्ते वाचनिकाङ्गाभावादेव न निविदां सामिधेन्यङ्गत्वशङ्का । सन्निधिमात्रेण तदङ्गत्वशङ्का तु परस्पराङ्गत्वापत्तेः प्रकरणेन बाधाच्चायुक्ता । न चैवमाश्रयाभावात्काम्येषु गुणफलसम्बन्धानुपपत्तिः । तत्रानुवचनान्तरस्यैव फलोद्देशेन …हित-

* तै. सं. १-६-६. † तै. सं. २-६-११.

त्वात् तस्य च सङ्ख्यायुक्तानुवचनत्वसामान्यात् पञ्चदशसङ्ख्याकनित्यानुवचनप्रकृतिकत्वावगतेस्तदीयधर्माणां त्रिरभ्यासादीनां तदीयऋचां प्राप्तेर्नोधर्मैकत्वम् । न च ऋचामनुवचनं प्रति प्राधान्यात्कथमतिदेशः । प्रकृते त्रिरभ्यासयुक्तपाठादेव तावत्सङ्ख्याकऋचामर्थाच्चानुवचनस्य प्राप्त्युपपत्तेः । 'पञ्चदश सामिधेनीरनुब्रूयात्'* इति वचनवैयर्थ्यापत्तेरगत्या सक्तुन्यायेन विनियोगभङ्गं प्रकल्प्य मन्त्रविशिष्टानुवचनस्यैव विधेयत्वेन तदङ्गभूतानामृचां प्राप्त्युपपत्तेः । गुणत्वमपि च ऋचां नानुवचनफलप्रकाशकतयैव । अपि त्वनुवचनजनकतया लाघवात् । अतश्च न द्वारलोपाद्बाध ऊहो वा । अनुशब्देन च दर्शपूर्णमासाङ्गभूतपूर्वपदार्थानन्तर्यस्योक्तत्वात्तस्य च परप्रयुक्तत्वेन बहिःक्रतुप्रयोगेऽनुष्ठातुमशक्तेः क्रतुमध्यप्रयोगसिद्धिः । वैकृतानुवचनेनैव च प्रसङ्गात्प्राकृतानुवचनकार्यसिद्धेर्न तस्य पृथगनुष्ठानम् । अतस्तेष्वपि न सामिधेनीप्रकरणानुवृत्तिः । न च तर्हि तदङ्गत्वमेवोपवीतस्य किं न स्यात् । तेषां विकृतित्वेन प्राकृताङ्गनिराकांक्षाणां प्रकरणाभावाद्वाचनिकाङ्गसन्दंशाभावाच्च । अतो महाप्रकरणाद्दर्शपूर्णमासाङ्गमुपवीतं तत्कर्तृसंस्कारकतया तत्कर्तृभिस्सर्वप्रयोगारम्भे कार्यमिति सिद्धम् ॥ ११ ॥

---o---

## (१२)–गुणानां च परार्थत्वादसम्बन्धस्समत्वात्स्यात् ॥ २२ ॥

आधानप्रकरणस्थे "वारणो वै यज्ञावचरस्स्यान्न त्वेतेन जुहुयाद्वैकङ्कतो यज्ञावचरस्स्याज्जुहुयादेवैतेन" इत्यादिवाक्ये **गुणानां** वार-

---

* तै. सं. २-५-१०.

णवैकङ्कतजात्यादिरूपाणां आधाने अयज्ञरूपेऽनिविशमानानां **परार्थत्वात्** आधानभिन्नयज्ञार्थत्वात् स्ववाक्यश्रुतयज्ञपदार्थेनान्वितानां आधानाङ्गेष्वप्यवतारासम्भवात् आधानाङ्गभूतपवमानेष्टीनां च स्वतस्सन्निधानाभावेन यज्ञान्तरैः **समत्वात् च** आधाने तदङ्गेषु अयज्ञरूपेषु यज्ञरूपे पवमानेष्टिमात्रे वा **असम्बन्धः** अनन्वयः **स्यात्** स्ववाक्योपात्तयज्ञपदोपस्थितेषु सर्वेष्वेव यज्ञेषु सम्बन्धस्स्यात् ॥ २२ ॥

**आधाने पवमानेष्टितः प्रदेशान्तरे 'वारणो यज्ञावचरो वैकङ्कतो यज्ञावचरः' इति श्रुतम् । तत्र यज्ञसाधनत्वेन श्रुतानां वारणादीनां साक्षादयज्ञरूपाधाने निवेशासम्भवात् आनर्थक्यतदङ्गन्यायेन पवमानेष्टिरूपे यज्ञ एव निवेश इति प्राप्ते—**

**भाष्यकारेण तावदेवं सिद्धान्तितम् । आधानप्रकरणे पठितेन 'यदाहवनीये जुहोति'* इति वाक्येन पवमानहविषामग्न्यङ्गत्वावगतेराधानाङ्गत्वाभावेन आनर्थक्यतदङ्गन्यायासम्भवात् स्वरूपेण च पवमानेष्टीनामसन्निहितत्वाद्वारणवैकङ्कतादीनां सर्वप्रकृतियज्ञाङ्गत्वं सर्वयज्ञाङ्गत्वं वेति ॥**

**वार्तिककारस्तु न तावदनारभ्यवाक्येन पवमानहविषामग्न्यङ्गत्वम् । तेन सर्वहोमानुवादेनाहवनीयविधानात् पवमानेष्टीनामेव विशिष्योपस्थित्यभावे सप्तम्या प्राधान्यलक्षणायां प्रमाणाभावात् । नापि पवमानेष्टिप्रकरणे वाक्यान्तरकल्पना । तदभावेऽपि वारणादीनां सर्वयज्ञार्थत्वोपपत्तेः । अस्तु वा आधानप्रकरणे तत् । तथाऽपि तेनाधानाङ्गभूतहोमानामेवाहवनीयाधिकरणकत्वसिद्धिरेव न त्वग्न्यङ्गत्वसिद्धिः सप्तम्या लाक्षणिकत्वा-**

---

*तै. ब्रा. १-६-५.

पत्तेः । अत एव तत्रत्यमाहवनीयपदमाधानजन्योत्पत्त्यपूर्वविशिष्टाग्निलक्षकमेव । परमापूर्वविशिष्टाग्निरूपमुख्याहवनीयस्य तदानीमसत्त्वात् । न चैवं पवमानेष्टिहविःश्रपणादौ गार्हपत्यादिप्रापकाभावः । तत्र मुख्यगार्हपत्याद्यधिकरणत्वबाधेऽपि सति सम्भवे प्रकृतिदृष्टगौणगार्हपत्यादिबाधे प्रमाणाभावात् । अतश्च सत्यपि वचनान्तरे पवमानेष्टीनामग्न्यङ्गत्वे प्रमाणाभावादाधानाङ्गत्वेऽपि वारणादीनां सर्वयज्ञार्थतैव सूपपादनीया । सर्वत्र स्वोद्देश्यस्यापूर्वव्यभिचारे अपूर्वसाधनत्वलक्षणार्थं प्रकरणानुप्रवेशः । यथा 'व्रीहीन्' इत्यादौ । अत एव तादृशस्थले आनर्थक्यतदङ्गन्यायः । प्रकृते तु यज्ञपदेनैवाव्यभिचरितापूर्वसाधनत्वोपस्थितौ तदर्थं प्रकरणानुप्रवेशाभावात् प्रधानसम्बन्धस्यैवाप्रसक्तौ क तदङ्गावतारः । एवं सत्यपि यदि पवमानेष्टिसन्निधौ पात्राणि श्रूयेरन् तदा अनुवादस्य सति सम्भवे सन्निहितगामित्वात् 'आग्नेयीभिर्यजेत' इत्यादिवद्भवेत्प्रकृतमात्रविषयत्वं न त्वेतदस्ति । पवमानेष्टीनां प्रदेशान्तरस्थत्वात् । अतो वारणादीनां सर्वयज्ञार्थत्वमेव ॥

प्रयोजनं पवमानेष्ट्यनन्तरं पात्राणां नाशे दर्शाद्यर्थमनियतानामुत्पत्तिः । सिद्धान्ते वारणादीनामेवेति ॥ १२ ॥

---

## (१३)—मिथश्चानर्थसम्बन्धः ॥ २३ ॥

तैत्तिरीयब्राह्मणे तृतीये काण्डे पञ्चमे प्रपाठके प्रयाजमन्त्रानुवाकानन्तरे आज्यभागक्रमे 'अग्निर्वृत्राणि जङ्घनत् । द्रविणस्युर्विपन्यया। समिद्धश्शुक्र आहुतः । जुषाणो अग्निराज्यस्य वेतु । त्वं सोमासि सत्पतिः। त्वं राजोत वृत्रहा । त्वं भद्रो असि क्रतुः । जुषाणस्सोम

आज्यस्य हविषो वेतु'* इति वार्त्रघ्नीयुगलं 'अग्निः प्रत्नेन जन्मना। शुम्भानस्तनुवं स्वाम् । कविर्विप्रेण वावृधे । जुषाणो अग्निराज्यस्य वेतु । सोमगीर्भिष्ट्वा वयम् । वर्धयामो वचोविदः । सुमृडीको न आविश । जुषाणस्सोम आज्यस्य हविषो वेतु'* इति वृधन्वतीयुगलं च समाम्नातम् । तयोरनुवाक्यायुगलयोः प्रधानयोर्दर्शपूर्णमासयोश्च मिथश्च परस्परं 'वार्त्रघ्नी पूर्णमासेऽनूच्येते वृधन्वती अमावास्यायाम्'† इति वाक्याभ्यां सप्तमीप्रकृत्या कर्मलक्षणया सप्तम्योद्देश्यत्वलक्षणया च **अनर्थसम्बन्धः** प्रयोजनप्रयोजनिभावरूपसम्बन्धो न सम्भवति । तथा सति अग्नीषोमदेवताकत्वरूपलिङ्गस्य आज्यभागक्रमस्य च प्रयाजानन्तर्यरूपस्य बाधापत्तेः । तस्मात्तयोरनुवाक्यायुगलयोराज्यभागाङ्गतैवेति ॥ २३ ॥

आज्यभागक्रमे श्रुतानां वार्त्रघ्नीवृधन्वतीमन्त्राणां लिङ्गक्रमौ बाधित्वा 'वार्त्रघ्नी पूर्णमासेऽनूच्येते वृधन्वती अमावास्यायाम्'† इति वाक्याभ्यां प्रधानाङ्गत्वम् । इष्यते च लिङ्गस्यापि मन्त्रगतस्य वाक्येनापि ब्राह्मणगतेन बाधः 'यद्यप्यन्यदेवत्यः' इत्यादिनेति प्राप्ते—

अबाधेनोपपत्तौ बाधायोगात् न प्रधानाङ्गत्वम् । न हि सोमदेवत्यस्य मन्त्रस्य लिङ्गाविरोधस्सम्भवति । सोमस्य देवतात्वाभावात् अमावास्यायामधिष्ठानत्वस्याप्यसम्भवाच्च । वस्तुतस्तु—वाक्यस्यापि व्यवस्थामात्रकरणे लाघवान्न प्रधानाङ्गताबोधकत्वम् । व्यवस्था च पौर्णमास्यां यौ आज्यभागौ तत्र वार्त्रघ्नी इत्यादिरूपेण कालकृता पौर्णमासीसंज्ञिकप्रधानाङ्गभूताज्यभागयोर्वार्त्रघ्नी इत्येवं कर्मकृता वेत्यादिविशेषः कौस्तुभे द्रष्टव्यः ॥ १३ ॥

---

*तै. ब्रा. ३-५-६. †तै. सं. २-५-२.

## (१४)–आनन्तर्यमचोदना ॥ २४ ॥ वाक्यानां च समाप्तत्वात् ॥ २५ ॥

दर्शपूर्णमासप्रकरणे 'उलपराजिं स्तृणाति' इत्यस्य यत् **आनन्तर्यं** 'हस्तावत्रनेनिक्ते'* इति वाक्याव्यवहितोत्तरत्वं तत् हस्तावनेजनस्य **अचोदना** उलपराजिस्तरणमात्राङ्गताया ग्राहकं न भवति बहुषु पदार्थेषु वक्तव्येषु कस्मिंश्चिदेकस्मिन्नानन्तर्यस्यावर्जनीयत्वात् । तस्मात् हस्तक्षाळनं योग्यतया करिष्यमाणकर्मार्थं सत् करिष्यमाणप्रकृत सर्वकर्मार्थमित्येव प्रकरणवशात्प्रतीयते । सन्निधिस्तु प्रकरणाद्दुर्बल एवेति ॥ २४ ॥ एवमपि यद्यत्रानयोर्वाक्ययोः 'पश्य मृगो धावति' इत्यादिवाक्ययोरिव एकवाक्यता स्यात् तदा स्यादपि वाक्यप्रमाणेन पूर्ववाक्यार्थस्याव्यवहितोत्तरवाक्यार्थाङ्गता । परन्तु सैवैकवाक्यता नात्र सम्भवति कुतः? **वाक्यानां** हस्तावनेजनादिपरपूर्ववाक्यानां **च समाप्तत्वात्** स्वार्थबोधसमाप्ततया निराकाङ्क्षत्वात् विभज्यमानसाकाङ्क्षत्वाभावेनैकवाक्यत्वानुपपत्तेः ॥ २६ ॥

**दर्शपूर्णमासयोः 'हस्तावनेनिक्ते'* 'उलपराजीस्तृणाति' इति तथा ज्योतिष्टोमे 'मुष्टीकरोति वाचं यच्छति'$ 'दीक्षितमावेदयति' इति श्रुतम् । तत्र हस्तावनेजनं हस्तसंस्कारार्थं मुष्टीकरणवाग्यमौ च मनःप्रणिधानार्थौ अतस्तत्त्रयमपि तावत्करिष्यमाणकर्मार्थमित्यसंदिग्धम् । तत्र करिष्यमाणकर्म आनन्तर्यादेकवाक्यत्वाद्वा उलपराजिस्तरणदीक्षितावेदनरूपमेवेति प्राप्ते—**

**आनन्तर्यस्यावर्जनीयत्वादङ्गताग्राहकत्वानुपपत्तेः ग्राहकत्वेऽपि वा प्रकरणेन बाधात् 'पश्य मृगो धावति' इतिवत् आ-**

---

*तै. ब्रा. ३-२-१०. $तै. सं. ५-२-१.

काङ्क्षाविरहेण चाख्यातद्वयस्य यच्छब्दाद्युपबन्धाभावे एकवाक्यत्वानुपपत्तेः कर्तृसंस्कारकस्यास्य प्रकरणादङ्गप्रधानसाधारणस्वोत्तरपदार्थाङ्गत्वं हस्तावनेजने । मुष्टीकरणवाग्यमयोस्तु अङ्गुलिवाग्विसर्गप्राक्कालीनपदार्थमात्राङ्गत्वम् ॥ १४ ॥

---

## (१५)—शेषस्तु गुणसंयुक्तस्साधारणः प्रतीयेत मिथस्तेषामसम्बन्धात् ॥ २६ ॥ व्यवस्था वाऽर्थस्य श्रुतिसंयोगाल्लिङ्गस्यार्थेन सम्बन्धाल्लक्षणार्था गुणश्रुतिः ॥ २७ ॥

दर्शपूर्णमासप्रकरणस्थे 'आग्नेयं चतुर्धा करोति । पुरोडाशं चतुर्धा करोति' इत्यत्र **गुणसंयुक्तस्तु** गुणेन उद्देश्यविशेषणपरेण आग्नेयादिपदेन समवहितः **शेषः** चतुर्धाकरणरूपः **साधारणः** आग्नेयाग्नीषोमीयपुरोडाशसाधारण एव प्रतीयेत । **तेषां** उद्देश्यविशेषणानां आग्नेयादीनां **मिथः** परस्परं **असम्बन्धात्** अनन्वयात् चतुर्धाकरणस्योद्देश्याकाङ्क्षायां तद्धितेन आग्नेयशब्दगतेन हविष उपस्थितौ प्रकरणेन प्रकृतहविर्मात्रस्यैवोद्देश्यत्वोपपत्तेः आग्नेयत्वस्योद्देश्यतावच्छेदकत्वेनाविवक्षणादिति ॥ २६ ॥ सिद्धान्तमाह—**व्यवस्था वा** आग्नेये एव चतुर्धाकरणस्य व्यवस्थैव कुतः? **अर्थस्य** अग्निपर्याप्तदेवतात्वकत्वरूपस्यार्थस्य **श्रुतिसंयोगात्** तद्धितश्रुत्यैव प्रतिपादनात् । **लिङ्गस्य** अपूर्वसाधनीभूताग्निपर्याप्तदेवतात्वकत्वरूपस्योद्देश्यविशेषणस्याशक्यपरित्यागस्य **अर्थेन** आग्नेयेनैव **सम्बन्धात्** अग्नीषोमीयेनासम्बन्धात् । 'आग्नेय-

स्य मस्तकं विरुज्य प्राशित्रमवद्यति' इत्यत्र तु गुणश्रुतिः आग्नेयत्वरूपाविशेषणश्रुतिः लक्षणार्था मस्तकविशेषणार्था न त्ववदानविशेषणार्था । तथा च 'प्राशित्रमवद्यति' इति सामान्यवाक्येन सर्वहविषां प्राशित्रावदानप्राप्तौ प्रदेशविशेषाकाङ्क्षायां 'आग्नेयस्य' इत्युक्तवाक्येन मस्तकप्रदेशनियममात्रकरणात् हविरन्तरे प्रदेशनियमाप्राप्तावपि प्राशित्रावदानप्राप्तौ बाधकाभावः । आग्नेयपदार्थस्य प्राशित्रावदानेऽन्वयाभावात् । प्रकृते तु चतुर्धाकरणेनाग्नेयपदार्थान्वयान्नाग्नीषोमीयादेश्चतुर्धाकरणमिति ॥

इति सारबोधिन्यां तृतीयस्य प्रथमः.

दर्शपूर्णमासयोः 'आग्नेयं चतुर्धा करोति' इत्यत्र नाग्निदेवताकहविष्ट्वमुद्देश्यतावच्छेदकं विशिष्टोद्देशे वाक्यभेदापत्तेः । अपि तु तद्धितोपात्तं हविष्ट्वमेव । कथं चिद्वाऽग्निसम्बन्धिहविष्ट्वं तथा । अस्ति चाग्निसम्बन्धोऽग्नीषोमीयादावपि । अथवा 'पुरोडाशं चतुर्धा करोति' इत्यनेनोपसंहारादग्निसम्बन्धिपुरोडाशस्यैव तत् न त्वाज्यस्यापीति । अस्तु वा देवतात्वस्यापि कथञ्चिद्विवक्षा तथाऽपि द्विदेवत्येऽप्यग्नेरस्त्येव देवतात्वम् । द्वन्द्वान्ते श्रूयमाणस्य तद्धितस्य प्रत्येकमभिसम्बन्धात् । अतस्सर्वेषां चतुर्धाकरणमिति प्राप्ते—

प्रचुरप्रयोगात्तद्धितस्य देवतात्व एव शक्तस्य सम्बन्धमात्रलक्षकत्वानुपपत्तेर्न तावदग्निसम्बन्धित्वस्य विवक्षा । न च देवतात्वं द्विदेवत्ये प्रत्येकवृत्ति इतरेतरयोगरूपचार्थविहितद्वन्द्वेन साहित्यस्य विवक्षितत्वात् सहितयोरेव व्यासज्यवृत्त्यखण्डोपाधिरूपदेवतात्वाङ्गीकारात् अत एव द्वन्द्वान्त इत्यादिप्रवादस्तु यत्रोद्देश्यत्वेन साहित्याविवक्षा तत्रेति ध्येयम् । अतः

केवलादग्निपदादुत्पन्नस्तद्धितः नान्यसापेक्षस्य देवतात्वमभिवदितुं क्षमः । सामर्थ्यविघातापत्तेः । यत्त्वग्निदेवताकत्वमविवक्षितमिति । तन्न । तथात्वे न तावत् प्रकृतद्रव्यत्वमात्रमपूर्वसाधनत्वलक्षकं तस्य देवतातद्धितेनानुक्तेः । नापि हविष्ट्वं तत्परत्वस्य देवतावाचित्वप्रतीतिं विनाऽनुपपत्तेः । न हि हविषि वाच्ये देवतातद्धित एवेति स्मृत्या नियम्यते तद्वाचित्वेऽपि सम्बन्धसामान्ये तद्धितस्य सत्त्वात् । अतः प्रथमावगतस्य देवतात्वस्यैवोद्देश्यतावच्छेदकत्वम् । तस्य त्वनुयोगिप्रतियोगिसापेक्षत्वात् हविरार्तिन्यायेन 'अर्धमन्तर्वेदि' इतिवत् अग्निदेवताकहविष्ट्वस्यैव लक्षणयोद्देश्यतावच्छेदकत्वसिद्धिः । तेन च 'पुरोडाशं चतुर्धा करोति' इति सामान्यवचनस्योपसंहारः । तस्मादाग्नेयस्यैव पुरोडाशस्य चतुर्धाकरणम् ॥ १५ ॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां
तृतीयस्याध्यायस्य प्रथमः पादः.



## अथ तृतीयाध्यायस्य द्वितीयः पादः.

### (१)–अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावस्स्यात्तस्मादुत्पत्तिसम्बन्धोऽर्थेन नित्यसंयोगात् ॥ १
### संस्कारकत्वादचोदिते न स्यात् ॥ २ ॥

लिङ्गविनियोगोपयोगिचिन्तनमेतत्पादार्थः । तत्र 'बर्हिर्देवसदनं दामि' इत्यादिमन्त्राणां लिङ्गेन मुख्यलक्ष्ययोरुभयोरपि विनियोगस्स्यात् उत बर्हिरादिपदमुख्यार्थ एवेति संदेहे सिद्धान्तमेवाह–मन्त्रेषु 'बर्हिर्देवसदनं दामि'

इत्यादिषु गौणार्थे प्रति **शेषभावः** अङ्गत्वं **अर्थाभिधानसंयोगात्** अर्थशक्तिसम्बन्धात् शक्यार्थसम्बन्धग्रहात् **स्यात्** न साक्षात् । **तस्मात् उत्पत्तिसम्बन्धः** प्रथमावगतशक्यार्थेनैव शेषतया सम्बन्धो युक्तः । तेनैव **अर्थेन** शक्यसम्बन्धग्राहकप्रमाणान्तरानपेक्षतया मन्त्राणां **नित्यसंयोगात्** नित्यं सम्बन्धात् । गौणार्थे हि शक्यार्थप्रतीत्यनन्तरं तत्सम्बन्धप्रतीतिद्वारा सम्बन्धो वाच्यः स च विलम्बित इति ॥ १ ॥ नन्वेवं सति दर्शपूर्णमासप्रकरणपठितानां पूषानुमन्त्रणमन्त्रादीनां अप्रकृते पूषदेवत्ययागे उत्कर्षकल्पनेन प्रकरणबाधस्स्यात् प्रकृतयागीयदेवतायां पूषपदस्य मुख्यवृत्तेरभावेन भवदुक्तरीत्या शेषभावासम्भवादित्याशङ्कायां तद्बाधकल्पनस्य गुणतया इष्टापत्तिमाह— प्रकरणे पूषादिपदमुख्यार्थे **अचोदिते** अविहिते सति तद्विरोधिनि अग्न्यादौ विहिते सतीति यावत् प्रकृतयागं प्रति शेषभावो **न स्यात्** लिङ्गेन सामान्यसम्बन्धबोधकप्रमाणसहकृतेन तन्मन्त्रस्य **संस्कारकत्वात्** मुख्यार्थसंस्कारकत्वस्यैवावधारणात् । लिङ्गेन प्रकरणबाधनं गुण एव न दोष इति ॥ २ ॥

**एवं श्रुत्युपयोगिविचारे वृत्ते अधुना लिङ्गोपयोगिविचारः प्रस्तूयते । तत्र लिङ्गं नाम अङ्गत्वघटकीभूतपरोद्देश्यत्वकृतिकारकत्ववाचकपदकल्पनानुकूला क्लृप्तपदपदार्थनिष्ठा योग्यता । यथा "स्रुवेणावद्यति" इत्यत्र स्रुवनिष्ठा द्रवद्रव्यपदकल्पनानुकूला । एवं मन्त्रेषु स्वार्थवृत्त्युद्देश्यतावाचिपदकल्पनानुकूला स्ववृत्तिकारकत्ववाचिपदकल्पनानुकूला च योग्यता लिङ्गम् । सा च पदरूपश्रुतिकल्पकत्वात्तद्द्वारा तदर्थविनियोगे प्रमाणम् । तत्र वस्तुसामर्थ्यरूपस्य लिङ्गस्य विशेषविचारासम्भवान्मन्त्रसामर्थ्यरूपस्य किं शक्य एवार्थे विनियोजकत्वं उत जघन्यवृत्तिप्रतिपाद्येऽपीति संदेहे क्रतुप्रकरणाम्नातमन्त्रस्य 'बर्हिर्देवसदनं**

दामि' इत्यादेर्मुख्य इव जघन्येऽप्युलपराज्यादौ स्मारकाकांक्षादिरूपसामग्र्यविशेषात्तत्साधारण्येनैव विनियोगः। "यष्टीः प्रवेशय" इत्यादिवदाकांक्षादिरूपतात्पर्यग्राहकसत्त्वे मुख्यार्थाबाधस्याकिञ्चित्करत्वादिति प्राप्ते—

शक्यसम्बन्धग्रहसापेक्षत्वेन जघन्यार्थप्रतीतेर्विलम्बितत्वात् प्रथमप्रतीतमुख्यविनियोगेन चरितार्थस्य मन्त्रादेर्जघन्यार्थविनियोजकत्वानुपपत्तेः। अत एव तत्स्मारकाकांक्षाया ध्यानाद्युपायान्तरेणैव निवृत्तिः। अत एव यत्र प्रकरणे मुख्यार्थोपयोगो न क्लृप्तः तत्र मन्त्राम्नानबलादेव तत्कल्पना। यत्र तु विरोधिगुणान्तरावरोधः प्रकरणे तत्र सामान्यसम्बन्धबोधकप्रमाणसत्त्वे उत्कर्षः यथा दर्शपूर्णमासप्रकरणाम्नातपूषानुमन्त्रणमन्त्रादेः यागानुमन्त्रणसमाख्याया एव सामान्यसम्बन्धबोधकत्वात्। उत्कर्षस्याप्यसम्भवे प्रकरण एव जघन्यार्थे विनियोगः यथा मनोतादौ। अप्रयुक्तलक्षणादिना तस्याप्यसम्भवे तदर्थाभिधानस्यैवादृष्टार्थत्वं यथा जपादौ ॥ १ ॥

---

## (२)—वचनात्त्वयथार्थमैन्द्री स्यात् ॥ ३ ॥ गुणाद्वाऽप्यभिधानं स्यात्सम्बन्धस्याशास्त्रहेतुत्वात् ॥ ४ ॥

'कदा चन स्तरीरसि नेन्द्र सश्चसि दाशुषे । उपोपेन्नु मघवन्भूय इन्नु ते दानं देवस्य पृच्यते'* इति ऋगादि लिङ्गेन मुख्य एवार्थे इन्द्रे विनियुज्येत

*तै. सं. १-४-२२.

इत्याशङ्कायामुच्यते—**वचनात्** 'कदा चन स्तरीरसीत्यैन्द्र्या गार्हपत्यमुपतिष्ठते' इत्याकारकात् तृतीयाश्रुतिघटिताद्वचनात् **ऐन्द्री** इन्द्रपदघटिता उक्ता ऋक् **अयथार्थं स्यात्** मुख्यार्थमतिक्रम्य गौणार्थशेषभूता भवेत् । लिङ्गाद्धि श्रुतिर्बलीयसीति वक्ष्यते ॥ ३ ॥ ननु वचनबलात् गार्हपत्ये इन्द्रपदस्य शक्तिरेव कल्प्यतामित्याशङ्कायामाह—**गुणाद्वाऽपि** गौणवृत्त्याऽपि च इन्द्रपदेन गार्हपत्यस्य **अभिधानं** प्रतिपादनं स्यात् । न तु शक्त्या । सम्बन्धस्य वाच्यवाचकभावस्य अनादितया **अशास्त्रहेतुत्वात्** शास्त्रकार्यत्वासम्भवात् । लोकसिद्धगौणवृत्त्याश्रयणेनैवोपपत्तौ शास्त्रस्योक्तस्य तज्ज्ञापकत्वकल्पनाया अप्यसम्भवादिति ॥ ४ ॥

**यत्र तु गौणार्थे तात्पर्यग्राहकं वचनं विद्यते यथा अग्नौ "कदा चन स्तरीरसीत्यैन्द्र्या गार्हपत्यमुपतिष्ठते" इत्यादौ तत्र गौण एव गार्हपत्ये विनियोगः । अथ ऐन्द्र्येत्युपक्रमस्य तद्धितश्रुत्या मुख्यसामर्थ्योज्जीवनात् जघन्यद्वितीयाया एव तदनुरोधेन प्रतियोगित्वे लक्षणा गार्हपत्यसमीपे स्थित्वेति । गुणभूतप्रातिपदिक एव वा यज्ञसाधनत्वसादृश्याद्गौण्या, गृहपतिमत्त्वयोगेन, वा इन्द्रप्रकाशकत्वम् । अस्तु वा रूढत्वादग्नेरेव धातुवाच्यसमीपस्थितिं प्रति कर्मत्वं न तु मन्त्रसाध्याभिधानं प्रति तस्याशाब्दत्वात् । न च "उपान्मन्त्रकरणे" इति स्मृत्या आत्मनेपदविधानेन धातोर्मन्त्रकरणार्थकत्वावगतेस्तस्याभिधानलक्षकत्वावगतिः आत्मनेपदबलेन समीपस्थितेरभिधानप्रयोजकत्वावगतेः मन्त्रस्य स्वसाध्याभिधानाङ्गत्वसम्बन्धेन समीपस्थितिविशेषणत्वोपपत्तेरभिधानलक्षणायां प्रमाणाभावात् । अतश्च शक्यार्थ एव समीपस्थितौ गार्हपत्यस्य कर्मत्वं इन्द्रस्य स्वार्थिकेऽभिधाने इति न विरोधः यथा चास्य धातोस्सकर्म-**

कत्वं तथा कौस्तुभ एव प्रपञ्चितम् । अतः कथं मन्त्रस्य गौणेऽर्थे विनियोग इति चेत्—

न ऐन्द्र्येति तद्धितेन एकपदेन विशेष्यतया प्रतिपाद्यमानस्य मन्त्रस्य चयनानुपयोगीन्द्राङ्गत्वबोधानुपपत्तेः । अतस्तस्य शक्यबोधकालीनेन्द्रप्रकाशकत्वानुवादत्वेनाप्युपपत्तेर्न द्वितीयादौ तद्बलेन लक्षणाश्रयणं रूढित्यागो वा । न च समीपस्थितिं प्रत्यग्नेः कर्मत्वम् । तथात्वे तस्या अभिधानं प्रत्यप्यङ्गत्वे उद्देश्यानेकत्वकृतवाक्यभेदापत्तेः । आत्मनेपदविरोधेन 'धातुनैव स्वशक्यार्थविशिष्टाभिधानलक्षणावश्यम्भावाद्विशेष्यभूताभिधान । एव मन्त्रस्य करणत्वप्रतीतेः गार्हपत्यस्य च चयनसंस्कार्यस्य कर्मत्वप्रतीतेः अर्थाच्च सामीप्यप्रतियोगित्वेन तस्यैव ग्रहणोपपत्तेः । तात्पर्यग्राहकब्राह्मणानुरोधेन मन्त्रस्यैव गौण्या वृत्त्या गार्हपत्ये विनियोग इति सिद्धम् ॥ २ ॥

——o——

## (३)–तथाऽऽह्वानमपीति चेत् ॥ ५ ॥ न कालविधिश्चोदितत्वात् ॥६॥ गुणाभावात् ॥७॥ इतश्च तथा लिङ्गात् ॥ ८ ॥ विधिकोपश्चोपदेशे स्यात् ॥ ९ ॥

आह्वानं अपि आह्वानप्रकाशकः " हविष्कृदेहि "* इत्ययं दर्शपूर्णमासप्रकरणपठितो मंन्त्रोपि तथा ऐन्द्रमन्त्रवद्गौण एव " हविष्कृदेही॥ति त्रिरवघ्नन्नाह्वयति "* इतिवाक्येन इतिकरणेन अवघाते विनियोगात्, म-

* तै. ब्रा. ३-२-६.

न्त्रस्य चायमर्थः—हे हविष्कृत्! हविस्सम्पादक! अवघात! त्वमेहि सम्पन्नो भव इति, **इतिचेत् न** अवघाते मन्त्रविनियोजको विधिरयं अपि तु **कालविधिः** कालानुवादपूर्वकस्त्रिरभ्यासविधिः कालस्य मन्त्रस्य च **चोदितत्वात्** अर्थत एव प्राप्तत्वात् ॥ ५-६ ॥ **गुणाभावात्** मुख्यार्थसादृश्यरूपगुणाभावादपि नात्रावहनने मन्त्रस्य विनियोगः ॥ ७ ॥ **लिङ्गाच्च** "वाग्वा हविष्कृत्" इत्यस्माल्लिङ्गादपि आह्वान एवास्य मन्त्रस्य विनियोगः। स्त्रीलिङ्गवाक्सादृश्यं हि हविष्कृत्पदस्य अवहननकर्तृस्त्रीपरत्वे उपपद्यते न त्ववघातपरत्वे ॥ ८ ॥ अध्वर्युकर्तृकावघाताङ्गतया मन्त्रस्यास्य **उपदेशे** सति पत्नीकर्तृकस्य "अव रक्षो दिवस्सपत्नं वध्यासम्" इति मन्त्रसाध्यस्यावघातस्य भिन्नत्वापत्त्या **विधिकोपः** तद्विधेः विरोधः अष्टदोषदुष्टविकल्पप्रसङ्गात् **स्यात्** ॥९॥

**दर्शपूर्णमासयोः "हविष्कृदेहीति त्रिरवघ्नन्नाह्वयति"*इति श्रुतम् तत्र नायं मन्त्र आह्वानाङ्गं, तस्य "पत्न्येव हविष्कृदुपोत्तिष्ठति सा देवानभिद्रुत्यावहन्ति" इति वचनानुसारेणाभावप्रतीतेः। अत इतिकरणेनावघाताङ्गमेव। अतश्चास्मिन्वाक्ये त्रिरभ्यासपुंस्त्वमन्त्रविशिष्टावघातविधिरेव। पत्नीवाक्ये च गुणादेव कर्मान्तरविधिः। तयोश्चावघातयोः "व्रीहीनवहन्ति" इत्यनेन संस्कार्यसम्बन्धेऽपि दृष्टार्थत्वाद्विकल्पः। पत्नीकर्तृकावघाते च "अवरक्षो दिवः" इति मन्त्रः। अतश्चानेन वाक्येनावघाते गौण एवायं मन्त्रो विनियुज्यते। गौणत्वोपपादनं कौस्तुभे द्रष्टव्यम्। आह्वयतिश्च "तदाचष्टे" इत्येवं शक्यार्थबोधकालीनाह्वानप्रकाशनानुवाद इति प्राप्ते—**

**मुख्य एवाह्वाने विनियोगसम्भवे मन्त्रस्य आह्वयतिपदस्य च गौणत्वकल्पनायां प्रमाणाभावात्। मान्त्रवर्णिकाविनियोगावि-**

* तै, ब्रा. ३-२-५.

धिकल्पनया "सख्यासम्" इत्यादिना ग्रहणादेरिवाह्वानस्यापि नियमेन प्राप्तत्वात्। "पत्न्येव" इत्यस्य तु नायमर्थः यत्स्वयमेवोत्तिष्ठति न त्वाह्वयतीति; अपि तु पत्न्येव नान्येति। अतो नेदमपि तदभावबोधकम्। अतश्चाह्वाने मन्त्रस्य लिङ्गादेव प्राप्तत्वादाह्वानस्य च सहायार्थत्वेनावघातकाल एव प्राप्तेः "अवघ्नन्" इत्यस्याप्यनुवादत्वात्केवलं त्रिरभ्यासमात्रं विधीयत इति न गौणेऽवघाते विनियोगः ॥ ३ ॥

---o---

## (४)-तथोत्थानविसर्जने ॥ १० ॥

**उत्थानविसर्जने** "उत्तिष्ठन्नन्वाहाग्नीदग्नीन्विहर"* "व्रतं कृणुतेति वाचं विसृजति"† इत्यनयोरुत्थानविसर्जनपरयोर्वाक्ययोःश्रुतौ मन्त्रौ **तथा** पूर्ववत् मुख्यार्थ एवाग्निविहरणे व्रतकरणे च विनियुज्येते। न तु गौणे उत्थाने वाग्विसर्गे च। तत्रतत्र शतृप्रत्ययेतिकरणयोः कालविधिपरतयाऽप्युपपत्तेर्मन्त्रगौणत्वे प्रमाणाभावात् ॥ १० ॥

सोमे "उत्तिष्ठन्नन्वाहाग्नीदग्नीन्विहर"* तथा "व्रतं कृणुतेति वाचं विसृजति"† दर्शपूर्णमासयोः "प्रणीताः प्रणेष्यन्वाचं यच्छति तां सहाविष्कृता विसृजति" इति श्रुतम्। तत्रापि पूर्ववदेव मन्त्राणां मुख्येऽर्थे विनियोगः न तु गौणयोरुत्थानवाग्विसर्गयोः प्रबलस्यापि ब्राह्मणवाक्यस्य कालविधायित्वेनाप्युपपत्तौ गौणत्वतात्पर्यग्राहकत्वाभावात्। न च लक्षणा। शतृप्रत्ययस्य कालिकसम्बन्धेन उपलक्षणार्थत्वमङ्गीकृत्य श्रुत्यैवान्वयोपपत्तेः। अतश्चोत्थानकाले विहरणमन्त्रः पठनीय इति कालविधिरेवायम्। "व्रतं कृणुत"† इत्यत्र इतिकरणस्यापि म-

* तै. सं. ६-३-१. † तै. सं. ६-१-४.

न्त्रस्वरूपमात्रपरत्वात् कालिकसम्बन्धस्यैव संसर्गविधया भानोपपत्तेर्न लक्षणा । हविष्कृद्वाक्ये तृतीयायास्तु वाग्यमापेक्षितावधिसमर्पकत्वेन तदेकवाक्यतोपपत्तौ वाक्यभेदे प्रमाणाभावात् इत्थम्भूतलक्षणार्थतामङ्गीकृत्य कालविधिपरत्वम् । अतश्च तद्वाक्ययोः पाठक्रमावगततत्तन्मन्त्रपाठकाले वाग्विसर्गः कर्तव्य इति सोपि तत्र कालविधिरेव ॥ ४ ॥

———o———

**(५)–सूक्तवाके च कालविधिः परार्थत्वात् ॥११ उपदेशो वा याज्याशब्दो हि नाकस्मात् ॥ १२ ॥ स देवतार्थस्तत्संयोगात् ॥ १३ ॥ प्रतिपत्तिरिति चेत् ॥ १४ ॥ स्विष्टकृद्वदुभयसंस्कारस्स्यात् * ॥ १५ ॥**

**सूक्तवाके** "सूक्तवाकेन प्रस्तरं प्रहरति" इत्यस्मिन् सूक्तवाकपदघटिते वाक्ये **च कालविधिः** प्रस्तरप्रहरणोद्देशेन सूक्तवाककालस्यैव विधिः न तु सूक्तवाकमन्त्रकरणकयागविधिः । सूक्तवाकस्य **परार्थत्वात्** इष्टदेवताप्रकाशनार्थतया कृतार्थत्वात् । सूक्तवाकेनेति तृतीया गमकत्वरूपलक्षणत्वपरा "इत्थंभूतलक्षणे" इत्यनुशासनादिति हृदयम् ॥ ११ ॥ एवं पूर्वपक्षे सिद्धान्तमाह—**उपदेशो वा** सूक्तवाकस्य करणत्ववाचकतृतीयाश्रुतिबलात् प्रहरणाङ्गतया उपदेशो विधिरेव **हि** यतः "सूक्तवाक एव याज्या प्रस्तरो हविः" इति तदर्थवादे

*"कथमप्रधानकर्मणस्सूक्तवाकोऽङ्गमथादयो वाऽङ्गमित्यत उत्तरसूत्रं पठति" इति वार्तिकेऽवतरणदर्शनादिदं पृथगेव सूत्रं द्रष्टव्यम् ॥

याज्याशब्दः **अकस्मात्** कारणं विना **न** युज्यते यागाङ्गत्वे हि याज्यात्वमिति ॥ १२ ॥ **सः** सूक्तवाकः **देवतार्थः** प्रस्तरहविष्के यागे देवताकल्पकः । **तत्संयोगात्** अङ्गत्वेन रूपेण प्रहरणं प्रति सम्बन्धात् आघारोपांशुयाजादिमन्त्रवत् । अतः प्रहरणे देवताविरहात् कथं तदङ्गत्वमिति नाशङ्कनीयम् ॥ १३ ॥ आशङ्क्य समाधत्ते प्रहरणं प्रस्तरस्य **प्रतिपत्तिरिति** द्वितीययाऽवगम्यते । अतस्सूक्तवाकस्य कालार्थ एव संयोग इति **चेत्** उच्यते प्रहरतिलक्षितोऽत्र होमः **स्विष्टकृद्वत्** स्विष्टकृद्याग इव **उभयसंस्कारः** प्रक्षेपांशेन प्रस्तरस्य उद्देशांशेन उपयुक्तदेवतायाश्च संस्कारः स्यात् । स्विष्टकृद्यागोपि हि प्रक्षेपांशेन उपयुक्तहविस्संस्कारार्थः । "अयाडग्निरग्नेः प्रिया धामानि"* इत्यादिमन्त्रांशेन इष्टेज्यमानदेवतासंस्कारः । प्रस्तरमिति द्वितीया तु प्रतिपत्तिसंस्कार्यत्वानुवादपरैवेति ॥

प्रयोजनं पूर्वपक्षे सूक्तवाकपाठकाले प्रहरणं सिद्धान्ते त्वन्त इत्यादूह्यम् ॥ १४-१५ ॥

**दर्शपूर्णमासयोः "सूक्तवाकेन प्रस्तरं प्रहरति" इति श्रुतम् । तत्र सूक्तवाकपदवाच्यस्य मन्त्रस्य इष्टदेवताप्रकाशनेन कृतार्थत्वात्प्रस्तरप्रहरणस्य चोपयुक्तप्रस्तरप्रतिपत्तित्वेन कृतार्थत्वात् "दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत" इतिवत्कालार्थस्सम्बन्धः । तृतीया चेत्थम्भूतलक्षणत्वपरा सती सूक्तवाकस्य कालैकसम्बन्धेन प्रहरणोपलक्षणत्वेनान्वयं बोधयन्ती नानुपपन्ना । न चैवं लक्षणा तस्याप्यानुशासनिकत्वेन शक्यत्वात् । अतश्चानूयाजोत्तरं सूक्तवाकपाठात् तत्कालविशिष्टं प्रस्तरोद्देशेन प्रहरणमेव विधीयते । न तु सूक्तवाकस्य प्रहरणाङ्गत्वमिति प्राप्ते—**

---

*तै. ब्रा. ३-६-७.

प्रचुरप्रयोगाल्लाघवाच्च करणत्व एव तृतीयायाश्शक्तिः न तु इत्थम्भूतलक्षणे तस्यानुशासनिकत्वेऽपि लाक्षणिकत्वेनाप्युपपत्तेः अतश्च श्रुत्या प्रहरणाङ्गत्वस्याप्यवगतेः प्रहरतिर्मान्त्रवर्णिकदेवताकल्पनया आश्रयिकर्मरूपहोमलक्षको न विरुध्यते अत एव "सूक्तवाक एव याज्या" इति यागलिङ्गमपि सङ्गच्छते । यद्यपि च नास्य मन्त्रत्वादिवदभियुक्तप्रसिद्धिविषयत्वाख्यं याज्यात्वं सम्भवति एवकारोपबद्धत्वेनैतल्लिङ्गस्य याज्यात्वासाधकत्वात् । तथाऽपि यागसाधनत्वमात्रेण याज्यात्वव्यपदेशात् यागलिङ्गत्वम् । अतश्च श्रुत्या मन्त्रस्य प्रहरणाङ्गत्वेऽपि मुख्यसामर्थ्यस्य नात्र बाधः प्रहरणेऽपि तदुपपत्तेः ॥ ५ ॥

———o———

## (६)—कृत्स्नोपदेशादुभयत्र सर्ववचनम् ॥ १६ ॥ यथार्थं वा शेषभूतसंस्कारात् ॥ १७ ॥ वचनादितिचेत् ॥ १८ ॥ प्रकरणाविभागादुभे प्रति कृत्स्नशब्दः ॥ १९ ॥

"सूक्तवाकेन प्रस्तरं प्रहरति" इत्यत्र **कृत्स्नोपदेशात्** कृत्स्नस्य सूक्तवाकस्याङ्गतया विधानात् **उभयत्र** दर्शे पूर्णमासे च **सर्ववचनं** समग्रस्यैव सूक्तवाकस्य पठनं कार्यम् ॥ १६ ॥ एवंपूर्वपक्षे सिद्धान्तमाह—**यथार्थं वा** यथालिङ्गमेव विभज्य विनियोगो दर्शपूर्णमासयोस्सूक्तवाकस्य, **शेषभूतसंस्कारात्** यागे शेषभूताया देवतायाः सूक्तवाकेन स्तुतिद्वारा संस्कारकरणात् । उभयत्र कृत्स्नपाठे हि अनुपयुक्तदेवतांशे आरादुपकारकल्पप्रसङ्गः ॥ १७ ॥ शङ्कते—सूक्तवाकेनेति प्रातिपदिकश्रुत्या कृत्स्नस्यैव सूक्तवाकस्य **वचनात्** रूढ्या प्रहरतिलक्षित-

होमाङ्गतया विनियोगचोदनात् न युक्तो लिङ्गेन विभज्य विनियोग इति चेत् उच्यते—प्रकरणाविभागात् प्रकरणस्य प्रकृष्टकरणस्य सुष्ठु उक्तं वक्तीति व्युत्पत्त्या इष्टदेवताप्रकाशकमन्त्रे अवयवशक्तिरूपस्य अविभागात् प्रत्यभिज्ञानात् समुदायरूढिकल्पनानुपपत्तेः उभे दर्शपूर्णमासकर्मणी प्रति अवयवशः प्रयोगेऽपि कृत्स्नशब्दः कृत्स्नस्सूक्तवाकशब्दार्थो नानुपपन्न इति लैङ्गिकविनियोगेऽपि न श्रुतिविरोधः ॥ १८-१९ ॥

श्रुत्या लिङ्गोपष्टब्धया प्रहरणाङ्गत्वावगमात् न लिङ्गमात्रेण सूक्तवाकस्य इष्टदेवतास्मरणार्थत्वम् । न चात्राविरोधोऽपि अध्येतृप्रसिद्ध्या समस्तानुवाके सूक्तवाकशब्दस्य रूढत्वेनावयवशो विभज्य विनियोगेऽवयवलक्षणापत्त्या श्रुतिविरोधापत्तेः । न चासौ सुष्टूक्तं वक्तीति व्युत्पत्त्या इष्टदेवतावाचिपदसमुदाये यौगिकः । पारायणाध्ययनादौ कतिपयपदप्रयोगेणापि सूक्तवाकपदार्थसम्पत्तिप्रसङ्गेन समस्तानुवाके रूढेरवश्यम्भावात् । अस्तु चेष्टदेवताप्रकाशनमानुषङ्गिकं फलं प्रहरणमेव तु श्रुतिविनियोगात्सर्वानुवाकप्रयोजकमिति दर्शे पौर्णमासे च सर्वः प्रयोक्तव्य इति प्राप्ते—

प्रबलयाऽपि श्रुत्या लिङ्गस्य बाधे प्रहरणाख्यहोमान्तर्गतदेवतोद्देशस्यारादुपकारकत्वापत्तेः इष्टविधया सन्निपत्योपकारकत्वलाभार्थं श्रुतिरेव लैङ्गिकेष्टदेवताप्रकाशनार्थत्वं मन्त्रस्यानुमन्यते । अत एव श्रुतिबलीयस्त्वात् प्रहरणप्रयुक्तस्सूक्तवाकः प्रहरणाभावेऽननुष्ठीयमानोऽपि विभज्य विनियोगांशे इष्टदेवताप्रकाशनरूपलैङ्गिककार्यस्यैव प्रयोजकत्वमनुमन्यते । न चैवं सूक्तवाकशब्दस्यावयवलक्षणार्थत्वापत्तिः सूक्तवाकपदस्य सुष्टूक्तं वक्तीति व्युत्पत्त्या इष्टदेवताप्रकाशकमन्त्रविशेषे योगरू-

ढत्वात् । तेन यत्र यावत्यो देवता इष्टाः प्राकृत्यो वैकृत्यो वा तत्र तावानेव सूक्तवाकः । अतश्च सूक्तवाकप्रातिपदिकश्रुत्यनुरोधेनापि लिङ्गाबाधः । न चाध्ययनादौ योगबाधाद्रूढिमात्रकल्पना । तत्र तदानीन्तनवैदिकप्रसिद्ध्यनुरोधेन दार्शपूर्णमासिकदेवतापदसमुदाययुक्त एव मन्त्रे निरूढलक्षणाङ्गीकारात् । अश्वकर्णादौ शक्यसम्बन्धप्रतीत्यभावात् क्लृप्तावयवशक्तिबाधेनाप्यतिरिक्तशक्तिकल्पनमिति विशेषः ॥

प्रयोजनं विभज्य विनियोगः ॥ ६ ॥

——o——

## (७)–लिङ्गक्रमसमाख्यानात्काम्ययुक्तं समाम्नानम् ॥ २० ॥

काम्ययाज्याकाण्डसमाख्याते काण्डे "इन्द्राग्नी रोचना दिवः"* इत्यादिमन्त्राणां समाम्नानं लिङ्गक्रमसमाख्यानात् लिङ्गक्रमसमाख्यारूपप्रमाणत्रयानुरोधात् काम्ययुक्तं काम्येष्टिकाण्डसमाख्याते काण्डे पठितेषु काम्यकर्मस्वेवाङ्गतया सम्बद्धं न तु लिङ्गमात्रानुसारात् इन्द्राग्न्यादिदेवताककर्ममात्राङ्गम् ॥ २० ॥

काम्येष्टिकाण्डे इन्द्राग्न्यादिदेवत्याः काम्येष्टयस्समाम्नाताः तेनैव क्रमेण मन्त्रकाण्डे तत्तलिङ्गा एव काम्ययाज्यानुवाक्याकाण्डमित्येवं समाख्याता याज्यानुवाक्यामन्त्रास्समाम्नाताः । ते लिङ्गादिन्द्राग्न्यादिदेवत्यकर्ममात्राङ्गं न तु दुर्बलक्रमसमाख्यानुरोधेन काम्येष्टिमात्राङ्गम् । न च सामान्यसम्बन्धबोधकप्रमाणाभावे

* तै. सं. ४-२-११.

लिङ्गमात्रेण विनियोगायोगः मन्त्रगतप्रयोजनाकाङ्क्षासहकृतलिङ्गेन सामान्यसम्बन्धबोधकप्रमाणाभावेऽपि इन्द्राग्न्योर्देवताप्रकाशने मन्त्राविनियोगोपपत्तेः । न चेन्द्राग्निस्वरूपे आनर्थक्यादपूर्वसाधनत्वलक्षणार्थं क्रमाद्यपेक्षेति वाच्यम् । इन्द्राग्न्यादिदेवतानां जुहूवत्क्रत्वव्यभिचारित्वेन लक्षणोपपत्ते. । व्यभिचारित्वेऽपि वा लौकिकस्याग्न्यादेर्वैयर्थ्यादेव निवारणोपपत्तौ परिशेषादेवापूर्वीयत्वोपस्थितेः । अतो लिङ्गमात्रेण क्रमसमाख्ययोर्बाधात् सर्वार्थत्वामिति प्राप्ते—

आकाङ्क्षाभावे योग्यतारूपस्य लिङ्गस्य विनियोजकत्वानुपपत्तेर्मन्त्रगतप्रयोजनाकाङ्क्षायाश्च सर्वमन्त्राणां वाचस्तोमे विनियोगेन निराकाङ्क्षतया अभावान्न लिङ्गमात्रात्सर्वार्थत्वोपपत्तिः । अतश्च वाक्यप्रकरणक्रमादिना सामान्यसम्बन्धबोधकप्रमाणेन तत्तदाकाङ्क्षोत्थापनात्तत्क्रतुसम्बन्धेऽवगते द्वारविशेष एव लिङ्गादवगम्यते । न च वाचस्तोमीयवाक्येन प्रकरणादिबाधः मन्त्रविशेषविषयाणां तेषां मन्त्रपाठकालोत्पन्नमन्त्रप्रयोजनाकाङ्क्षावेळायामनुपस्थितेन तेन वाक्येन बाधायोगात् । न चैवं प्रबलेन विनियुक्तस्यापि दुर्बलेन विनियोगे उत्कृष्टस्यापि पूषानुमन्त्रणमन्त्रस्य प्रकरणेन गौणेऽर्थे विनियोगापत्तिः । प्रमाणद्वयस्याप्येकविषयत्वात् मन्त्रप्रयोजनाकाङ्क्षावेळायां प्रबलप्रमाणस्योपस्थितत्वाच्च बाधकत्वोपपत्तेः । अतश्च प्रकृते बाधायोगात् क्रमसमाख्यानुरोधात् काम्येष्टिविषयत्वमेव मन्त्राणाम् । न चान्यत्राकाङ्क्षोत्थापकं किञ्चिदस्ति अव्यभिचरितक्रतुसम्बन्धादेराकाङ्क्षोत्थापकत्वे प्रमाणाभावात् । वस्तुतस्तु—नात्राव्यभिचारोपि जुह्वादीनां हि

न तत्वेनान्यत्र कारणतेति तस्या युक्तः क्रतुना अव्यभिचरितस्सम्बन्धः । देवतारूपस्याग्न्यादिशब्दस्य तु आनुपूर्वीविशिष्टवर्णत्वेन क्रतुं प्रतीव स्वार्थप्रतिपादनं प्रत्यपि कारणत्वान्नाव्यभिचरितः क्रतुसम्बन्ध इति वैषम्यम् । अतश्च व्यभिचारात् अव्यभिचारेऽपि वा आकांक्षोत्थापकत्वानुपपत्तेर्नान्यत्र विनियोगः । अत एव स्वारसिकी आकाङ्क्षा यत्र न निवर्तते यथा अर्थज्ञाने उपनिषज्जन्यात्मज्ञाने वा तत्राकाङ्क्षोत्थापनप्रयोजनाभावात् सामान्यसम्बन्धबोधकप्रमाणं विनाऽपि भवत्येव लिङ्गमात्राद्विनियोगः । प्रकृते तु स्वारसिकाकाङ्क्षानिवृत्तेराकाङ्क्षोत्थापकसामान्यसम्बन्धबोधकप्रमाणापेक्षेति वैषम्यम् । न चैवं प्रबलक्रममात्रेणैव तदुपपत्तेस्समाख्यावैयर्थ्यम् । यत्र साद्यस्यवत् अग्निदेवत्यकर्मक्रमे आग्नेयमन्त्रद्वयाम्नानं तत्र प्रथमातिक्रमे कारणाभावात् क्रमाविरोधाच्च सामिधेनीषु निवेशे प्राप्ते समाख्यया याज्यानुवाक्याकार्ये निवेशः । सामिधेनीषु त्वन्यासामागमः । न चैवं क्रमोपन्यासवैयर्थ्यं यत्रान्यदेवत्यपूर्वेष्टियाज्याम्नानानन्तरमुत्तरेष्टियाज्यातः पूर्वमाग्नेय्यः ऋचः पठिताः तत्र तत्तल्लिङ्गकमन्त्रेण याज्याकार्ये निवेशासम्भवात्समाख्याबाधेऽपि क्रममात्रेणोत्तरेष्टिसामिधेनीकार्ये निवेशः तत्सामिधेनीस्थानपठितत्वात् । अतस्सिद्धं काम्येष्टिष्वेव विनियोग इति ॥ ७ ॥

---o---

**(८)–अधिकारे च मन्त्रविधिरतदाख्येषु शिष्टत्वात् ॥ २१ ॥ तदाख्यो वा प्रकरणोपपत्तिभ्याम् ॥ २२ ॥ अनर्थकश्चोपदेशस्स्यादस-**

**म्बन्धात्फलवता न ह्युपस्थानं फलवत्॥२३**
**सर्वेषां चोपदिष्टत्वात् ॥ २४॥**

ज्योतिष्टोमप्रकरणपठिते "आग्नेय्याऽऽग्नीध्रमुपतिष्ठते" इत्यादौ **मन्त्रविधिः** आग्नेयीऋगादिमन्त्रविधिः **अधिकारे** अधिकृतमन्त्रविषये **अतदाख्येषु** अप्रकृतेषु **च** अग्न्यादिलिङ्गकेषु अविशेषेण प्रवर्तते **शिष्टत्वात्** आग्नेयीपदेन प्रकृताप्रकृताविशेषेणैव अङ्गतया विहितत्वात् ॥ २१ ॥ एवं पूर्वपक्षे सिद्धान्तमाह—**तदाख्यो वा** अधिकृत एव मन्त्रः तत्र आग्नेयीपदेन विधीयेत **प्रकरणोपपत्तिभ्यां** उपस्थानोद्देशेन आग्नेयीऋग्विधौ उपस्थानस्वरूपे आनर्थक्यशङ्कापरिहारायापूर्वसाधनलक्षणार्थमवश्याश्रयणीयं प्रकरणम् । तच्च प्रकृतानामाग्नेय्यर्चां ग्रहणे अनुगृहीतं भवति । तासां प्रकरणपाठेन हि अपूर्वसाधनत्वं क्लृप्तमिति ॥ ब्रह्मौदनप्राशनादौ "चतुरो ब्राह्मणान् भोजयेत्" इत्यादौ प्रकृतानामेव चतुर्णां ग्रहणे लाघवरूपा उपपत्तिश्च भवतीति ॥ २२ ॥ अपूर्वसाधनलक्षणाया आवश्यकत्वमेवाह—यदि उपस्थानस्वरूपोद्देशेनैव मन्त्रविधिस्स्यादत्र तदा **उपदेशः** स विधिः **अनर्थकश्च** विफल एव **स्यात् फलवता** उद्देश्येन **असम्बन्धात्** अनन्वयात् । **न हि उपस्थानं फलवत्** क्रत्वपूर्वातिरिक्तेन अदृष्टेन फलेन युक्तम् । येन प्रोक्षणमन्त्रवत् उपस्थानमन्त्रस्यापि तददृष्टार्थतयैवोपपत्तेः न प्रकृतक्रत्वपूर्वलक्षणाऽऽवश्यकी भवेत् । तथा सति गौरवापत्तेः । उपस्थानमन्त्रस्य ह्यभिधानफलकस्य करिष्यमाणमण्डपवृत्तिपदार्थानुष्ठानोपयोगितया अवघातमन्त्रवत् दृष्टार्थत्वे लाघवम् । अतः प्रकृतापूर्वलक्षणार्थं प्रकरणपाठोपजीवनावश्यंभावात् प्रकृतग्रहणमेव युक्तम् ॥ २३ ॥ ननु प्रकरणपठितानामाग्नेयीनां स्तोत्रादिप्रयोजनान्तरसम्बन्धेन निराकाङ्क्षत्वात्प्रयोजनसाकाङ्क्षाणामप्रकृतानामेव ग्रहणं युक्तमित्याशङ्कायामाह—**सर्वेषां च**

निखिलानामेव मन्त्राणां वाचस्तोमादौ "सर्वा ऋचः सर्वाणि यजूंषि" इत्यादिना उपदिष्टत्वात् प्रयोजनान्तरसम्बन्धेन निराकाङ्क्षत्वमविशिष्टं प्रकृतानामप्रकृतानां च । अतः पूर्वोक्तलाघवात् प्रकृतग्रहणमेव युक्तमिति ॥ २४ ॥

ज्योतिष्टोमे "आग्नेय्याऽऽग्नीध्रमुपतिष्ठते" इत्यत्र प्रकृताप्रकृतसाधारण्येन ऋङ्मात्रमाग्नीध्रोपस्थानाङ्गं उत प्रकृता एव याः स्तोत्रादावपि विनियुक्तास्ता एवेति चिन्तायां—आग्नेयीपदस्याविशेषेण सर्वपरत्वात् प्रकरणस्य तत्सङ्कोचकत्वानुपपत्तेः अग्निदेवत्यऋङ्मात्रस्यैव विशिष्टविध्युत्तरकालीनविशेषणविधिना आग्नीध्रोपस्थानाङ्गत्वेन विधानम् । न ह्यत्राग्नेयी उद्देश्या येनानर्थक्यभिया व्रीहिवत्प्रकरणेन सङ्कोच्येत तृतीयया उपादेयत्वावगमात् । यत्र चोपस्थानस्वरूपे आनर्थक्याशङ्का तत्र प्रकरणानुप्रवेशेऽपि नाग्नेयीपदस्य प्रकृतपरत्वापत्तिः । न चाग्नेयीपदस्य यौगिकत्वात् तद्धितान्तत्वाद्वा सन्निहितपरत्वं यौगिकानामवयवार्थविशिष्टव्यक्तिमात्रवाचित्वेन सन्निहितवाचित्वे प्रमाणाभावात् । तद्धितस्य तद्वाचित्वेऽपि प्रकृतानामृचामेकप्रकरणस्थत्वेऽपि प्रदेशान्तरस्थत्वेन सन्निहितत्वाभावात् । अस्तु वा प्रकरणसन्निहितस्यैव तद्धितेन ग्रहणं तथाऽपि यत्र न तद्धितश्रवणं यथा ब्रह्मौदनप्राशनादौ "चतुरो ब्राह्मणान्भोजयेत्" इत्यादौ तत्र प्रकृतऋत्विग्ग्रहणे प्रमाणाभावः । न च प्रकृतानामपूर्वार्थत्वस्य क्लृप्तत्वात्केवलं द्वाररूपाग्नीध्रोपस्थानसम्बन्धकरण लाघवादप्रकृतानामुभयकरणे गौरवापत्तेः प्रकृतानियम इति वाच्यम् । प्रकृतग्रहणेऽपि उपस्थानस्वरूपस्य द्वारत्वे तत्कार्यापन्ने ऊहाद्यनापत्तेः अपूर्वसाधनत्वलक्षणाया आवश्यकत्वात् । न हि प्रकृतविषयेऽपि प्रकरणेन वाक्यान्तरकल्पनयाऽपूर्वार्थत्वबोधः त-

थात्वे व्रीहीणां स्वरूपेण द्वारत्वापत्तौ यवानां तदनापत्तेः। अतो लाघवादपूर्वसाधनीभूतस्तोत्रत्वेनैवोद्देश्यता । तावता चापूर्वसाधनीभूतोपस्थानार्थत्वस्यालाभात्स्यैव प्रकृतग्रहणेऽपि तद्विधावपूर्वसाधनलक्षणा । अपि च स्तोत्रापूर्वसाधनत्वक्लृप्तावपि नोपस्थानजन्यज्योतिष्टोमापूर्वसाधनत्वलाभः प्रकृतानाम् । अतस्सर्वासामेव ग्रहणं अप्रकृतानामेव वा कार्यसाकाङ्क्षत्वादिति प्राप्ते—

अप्रकृतग्रहणे तासामपूर्वसाधनीभूतोपस्थानार्थत्वान्यथानुपपत्त्या अपूर्वार्थत्वस्यापि व्रीह्यादिवत् कल्पनीयत्वापत्तेः प्रकृतानां च कार्यान्तरसम्बन्धबोधकविधावेवापूर्वार्थत्वस्य क्लृप्तत्वात् लाघवोपजीविना प्रकृतनियमः । सम्भवति च प्रकृतानामप्याग्नेयीनां वाङ्नियमन्यायेन स्तोत्रद्वारा ज्योतिष्टोमापूर्वसम्बन्धासम्भवेऽपि कार्यान्तरद्वारा सः । आग्नेयीनां स्तोत्रादौ विनियोगेऽपि पार्थक्येन ज्योतिष्टोमप्रकरणे पाठादेव तावदपूर्वसम्बन्धावगमः । अयमेव च ब्रह्मौदनप्राशने ऋत्विक्त्वनियामकन्यायः । न चैवं "आत्रेयाय हिरण्यं ददाति" इत्यत्रापि तन्नियमापत्तिः । ऋत्विक्त्ववदात्रेयत्वस्य नियमेनाप्राप्तेः । अत एव च "अग्निमुपनिधाय स्तुवीत" इत्यादावाक्षेपणीयस्तोत्रापूर्वसम्बन्धस्याहवनीयादावप्राप्तत्वान्न तन्नियमः अपि तु विना वचनमायतनबहिर्भावायोगाल्लौकिकस्यैवेति वक्ष्यते । अतस्सिद्धं लाघवानुरोधेन प्रकृतस्यैव ग्रहणम् ॥ ८ ॥

—o—

## (९)–लिङ्गसमाख्यानाभ्यां भक्षार्थताऽनुवाकस्य ॥ २५ ॥ तस्य रूपोपदेशाभ्यामपकर्षोऽर्थस्य चोदितत्वात् ॥ २६ ॥

ज्योतिष्टोमप्रकरणे भक्षानुवाकसमाख्यया आम्नातस्य "भक्षेहि मा विश दीर्घायुत्वाय शन्तनुत्वाय रायस्पोषाय वर्चसे सुप्रजास्त्वायेहि वसो पुरोवसो प्रियो मे हृदोस्यश्विनोस्त्वा बाहुभ्यां सध्यासं नृचक्षसं त्वा देव सोम सुचक्षा अवख्येषम्"* इत्यादेः "उपहूतस्योपहूतो भक्षयामि"* इत्यन्तस्य **अनुवाकस्य** कृत्स्नस्य **भक्षार्थता** सोमभक्षाङ्गता कुतः **लिङ्गसमाख्यानाभ्यां** लिङ्गं तावत् भक्षणप्रकाशकत्वरूपम् "उपहूतो भक्षयामि"* इत्यन्ते स्पष्टम् । भक्षानुवाक इति समाख्या च वैदिकप्रसिद्धैव । तदिदमुभयं भक्षार्थतां विनाऽनुपपन्नमिति ॥ २५ ॥

एवं पूर्वपक्षे सिद्धान्तमाह—न कृत्स्नस्यास्यानुवाकस्य भक्षणाङ्गता किन्तु—ग्रहणावेक्षणादिषु **तस्य** तदनुवाकस्थस्य तत्तदंशस्य **अपकर्षः** भक्षादुत्कृष्य निवेश एव । ननु ग्रहणादेरविहितत्वात् कथं तत्र तत्तन्मन्त्रनिवेश इत्यत आह—**अर्थस्य** ग्रहणादिरूपस्य **चोदितत्वात्** ग्रहणादेर्भक्षणविध्याक्षेपेण नित्यप्राप्त्यभावेऽपि तत्तन्मन्त्राणां समाख्यासहकृतावान्तरप्रकरणेन भक्षाङ्गत्वेऽवगते तदङ्गत्वेन मान्त्रवर्णिकक्रियाविधिकल्पनोपपत्तेः । तथाकल्पितविधित एव प्राप्तत्वात् ग्रहणादौ लिङ्गेन तत्तन्मन्त्रस्य निवेश एव युक्तः । भक्षानुवाकसमाख्या तु भक्षसम्बन्ध्यनुवाक इति साक्षात्परंपरासाधारण्येनाप्युपपन्ना । अन्यथा समाख्यया लिङ्गबाधापत्तेरिति ॥ तथा च 'सध्यासम्'* इत्यन्तो ग्रहणे । 'नृचक्षसम्'* इत्यादिः 'अवख्येषम्'* इत्यन्तोऽवेक्षणे । 'हिन्व'* इत्यादिः 'अतिगाः'*

* तै. सं. ३-२-५.

इत्यन्तश्च सम्यग्जरणे इति बोध्यम् ॥ प्रयोजनं पूर्वपक्षे ग्रहणादेर्नैयत्याभावः। पाठक्रमेण च मन्त्रपाठान्ते भक्षणम् । सिद्धान्ते तु ग्रहणादेर्नैयत्येन तत्तन्मन्त्रान्तेऽनुष्ठानम्। 'हिन्व'* इत्यस्य च भक्षणान्ते अर्थक्रमानुसारेण पाठ इति बोध्यम् ॥ २६ ॥

सोमे—"भक्षेहि मा विश"* इत्यादिभक्षानुवाक इत्येवं समाख्यातो मन्त्रश्श्रुतः । तत्र यस्तावदस्यांशो भक्षणमेव प्रतिपादयति स तत्रैव विनियुज्यते। ग्रहणावेक्षणसम्यग्जरणप्रतिपादकानां त्वंशानां किं ग्रहणादावेव विनियोगः अथवा भक्षणमन्त्रैकवाक्यतया भक्षण एवेति चिन्तायां ग्रहणादेरविहितत्वेनापूर्वं प्रत्यङ्गत्ववज्जनकत्वस्याप्यभावात् ग्रहणस्यार्थाद्भक्षसाधकत्वेन पक्षप्राप्तावपि "बाहुभ्यां सघ्यासम"* इत्यनेनोक्तस्य बाहुद्वयकरणकस्य ग्रहणस्य कथमप्यप्राप्तेः अवेक्षणस्य च भक्षाजनकत्वेनैवाप्राप्तेः सम्यग्जरणस्य तदनुकूलव्यापारस्य वा भक्षोत्तरभावितया भक्षाजनकत्वेन तेषामपूर्वप्रयोजकत्वस्याप्यभावात् ग्रहणाद्यर्थत्वे आनर्थक्यापत्तेर्भक्षमन्त्रैकवाक्यतया भक्षार्थत्वमेवैषाम् । एवं च समाख्याऽप्युपपन्ना भवतीति प्राप्ते—

ग्रहणादिप्रत्यक्षविध्यभावेऽपि समाख्यासहकृतावान्तरप्रकरणेन भक्षसम्बन्धे तत्तन्मन्त्राणामवगते लिङ्गबलेन मान्त्रवर्णिकग्रहणादिविधिकल्पनया तत्प्राप्त्युपपत्तेस्तदर्थत्वेनैव मन्त्रविनियोगोपपत्तौ न स्वतो निराकांक्षयोर्द्वयोराख्यातपदयोः कथञ्चिदेकवाक्यतां परिकल्प्य गौण्या भक्षार्थत्वकल्पनं शक्त्यैव वा भक्षविशेषणत्वेन ग्रहणादिप्रकाशकत्वकल्पनमुपपत्तिमत् । न चैवमपि सम्यग्जरणस्य कृत्यसाध्यत्वान्न विधिसंभवः । सम्यग्जरणानुकू-

* तै. सं. ३-२-५.

लव्यापारस्यासनविशेषस्यैवानुष्ठेयस्य विधेयत्वात्। वमनविरेकनिमित्तप्रायश्चित्ताम्नानाच्च सम्यग्जरणपर्यन्तमेव भक्षणे प्रतिपत्तिरिति तस्य भक्षोपयोगिता॥ ९॥

---

## (१०)—गुणाभिधानान्मन्द्रादिरेकमन्त्रस्स्यात्तयोरेकार्थसंयोगात्॥ २७॥

पूर्वाधिकरणनीत्या "मन्द्राऽभिभूतिः केतुर्यज्ञानां वाग्जुषाणा सोमस्य तृप्यतु"* इत्ययं मन्त्रस्तदनुवाकगतः तृप्तौ लिङ्गेन विनियुज्यतामिति पूर्वपक्षे सिद्धान्तमाह—तृप्तेरविहितत्वेन "अल्पं भक्षयति" इत्यादिविधिविरोधेन तद्विधिकल्पनाया असम्भवेन च तत्र लिङ्गेन विनियोगासम्भवात् **मन्द्रादिः** 'मन्द्राऽभिभूतिः'* इत्यादिः 'भक्षयामि'* इत्यन्तः भक्षाङ्गतया **एकमन्त्रः** एव **स्यात् गुणाभिधानात्** गुणस्य तृप्तिरूपस्य विशेषणस्य प्राशस्त्यस्य वा "तृप्यतु"* इत्यन्तेन भक्षयत्येकवाक्यतापन्नेन अभिधानात् **तयोः** "तृप्यतु"* "भक्षयामि"* इत्यन्तयोर्वाक्ययोः **एकार्थसंयोगात्** विशिष्टैकार्थवृत्तित्वोपपत्तेः॥ २७॥

तस्मिन्नेवानुवाके 'मन्द्राऽभिभूतिः'* इत्यादिः 'तृप्यतु' इत्यन्तः तृप्तौ विनियोक्तव्यः ग्रहणादाविवेति प्राप्ते—

ग्रहणादिवदनुष्ठेयत्वाभावात्तृप्तेरप्रकाश्यत्वम्। न च सम्यग्जरणवत् तृप्त्यनुकूलव्यापाररूपभक्षणबाहुल्याक्षेपकत्वं "अल्पं भक्षयति" इति वचनविरोधेन तत्कल्पनानुपपत्तेः। अत एव तृप्तेर्भक्षणेनाजननाच्च तस्यास्स्वर्गवज्जन्यत्वमात्रेण प्रकाश्यत्वोपप-

---

* तै. स. ३-२-१.

त्तिः । अतश्च लिङ्गविनियोगासम्भवात्सत्यप्याख्यातद्वयस्य स्वतो निराकाङ्क्षत्वे इतिकरणाध्याहारेण तृप्यत्वित्येतदर्थं भक्षयामीत्येवं भक्षमन्त्रैकवाक्यतां प्रकल्प्य स्वार्थविशिष्टभक्षणप्रकाशकत्वमेवाङ्गीकर्तव्यम् । स्वार्थश्च श्रुत्या तृप्तिरेव तत्प्रकाशनांशे चादृष्टार्थत्वम् । अथ वा लक्षणया भक्षणस्तुतिः । सर्वथा न लिङ्गाद्विनियोगः ॥ १० ॥

---

## (११)-लिङ्गविशेषनिर्देशात्समानविधानेष्वनैन्द्राणाममन्त्रत्वम् ॥ २८ ॥ यथादैवतं च[1] तत्प्रकृतित्वं हि दर्शयति ॥ २९ ॥

तस्मिन्नेव मन्त्रे 'इन्द्रपीतस्य'[2] इति **लिङ्गविशेषनिर्देशात् समानविधानेषु** तुल्यप्रमाणप्रापिताङ्गकलापेषु अत एव प्रकृतिविकारभावरहितेषु ऐन्द्रानैन्द्रग्रहयागाभ्यासेषु मध्ये **अनैन्द्राणां** ऐन्द्रातिरिक्तानां मैत्रावरुणादिग्रहयागाभ्यासानां सम्बन्धिनि भक्षणे **अमन्त्रत्वं** निरुक्तमन्त्रानङ्गकत्वं कुतः **लिङ्गविशेषनिर्देशात्** 'इन्द्रपीतस्य'[2] इति सोमविशेषणस्य निर्देशात् तस्य चानैन्द्रेऽनन्वयात् । इत्येकः पूर्वः पक्षः ॥२८

अन्यं पूर्वपक्षमाह—अनैन्द्रेष्वपि **यथादैवतं** मित्रावरुणपीतस्येत्यादिरीत्या ऊहं कृत्वा भक्षणं कार्यम् । **हि** यतः अनैन्द्राणां यागाभ्यासानां **तत्प्रकृतित्वं** ऐन्द्रयागाभ्यासप्रकृतिकत्वं **दर्शयति** सूचयति "इन्द्राय त्वा वसुमते सोमं मिनोमि" इत्यादिर्मन्त्रः । तस्य हि मन्त्रस्य लिङ्गादैन्द्रप्रदानीयसोममानाद्यङ्गत्वं स्फुटं तदनुरोधेन च तत्प्रकाश्यस्य नानादेस्तादृशमानादिसंस्कार्यस्य सोमस्य च ऐन्द्रप्रदानमात्राङ्गत्वम् । तथा

---

[1] "यथादैवतं वा" इत्यपि पाठः. [2] तै. सं. ३-२-५.

च सोमधर्माणामभिषवादीनां तत्संवलितानां दीक्षणीयादीनां च तन्मात्रार्थत्वमिति अनैन्द्रप्रदानानां द्रव्यादिधर्मसाकाङ्क्षाणामव्यक्तत्वसामान्यादैन्द्रप्रदानविकृतित्वोपपत्तेरनिदेशप्राप्तस्य भक्षमन्त्रस्य समवेतार्थत्वादूहन्यायेनोहितस्य तत्र प्रयोगो युक्त एवेति ॥ एवं पूर्वपक्षे स्थित एव विचारान्तराणि प्रवर्त्यन्ते एतत्पादीयोपान्त्यसूत्र यावत् । अन्तिमसूत्रं तु एतदधिकरणीयसिद्धान्तपरमिति वेदितव्यम् ॥ २९ ॥

भक्षमन्त्रः किं इन्द्रदेवत्याभ्यास एवाङ्गं तद्भिन्नाभ्यासेष्वमन्त्रकं भक्षणं उत तेषु ऊहेन उतानूहेन वेति चिन्तायां— प्रकरणात् भक्षमन्त्रस्य सर्वप्रदानार्थत्वावगमेऽपि 'इन्द्रपीतस्य'* इति लिङ्गेन इन्द्रदेवत्यप्रदानमात्राङ्गत्वम् । न चेन्द्रेण यस्मिन्सवने पीत इति बहुव्रीहिस्वीकारेण सर्वसोमसम्बन्धिसवनाविशेषणत्वाङ्गीकारात् लिङ्गाविरोध इति वाच्यम् । पदद्वयलक्षणापादकलक्षणाननुगतव्यधिकरणबहुव्रीह्यपेक्षया पूर्वपद एव सम्बन्धिलक्षणापादकस्य लक्षणानुगतस्य इन्द्रेण पीतः स्वीकृत इत्येवं तत्पुरुषस्यैव लघुभूतत्वात् । विद्यते च देवतायाः प्रतिग्रहाभावेऽपि "देवस्वं न गृह्णीयात्" इत्यादिवचनबलेन सम्बन्धविशेषरूपस्स्वीकारः । न च स्थूलपृषतीपदवत् स्वरादेव बहुव्रीहित्वनिर्णयः तद्वदिह समासस्य लक्षणानुगतत्वाभावेन स्वरस्यैव बाध्यत्वात् । यथा च तत्पुरुषपक्षेऽपि स्वराविरोधस्तथा कौस्तुभ एवोपपादितम् । अतश्च लिङ्गादिन्द्रदेवत्यप्रदान एव मन्त्रस्याङ्गत्वावगमात् अनैन्द्राणां च कर्मण एकत्वेन प्रकृतिविकारभावासम्भवादूहानुपपत्तेः 'व्रीहीणां मेध'† इति वदनैन्द्राणाममन्त्रकं भक्षणमित्याद्यः पक्षः ॥

* तै. सं. ३-२-९. † तै. ब्रा. ३-७-९.

द्वितीयस्तु—सत्यपि कर्मैकत्वे प्रदानानां भिन्नत्वादविरुद्धः प्रकृतिविकारभावः । 'इन्द्राय त्वा वसुमते' इत्यादिमानग्रहणमन्त्राणां च लिङ्गादैन्द्रमात्रविषयत्वात्तदनुरोधेन च तत्प्रकाश्ययोर्मानग्रहणयोस्तत्संस्कार्यस्य सोमस्य तत्संस्काराणां चाभिषवादीनां तन्मिश्राणां चाङ्गान्तराणामैन्द्रमात्रविषयत्वप्रतीतेः इतरेषामधर्मकाणां युक्तोऽतिदेशः । भवति चाङ्गवशेनापि प्रधानसङ्कोचः अन्नाद्यनुरोधेन क्रतूनामाहिताग्निविषयत्वात् । अतश्च प्रकृतावपूर्वीयदेवताप्रकाशकस्य भक्षमन्त्रस्य कार्यमुखेन विकृतावागतस्य भवत्येव यथादेवतमूह इति ॥ ११ ॥

---

एवं स्थिते अन्तरा चिन्ता—

## (१२)—पुनरभ्युन्नीतेषु सर्वेषामुपलक्षणं द्विशेषत्वात् ॥ ३० ॥ अपनयाद्वा पूर्वस्यानुपलक्षणम् ॥ ३१ ॥ अग्रहणाद्वाऽनपायस्स्यात् ॥

अवस्थिते ऊहपूर्वपक्षे एव कृत्वाचिन्तया ऊहितमन्त्रविषयको विशेषो विचार्यते । तत्र प्रातस्सवने तृतीयसवने च सवनमुखीयेषु सर्वेषु चमसेषु इन्द्रार्थे सकृद्धुतेषु ये तावद्धोतृब्रह्मोद्गातृयजमानानां वैकल्पिकसदस्ययुक्तानां मध्यतःकारिणां चमसास्तेषु अनुवषट्कारेऽपि हुतेषु पश्चाद्धोतृकाणां मैत्रावरुणब्राह्मणाच्छंसिपोतृनेष्टृच्छावाकाग्नीध्राणां ये चमसास्तेषु द्रोणकलशात्सोमान्तरं सशेषेष्वेवाभ्युन्नीय तैर्मैत्रावरुणादिदेवतान्तरेभ्यो हुत्वा भक्ष्यते । तत्र हुतेषु चमसेषु सशेषेष्वेवाभ्युन्नीतास्सोमाः पुनरभ्युन्नीता इत्युच्यन्ते । तेषु **पुनरभ्युन्नीतेषु द्विशेषत्वात्**

पूर्वहोमशेषस्यैन्द्रतया उत्तरस्य च मित्रावरुणादिदेवत्यतया देवताद्वयशेषत्वात् **सर्वेषां** पूर्वदेवताया उत्तरदेवतायाश्च **उपलक्षणं** इन्द्रमित्रावरुणपीतस्येत्यादिरीत्या कार्यम् ॥ ३० ॥ एवं सिद्धान्ते पूर्वपक्षी तावदाह—**पूर्वस्य** पूर्वप्रदानाङ्गस्येन्द्रस्य **अनुपलक्षणं वा** मित्रावरुणपीतस्येत्यादिरीत्योहेन अनुपलक्षणमेव **अनपायात्** होमकाले तावत्संसृष्टत्वादुभयोरप्याश्रावणप्रत्याश्रावणादिभिरुत्तरदेवतासम्बन्धावसायेन पूर्वदेवतासम्बन्धापगमावगमात् ॥ ३१ ॥ **अनपायो वा** शेषस्य पूर्वदेवतासम्बन्धानपगम एव **स्यात्** तस्योत्तरदेवतार्थं **अग्रहाणात्** शेषे स्थिते सत्येव हि "ऐन्द्रे समाश्लेषयेत्"* इत्युत्तरदेवतार्थं द्रोणकलशात्सोमरसग्रहणं विधीयते । एवं सति शेषस्योत्तरदेवतासम्बन्धानवगमान्न तन्मूलकः पूर्वदेवतापनय इतीन्द्रोऽप्युपलक्षणीय एवेति ॥ ३२ ॥

**सवनमुखीयेषु चमसेषु ऐन्द्रेषु सर्वेषु हुतेषु ये होतृकाणां मैत्रावरुणादीनां चमसास्तेष्वभक्षितेष्वेव पुनस्सोमोऽभ्युन्नीय देवतान्तरेभ्यो मित्रावरुणादिभ्यो हुत्वा भक्ष्यते । तत्र पूर्वप्रदानदेवताभूत इन्द्रोऽप्युपलक्षणीयो न वेति चिन्तायां—उन्नयनकाले न देवतान्तरोद्देशः येनोन्नीतस्यैव तत्सम्बन्धात्पूर्वशेषस्य पूर्वदेवतासम्बन्धो नापेयात् । प्रदानकाले तु संसृष्टस्यैव देवतान्तरसम्बन्धात् पूर्वदेवतासम्बन्धापनयप्रतीतेर्नोपलक्षणमिति प्राप्ते—**

**उन्नयनकाले देवतासङ्कल्पाभावेऽपि सामर्थ्यादेवोन्नयनस्य करिष्यमाणकर्मार्थत्वप्रतीतेः पूर्वशेषस्य संसृष्टत्वेऽप्येतदर्थत्वे प्रमाणाभावादनपनीतसम्बन्धा पूर्वदेवताऽप्युपलक्षणीया ॥ १२ ॥**

---

*तै. सं. ३-१-३.

## (१३)–पात्नीवते तु पूर्ववत् ॥ ३३ ॥ ग्रहणाद्वाऽपनीतं स्यात् ॥ ३४ ॥

ऐन्द्रवायवादिद्विदेवत्यशेषार्धमादित्यस्थालीस्थसोमे प्रातस्सवने समवनीय तृतीयसवने संसृष्टादित्यस्थालीस्थसोमेन सह पूर्वगृहीताग्रयणस्थालीस्थस्सोमः पात्रान्तरे कृत्वा पुनराग्रयणस्थाल्यां गृह्यते । पश्चाच्च 'उपांशुपात्रेण पात्नीवतमाग्रयणाद्गृह्णाति'* इति श्रूयते । तस्मिन् **पात्नीवते** पत्नीवद्देवताके आग्रयणाद्गृहीते सोमे संसृष्टतया विद्यमानस्य द्विदेवत्यशेषार्धस्य **पूर्ववत्** पूर्वाधिकरणनीत्या पूर्वदेवतासम्बन्धानपायात् इन्द्रवाय्वादीनामप्युपलक्षणं कार्यम् ॥ ३३ ॥ एवं पूर्वपक्षे सिद्धान्तमाह— **ग्रहणात्** आग्रयणापादानकग्रहणस्य पत्नीवद्देवतार्थतया विधानात् आग्रयणात्प्रच्युतस्य सर्वस्यैव पत्नीवद्देवतासम्बन्धप्रतीतेः पूर्वं दैवतं **अपनीतं** एव **स्यात्** ततश्च पूर्वदेवता नोपलक्षणीयेति ॥ ३४ ॥

**द्विदेवत्यानामैन्द्रवायवादीनां शेषा आदित्यस्थाल्यामागत्य ततोऽप्याग्रयणस्थालीमागच्छन्ति । पात्नीवतश्चाग्रयणाद्गृह्यते तस्मिन् भक्ष्यमाणे द्विदेवत्या अप्युपलक्षणीयाः पूर्ववदाग्रयणस्यैव पत्नीवद्देवतासम्बन्धादिति प्राप्ते—**

**"पात्नीवतमाग्रयणाद्गृह्णाति"* इत्यपादानत्वश्रवणात्तस्मादपेतस्य पात्नीवतत्वम् । न त्वाग्रयणस्यैव आग्रयणवच्चानाग्रयणमपि संसृष्टत्वात् तस्मादपेतमिति द्विदेवत्यस्यापि देवतान्तरसम्बन्धापनयात् भूतपूर्वगतया च प्रकृतावनुपलक्षणान्नोपलक्षणीयाः ॥१३॥**

---

* तै. सं. ६-५-८.

## (१४)—त्वष्टारं तूपलक्षयेत्पानात् ॥ ३५ ॥ अतुल्यत्वात्तु नैवं स्यात् ॥ ३६ ॥

तस्मिन्नेव पात्नीवतयागाङ्गभूतभक्षमन्त्रे **त्वष्टारं तूपलक्षयेत्** त्वष्टृदेवतां त्वष्टृपीतस्येत्यादिरीत्या उपलक्षयेदेव **पानात्** "अग्ना इ पत्नीवास्सजूर्देवेन त्वष्ट्रा सोमं पिब स्वाहा"* इत्याध्वर्यवमन्त्रे अग्नेरिव त्वष्टुरपि पानावगमेन देवतात्वनिर्धारणात् ॥ ३५ ॥ सिद्धान्तमाह—**एवं** त्वष्टुरुपलक्षणं **न तु** नैव **स्यात् अतुल्यत्वात्** त्वष्टुः अग्निना तौल्यविरहात् । उपदर्शिते ह्यग्नेः पातृत्वं श्रुत्या निर्दिश्यते इति युक्तं देवतात्वम् । त्वष्टुस्तु सहभावमात्रमवगम्यमानं "सहैव दशभिः पुत्रैः" इत्यादाविव पानक्रियान्वयमन्तरा समीपस्थितिमात्रेणाप्युपपद्यत इति न तस्य देवतात्वे किञ्चित्प्रमाणमिति न त्वष्टुरुपलक्षणं कार्यमिति ॥ ३६ ॥

**पात्नीवत एव "अग्ना इ पत्नीवास्सजूर्देवेन त्वष्ट्रा सोमं पिब" इति मन्त्रात्त्वष्टुरपि देवतात्वम् । अतस्सोऽप्यग्निवदुपलक्षणीय इति प्राप्ते—**

**युक्तमग्नौ पत्नीवच्छब्दस्य यौगिकत्वेन विशेष्यसाकाङ्क्षस्य सामानाधिकरण्येन विशेष्यग्राहकत्वं त्वष्टुस्तु तृतीयया सहभावमात्रं प्रतीयते । न चासौ पानक्रियान्वयाव्यभिचारी "सहैव दशभिः पुत्रैर्भारं वहति गर्दभी" इत्यादौ व्यभिचारात् । सत्यपि पाने देवतात्वस्याप्रामाणिकत्वाच्च । अतः 'पात्नीवतम्'† इति निरपेक्षतद्धितेन पत्नीवतोऽग्नेरेव देवतात्वमिति स एवोपलक्षणीयः न त्वष्टा ॥ १४ ॥**

---

*तै. सं. १-४-२७. †तै. सं. ६-५-८.

## (१५)—त्रिंशञ्च परार्थत्वात् ॥ ३७ ॥

तस्मिन्नेव पात्नीवतयागाङ्गभक्षमन्त्रे त्रिंशञ्च त्रयस्त्रिंशद्देवता अपि नोपलक्षणीयाः "एभिरग्ने सरथं याह्यर्वाङ्नाना रथं वा विभवो ह्यश्वाः। पत्नीवतस्त्रिंशतं त्रींश्च देवाननुष्वधमावह मादयस्व" इति मन्त्रवर्णे त्रयस्त्रिंशद्देवानां माद्यलोक्तेः परार्थत्वात् अन्यार्थतया देवतात्वकल्पकत्वाभावात्। तत्र हि यजमानकर्तृकमादनकर्मत्वं न तेषामुच्यते किन्तु अग्निकर्तृकमादनकर्मत्वमेव। तदपि च यजमानमादितोऽग्निस्स्वामित्वादन्यानपि मादयतीत्यग्नेरेव स्वामित्वख्यापनेन देवतात्वदार्ढ्याय भवतीति ॥

तस्मिन्नेव याज्यामन्त्रे "एभिरग्ने स रथं याह्यर्वाङ्नाना रथं वा विभवो ह्यश्वाः। पत्नीवतस्त्रिंशतं त्रींश्च देवाननुष्वधमावह मादयस्व" इत्यत्र त्रयस्त्रिंशतां देवतानां पत्नीवच्छब्दसामानाधिकरण्यादग्निवद्विशेष्यत्वोपपत्तेर्मदश्रवणाञ्च पानोपपत्तेर्देवतात्वावगमात्तेषामप्युपलक्षणं मन्यते। अग्नेर्मोदयितृत्वश्रवणात्तेऽग्निदत्तेन कामं माद्यन्तु यजमानस्त्वग्नय एव ददातीत्यवगमात्तस्यैव देवतात्वं न त्रयस्त्रिंशानाम्। एवं च 'पात्नीवतम्'* इति तद्धितोऽप्यसति बहुवचनग्राहकप्रमाणे एकवचनेनैव विगृहीतो भवतीत्यपि लाघवम्। अतो नोपलक्षणीयास्ते ॥ १५ ॥

——o——

## (१६)—वषट्कारश्च कर्तृवत् ॥ ३८ ॥

"अग्नयेऽनुयजति" इति विहितेऽनुवषट्कारयागे "सोमस्याग्ने वीहीत्यनुयजति" इत्यनेन मन्त्रविधिना मान्त्रवर्णिकसोमाख्यद्रव्ये सम-

*तै. सं. ६-५-८.

र्पिते धर्मान्तराकांक्षायां प्रकरणात् ज्योतिष्टोमाङ्गभूतेऽप्यस्मिन् यागे वैमृधवत् सोमद्रव्यकत्वसादृश्यात्तदीयविध्यन्तप्राप्तेरतिदेशेन यागीयसोमभक्षणे तन्मन्त्रे च प्राप्ते अनैन्द्रप्रदानान्तरवत्तदीयदेवताभूताग्न्युपलक्षणमप्यावश्यकमिति बहिः पूर्वपक्षे सिद्धान्तमाह—**वषट्कारश्च** अनुवषट्कारयागीयदेवताभूताग्निरपि नोपलक्षणीयः अनुवषट्कारयागस्य पूर्वयागीयसोमप्रतिपत्तिभूतस्य कृत्स्नविधानतया अतिदेशाभावात्। तद्देवतायास्त्वयागाङ्गभूतद्रव्यपातृत्वसत्त्वेऽपि प्राकृतकार्यापत्त्यभावेनोहासम्भवात्। **कर्तृवत्** यथा अध्वर्युणा पाने क्रियमाणे पूर्वं होत्रा पीतोपि न होतृपीतस्येत्येवमुपलक्ष्यते तथेहापीति ॥

**अनुवषट्कारयागदेवताया अग्नेर्देवतात्वस्य निस्सन्दिग्धत्वादुपलक्षणत्वं मन्यन्ते। प्रकृतौ त्वसौ विद्यमानाऽपि नोपलक्षिता अनुवषट्कारयागस्य सोमयागात्कर्मान्तररूपस्य पूर्वयागीयसोमप्रतिपत्तिभूतस्य कृत्स्नविधानत्वेनातिदेशाकल्पकत्वात् उपदेशेन कथंचिद्भक्षणप्राप्तावपि "व्रीहीणां मेध"* इत्यादिवदैन्द्रमन्त्रस्य प्राप्त्यनुपपत्तेश्च। अतश्च विकृतावपि प्रधानदेवतैव तत्कार्यापन्नोपलक्षणीया नानुवषट्कारदेवता ॥ १६ ॥**

# (१७)-छन्दःप्रतिषेधस्तु सर्वगामित्वात् ॥ ३१ ॥

इन्द्रपीताधिकरणे य आद्यपूर्वपक्षवादी स द्वितीयपूर्वपक्षवादिनोक्तमूहपक्षमधुना दूषयति—यः खलु षोडशिन्यतिरात्रे च पितृदेवत्ये "तृतीयस्य सवनस्य जगतीछन्दसः"† इति मन्त्रे "अनुष्टुप्छन्दस इति भक्षमन्त्रं सन्नमति" इति **छन्दःप्रतिषेधः** अनुष्टुप्छन्दःपदोहरूपः जगतीछन्दःपदप्रतिषेधः ऊहपक्षसाधकतयाऽभिमतः सः **तु** अ-

* तै. ब्रा. १-७-६. † तै. सं. १-२-६.

नैन्द्रेषूहाभावेऽप्युपपन्नः अप्राप्तस्यैवानुष्टुप्छन्दःपदविशिष्टस्योहस्य तत्र विधानोपपत्तेः । अतोऽभिषवादीनां धर्माणां **सर्वगामित्वात्** ऐन्द्रानैन्द्रसाधारणत्वात्प्रकृतिविकारभावाभावेनानैन्द्रेष्वनूहादमन्त्रकमेव भक्षणम् ॥

**एवमूहं विचार्याधुनाऽऽद्यपूर्वपक्षवादी पुनस्तं दूषयति । न ह्यूहः कर्मण एकत्वात् अभ्यासानामपि फलचमसवदसमानविधानत्वे प्रमाणाभावाच्च । न हि मानग्रहणमन्त्रानुरोधेन तदुद्देशानां सङ्कोचो युक्तः । अग्निविद्ययोस्तु स्वस्वविधिप्रयुक्तत्वेन क्रतुविधिप्रयुक्तत्वाभावाद्युक्तः परप्रयुक्ताग्निविद्योपजीवकतया क्रत्वधिकारसङ्कोचः । अतो मानग्रहणमन्त्रावेव काममैन्द्रमात्रप्रदानविषयौ भवेतां न तु मानाद्यपि । वस्तुतस्तु—'वसुमतः'* इत्यनेन देवतान्तरस्याप्यभिधानात्तयोरपि सर्वार्थत्वमेव । अतो भक्षमन्त्रस्यैव ऐन्द्रप्रदानमात्रविषयत्वात् अनैन्द्राणाममन्त्रकं भक्षणम्॥**

---

## (१८)—ऐन्द्राग्ने तु लिङ्गभावात्स्यात् ॥ ४० ॥ एकस्मिन्वा देवतान्तराद्विभागवत् ॥ ४१ ॥

**ऐन्द्राग्ने** "ऐन्द्राग्नमृतुपात्रेण गृह्णाति" इत्याम्नातस्य ऐन्द्राग्नयागाभ्यासस्य शेषभक्षणे **तु लिङ्गभावात्** द्वाभ्यामिन्द्राग्निभ्यां पीतेऽपि सोमे इन्द्रपीतत्वरूपस्य लिङ्गस्य सद्भावात् मन्त्रस्स्यादेव ॥ ४० ॥ एवं पूर्वपक्षे सिद्धान्तमाह—**एकस्मिन् वा** एकमात्रदेवताकयागीयशेषभक्षण एव स मन्त्रः न त्वैन्द्राग्ने तत्र **देवतान्तरात्** अग्निरूपस्य देवतान्तरस्यापि सत्त्वात् । **विभागवत्** "आग्नेयं चतुर्धा करोति" इत्याम्नातचतुर्धाकरणवत् । यथा हि तत्र तद्धितान्तेन आग्नेयपदेनाग्निपर्याप्त-

---

*तै. सं. ३-२-१.

देवतात्वकत्वस्य प्रतिपादनात् व्यासज्यवृत्तिदेवतात्वके अग्नीषोमीयादौ चतुर्धाकरणं न प्रवर्तते तथाऽत्राप्यविग्रहाया देवताया मुख्यस्य पानादेरसम्भवादिन्द्रपीतपदे देवस्वादिपदानुसारेण पीतपदेन स्वीकारं लक्षयित्वा इन्द्रपर्याप्तनिरूपकताकस्वीकारस्यैव प्रतिपादनात् व्यासज्यवृत्तिदेवतास्थले च व्यासज्यवृत्तिनिरूपकताकस्यैव स्वीकारस्य कल्पनात् ऐन्द्राग्ने इन्द्रपीतपदार्थायोगेन न शेषभक्षणे मन्त्रः प्रयोज्य इति ॥ ४१ ॥

एवं स्थिते पुनश्चिन्ता—ऐन्द्राग्नेऽप्यभ्यासे "इन्द्रपीतस्य"* इत्येवं समन्त्रकं भक्षणम् । त्यागस्य व्यासज्यवृत्तित्वेऽपि पानस्य पीतपदलक्षितस्वीकारस्य वा प्रत्येकवृत्तित्वेन डित्थमातृवदेकेन व्यपदेष्टुं शक्यत्वात् त्यागस्य हुताहुतसमुदायविषयत्वेन भक्ष्यमाणाहुतावयवमात्रविषयत्वाभावात् न पीतपदेन त्यक्तत्वलक्षणा । अतश्चतुर्धाकरणाधिकरणविषयत्वाभावात्तस्यापि समन्त्रकं भक्षणमिति प्राप्ते—

सत्यं पीतपदेन स्वीकारलक्षणा पानस्य नवमे निषेत्स्यमानत्वात् त्यागस्य त्वदुक्तरीत्या लक्षयितुमशक्यत्वाच्च । स्वीकारस्य तु देवस्वादिपदावलम्बनतया कल्प्यमानस्य हुतावशिष्ट एव कल्पनीयत्वाद्युक्ता लक्षणा । तथाऽपि तस्य लाघवेन व्यासज्यवृत्तिन एव कल्पनात् प्रत्येकवृत्तित्वे प्रमाणाभावात् चतुर्धाकरणाधिकरणविषयत्वोपपत्तेर्न तस्य समन्त्रकं भक्षणम् ॥ १८ ॥

---

## (१९)—छन्दश्च देवतावत् ॥ ४२ ॥ सर्वेषु वाऽभावादेकच्छन्दसः ॥ ४३ ॥

---

* तै. सं. ३.२.५.

छन्दश्च "गायत्रछन्दसः"* इत्यादिपदमपि यत्र स्तोत्रशस्त्रादौ केवलगायत्रछन्दस्कैव ऋक् तत्रैव केवलगायत्रछन्दस्के यागे समन्वेति देवतावत् यथा केवलेन्द्रदेवताक एव यागे इन्द्रपीतपदं समन्वेति नान्यसहितेन्द्रदेवताके। तथा च भक्षमन्त्रः केवलगायत्रछन्दस्क एव यागे स्यात् न त्वन्यत्रेति ॥ ४२ ॥ एवं पूर्वपक्षे सिद्धान्तमाह—**सर्वेषु वा** सर्वेष्वेव छन्दोन्तरसहितगायत्रछन्दस्केष्वपि यागेषु भक्षमन्त्रः प्रवर्तते **एकच्छन्दसः** एकमात्रछन्दस्कस्य क्रतोः **अभावात्** असत्वात्। तथा च अप्रसिद्ध्या गायत्रछन्दःपदेन छन्दोन्तरव्यावृत्तेर्बोधनासम्भवेन गायत्रछन्दस्सम्बन्धमात्रस्यैव बोधनीयतया नानाच्छन्दस्केऽपि यागे युक्त एव भक्षमन्त्र इति ॥ ४३ ॥

**तत्रैव मन्त्रे "गायत्रछन्दसः"* इति श्रुतम्। तच्चेदं सोमविशेषणमेवास्मिन्पूर्वपक्षे। अतश्च केवलमेव यत्रैन्द्रप्रदाने गायत्रीछन्दो यथा बृहस्पतिसवादौ "गायत्रमेतदहर्भवति" इति श्रुतः तत्रैवास्योत्कर्षः न तु ज्योतिष्टोमे निवेशः केवलगायत्रीछन्दस्कप्रदानाभावात्। न च सामान्यसम्बन्धबोधकप्रमाणाभावः इन्द्रदेवत्यत्वप्रातस्सवनादीनामन्यत्र लोके अभावेन पारिशेष्यादेव बृहस्पतिसवोपस्थितिसम्भवादिति प्राप्ते—**

**बृहस्पतिसवेऽपि सवनमुखीये ऋगन्तरस्य पठितत्वात् "गायत्रमेतत्" इत्यादेश्च भूम्नाऽपि व्याख्यानोपपत्तेः प्रकृतौ विकृतौ वा केवलगायत्रछन्दस्कत्वाभावान्नित्यसापेक्षत्वेन समासोपपत्तेः प्रकृतावेव निवेशः। वस्तुतस्तु—गायत्र्याः प्रत्येकमेव साधनत्वात्सत्यपि ऋगन्तरे न समासभङ्गाशङ्काऽपि ॥१९॥**

——o——

*तै. सं. ३-२-५.

**(२०)–सर्वेषां त्वैकमन्त्र्यमैतिशायनस्य भक्तिपानत्वात्सवनाधिकारो हि ॥ ४४ ॥**

साम्प्रतं प्रागुपक्रान्तस्येन्द्रपीताधिकरणस्य सिद्धान्तमाह–**सर्वेषां** ऐन्द्राणामनैन्द्राणां च यागानां **ऐकमन्त्र्यं तु** एकरूपोऽविकृतो यो भक्षमन्त्रः तद्वत्त्वमेव **ऐतिशायनस्य** महार्षेरनुमतम् । न तूहेन अमन्त्रकं वा भक्षणम् ॥ **हि** यतः इन्द्रपीतशब्दः **सवनाधिकारः** इन्द्रेण पीतं यस्मिन् इन्द्रः पीतो वा यस्मिन् सवने इत्येवं बहुव्रीहिस्सन् गायत्रछन्दस इत्यादिवत् सवनबोधकः अन्यथा इन्द्रेण पीत इति तत्पुरुषस्य स्वीकारे **भक्तिपानत्वात्** भक्तिः लक्षणा पाने यत्र तत्त्वात् पानस्य भाक्तत्वप्रसङ्गात् । तथा च इन्द्रकर्तृकपानकर्मत्वं भक्ष्यमाणसोमस्यासम्भवीति पाधातुना त्यागं लक्षयित्वा इन्द्राय त्यक्तत्वमिन्द्रपीतपदार्थो वाच्य इति पानस्य लाक्षणिकतादोषः । इन्द्रेण पीतं यस्मिन् सवन इत्यादिबहुव्रीहौ तु इन्द्रकर्तृकपानाधिकरणत्वं सवने तत्सम्बन्धित्वं च भक्ष्यमाणसोमे भासमानं यथाश्रुतमेवोपपद्यते इति अनैन्द्राभ्यासीयसोमेऽपि लिङ्गस्याबाधात्समन्त्रकमेव भक्षणं कार्यमिति दिक् ॥ ४४ ॥

इति सारबोधिन्यां जैमिनिसूत्रवृत्तौ
तृतीयस्य द्वितीयः.

---

**स्थितादुत्तरं–नेन्द्रपीतपदे तत्पुरुषः अपितु बहुव्रीहिरेव । तत्पुरुषेऽपि पूर्वपदे सम्बन्धिलक्षणा पीतपदे च स्वीकृतावयवलक्षणा । यद्यपि चेयं सिद्धान्तिनोपि तुल्या तथाऽप्यवयवस्वीकारस्यावयविस्वीकारसापेक्षितत्वेन विलम्बोपस्थितिकत्वान्न तुल्यत्वम् । अतश्च पीतपदे अर्शाद्यच्प्रत्ययं मत्वर्थीयं कृत्वा पा-**

धातुना चावयवगतमेव तत्सम्बन्धिस्वीकारं लक्षयित्वा इन्द्रः पीतः स्वीकारकर्ता यस्मिन् सवने इति व्युत्पत्त्या समानाधिकरणबहुव्रीहिरङ्गीक्रियते । प्रकरणविशेषाच्च निर्णयः । अतस्सर्वस्यैव सोमस्योक्तविधप्रातस्सवनादिसम्बन्धित्वादनैन्द्राणामपि समन्त्रकमेवाविकारेण भक्षणम् । यदि तु पीतपदस्य पूर्वनिपातापत्तिमाशङ्क्येत तदाऽस्तु इन्द्रे पीतं पानमस्मिन्निति सप्तमीबहुव्रीहिः । यदि तु निष्ठान्तत्वेन पूर्वनिपातापत्तिरवशिष्टेति विभाव्यते तदा पीतपदस्याकृतिगणत्वेन आहिताग्न्यादिगणान्तःपातमङ्गीकृत्य "वाऽऽहिताग्न्यादिषु" इति सूत्रेणेन्द्रशब्दस्य पूर्वनिपातः । अथ वाऽस्तु अयं तत्पुरुष एव तदाऽपि तु लक्षणया सोमसम्बन्धिसवनपरत्वम् । न च तस्यां प्रमाणाभावः; तैत्तिरीयशाखायां प्रातस्सवनादिभेदेन इन्द्रपीतनराशंसपीतपितृपीतपदानां त्रिवारं पाठस्यैव प्रमाणत्वात् । सोममात्रपरत्वे हि तत्तत्प्रदानेषु लिङ्गादेवेन्द्रपीतादिपदानां सकृत्पठितानामेव पाठोपपत्तौ तत्र योग्यतयैव प्रातस्सवनादिपदानां विभागेन विशेषणत्वोपपत्तिः । अतस्तेषां प्रातस्सवनादिभेदेन त्रिवारं पाठ एव वैयर्थ्यभिया सवनपरत्वलक्षणातात्पर्यग्राहकः । अतश्चेन्द्रपीतादिविशेषणत्रययुक्तस्य तत्तत्सवनस्य सम्बन्धिनं सोममन्यदेवत्यमपि भक्षयामीति मन्त्रार्थावगतेः सर्वत्रैकमन्त्रत्वम् । विभागोऽपि च तैत्तिरीयशाखाम्नातक्रमेणैव बोध्यः । कल्पसूत्रकारास्तु ऊहमेवामनन्ति ॥ १० ॥

इति भाट्टदीपिकायां तृतीयस्याध्यायस्य
द्वितीयः पादः.

———o———

# अथ तृतीयः पादः

**(१)–श्रुतेर्जाताधिकारस्स्यात् ॥ १ ॥ वेदो वा प्रायदर्शनात् ॥ २ ॥ लिङ्गाच्च ॥ ३ ॥ त्रयींविद्याख्या च तद्विदि ॥ ४ ॥ व्यतिक्रमे यथा श्रुतीति चेत् ॥ ॥ ५ ॥ न सर्वस्मिन्निवेशात् ॥ ६ ॥ संयोगान्न प्रकरणेन बाध्यते ॥ ७ ॥ धर्मोपदेशाच्च न हि द्रव्येण सम्बन्धः ॥ ८ ॥**

अत्र च लिङ्गकल्पकप्रमाणगम्यविनियोगोपयोगि चिन्तनं पादार्थः । तानि च प्रमाणानि वाक्यप्रकरणस्थानसमाख्यारूपाणीति ध्येयम् । तत्र ज्योतिष्टोमप्रकरणे "प्रजापतिरकामयत प्रजास्सृजेयेति स तपोऽतप्यत तस्मात्तेपानात्त्रयो देवा अजायन्त अग्निर्वायुरादित्यस्ते तपोऽतप्यन्त तेभ्यस्तेपानेभ्यस्त्रयो वेदा असृज्यन्ताग्नेर् ऋग्वेदो वायोर्यजुर्वेद आदित्यात्सामवेदः" इत्युपक्रम्य "उच्चैर् ऋचा क्रियते उपांशु यजुषा उच्चैस्साम्ना उच्चैर्निगदेन" इत्याम्नाते वाक्ये **जाताधिकारः** जातस्य ऋक्त्वादेरेव अधिकारः उद्देश्यतया अधिकृतिः परिग्रहः **स्यात् श्रुतेः** ऋगादिपदानां ऋक्त्वादिजाताविव शक्तत्वात् । सूत्रितं हि "तेषामृग्यत्रार्थवशेन पादव्यवस्था" इत्यादि ॥ १ ॥ एवं पूर्वपक्षे सिद्धान्तमाह—**वेदो वा** ऋग्वेदयजुर्वेदादिरेव उद्देश्यतयेहाधिकृतो वेदितव्यः । कुतः **प्रायदर्शनात्** प्राये उपक्रमे वेदशब्दस्य दर्शनात् "त्रयो वेदा अजायन्त" इत्युपक्रमे हि वेदशब्दो दृश्यते उपक्रमाविरोधाय च उपसंहारे विधिस्थ ऋगादिशब्दः ऋग्वेदादिपर एवास्थेयः ॥ २ ॥ **लिङ्गाच्च** लिङ्गादपि ऋगादिशब्दो ऋग्वेदादिपर इत्यवगम्यते यथा "ऋग्भिः पूर्वाह्णे दिवि देव ईयते । यजुर्वेदे तिष्ठति मध्ये अह्नः । सामवेदेनास्तमये

महीयते । वेदैरशून्यस्त्रिभिरेति सूर्यः"* इत्यत्र उपसंहारे वेदैरिति बहुवचनश्रवणाल्लिङ्गादुपक्रमस्थमृक्पदमृग्वेदपरमेवं । तथाचान्यत्र ऋक्पदस्य ऋग्वेदे प्रयुक्तत्वादिहापि ऋगादयश्शब्दाः ऋग्वेदादिपरा इति ॥ ३ ॥ **तद्विदि** वेदत्रयीवेत्तरि **त्रयीविद्याख्या च** त्रयीविद्यसमाख्याऽपि ऋगादिशब्दानां वेदपरत्वं गमयति। यथा—त्रयी विद्या अस्येत्येवं व्युत्पन्नस्त्रयीविद्यशब्दो वेदत्रयाध्यायिनि प्रयुज्यते न ऋगादिजातित्रयविदि छन्दोगेऽपीति त्रयीविद्यशब्दे त्रयीशब्दो वेदेषु प्रयुक्त इति त्रयीशब्दसमानाधिकरण ऋगादिशब्दो वेदपर इति ज्ञायत इति ॥ ४ ॥ नन्वेवं यत्रैकमेव कर्म वेदत्रयेऽपि समाम्नातं तत्र तदङ्गभूते मन्त्रे त्वन्मते उच्चैस्त्वादीनां विकल्पापत्तिः मम तु ऋचां यजुर्वेदपाठनिबन्धने **व्यतिक्रमे** सत्यपि ऋक्त्वानपायात् **यथाश्रुति** स्वरानुष्ठानान्न बाध **इतिचेत् न** ऋचा ऋग्वेदेन क्रियते विधीयत इति कृत्वो विधानपरत्वाङ्गीकारेण **सर्वस्मिन्** ऋग्वेदादिविहितकर्माङ्गभूते कृत्स्नमन्त्र एव उच्चैस्त्वादिस्वरस्य **निवेशात्** सम्बन्धात् । कर्मणो विधानं च भूयस्त्वादिना एकस्मिन्नेव वेद इति नैकत्रानेकस्वरप्राप्तिरिति ॥ यत्र तु कर्मणि अत्रैव वेदे विधानमिति निर्णायकान्तरं नास्ति तत्रागत्या स्वरविकल्पेऽपि न क्षतिरिति ॥ ५-६ ॥ नन्वस्य ज्योतिष्टोमप्रकरणे पाठात् वेदधर्मत्वपक्षे प्रकरणबाधः प्रसज्येत । ऋगादिधर्मत्वपक्षे हि ऋक्त्वादिधर्माणां प्रत्येकवृत्तित्वात् ज्योतिष्टोमेऽपि ऋक्त्वावच्छिन्नजन्यकार्यस्य सत्त्वाद्युक्तः प्रकरणानुप्रवेश इत्याशङ्कायामाह—**वेदसंयोगात्** वेदवाचिपदसमवधानरूपाद्वाक्यात् तत्तद्वेदविहिते सर्वस्मिन् क्रतौ स्वरनिवेशः प्राप्तः **प्रकरणेन** ज्योतिष्टोमप्रकरणेन **न बाध्यते** बाधितुं शक्यते वाक्यापेक्षया प्रकरणस्य दुर्बलत्वात् प्रकरणबाधो न दोषायेति भावः । बाधेतेति पाठे तु 'वेदसंयोगात् सर्वस्मिन् क्रतौ प्राप्तं निवेशं उच्चैस्त्वा-

* तै. ब्रा. ३-१२-९.

दिधर्मः **प्रकरणेन** प्रकरणानुरोधेन बाधेतेति न युक्तं प्रकरणस्य दुर्बलत्वादित्यर्थः ॥ ७ ॥ "उच्चैस्साम्न" इति साम्नो **धर्मोपदेशाच्च** उच्चैस्त्वरूपधर्मविधानादपि **द्रव्येण** ऋङ्मन्त्रादिना स्वरस्य सम्बन्धः। तथा सति "ऋच्यध्यूढं साम गीयते" इति ऋच्येव साम्नां गेयत्वेन ऋचामुच्चैस्त्वविधानेनैव साम्नामपि तत्प्राप्तेः पृथक्साम्नस्स्वरविधानं व्यर्थं स्यात्। न हि कश्चित्सामाधारभूतामृचमुच्चैरुच्चारयन् सामान्यन्यथोच्चारयितुं प्रभवतीति ॥ तस्मान्न जाताधिकारः ॥ ८ ॥

एवं लिङ्गविनियोगे निरूपिते इह वाक्यादिविनियोगो निरूप्यते। तत्र वाक्यं नाम अङ्गत्वघटकीभूतपरोद्देश्यताकृतिकारकताऽन्यतरपदार्थकल्पनानुकूलश्श्रुतपदसान्निधिः। अस्ति चेदं "धेनुर्दक्षिणा"* "उच्चैत् ऋचा क्रियते" "प्रयाजशेषेण" इत्यादौ। अत्र च कल्पनाशब्देन कर्मत्वकरणत्वादिविषयकसंसर्गविधालक्षणादिसाधारण्येन शक्तिजन्यपदार्थोपस्थितिभिन्नबोधमात्रं विवक्षितम्। तेन 'धेनुर्दक्षिणा'* इत्यादौ संसर्गविधया भासमानकरणताके नाव्याप्तिः। वस्तुतस्तु—सुबन्तयोः परस्परान्वयस्याव्युत्पन्नत्वादवश्यकल्प्यभावनान्वयानुरोधेन धेनुरिति प्रथमया करणत्वलक्षणा दक्षिणापदेन तत्कार्यवृत्तिकर्मत्वलक्षणा। कल्पनापदेन लक्षणाजन्योपस्थितिरेवाभिप्रेता। 'उच्चैः' इत्यादौ लुप्तविभक्त्यर्थस्य करणत्वस्य प्रातिपदिकेनैव लक्षणान्नाव्याप्तिः। अथवा 'उच्चैः' इत्यादौ करणत्वस्य संसर्गविधयैव भानोपपत्तेः कल्पनापदेनोभयं विवक्षितम्। 'प्रयाजशेषेण' इत्यादौ तृतीयया कर्मत्वस्य धातुना करणत्वस्य लक्षणात्कल्पना स्फुटैव। श्रुतपदसन्निधेश्च योग्यताज्ञानं विना कर्मत्वादिकल्पकत्वानुपपत्तेर्योग्यतारूपलिङ्गानुमापकत्वम्। श्रुतस्यैव पदस्य कर्मत्वादिलक्षक-

---

* तै. सं. १-८-१.

त्वङ्गीकारेण तद्वाचकपदरूपश्रुतिकल्पकत्वाभावेऽपि श्रुतपदस्य तत्तात्पर्यकत्वरूपधर्मवैशिष्ट्यरूपेण कल्पनाच्छ्रुतिकल्पकत्वोपपत्तिः। अतश्च वाक्यं लिङ्गं श्रुतिं च कल्पयित्वाऽङ्गत्वे प्रमाणम्। तदिह ज्योतिष्टोमे श्रुतेन "उच्चैर् ऋचा क्रियते" इत्यादिना वाक्येन विधीयमानस्योच्चैस्त्वादेरुद्देश्यसमर्पकेन ऋगादिपदेन किं ऋगादीनां मन्त्राणामेवोद्देश्यत्वं प्रतिपाद्यते उत "त्रयो वेदा अजायन्त" इत्याद्युपक्रमस्थार्थवादवशेन लक्षणया ऋग्वेदादिविहितकर्माङ्गभूतमन्त्रमात्रस्येति चिन्तायां उपक्रमस्थस्यापि वेदपदस्य गुणभूतान्यपरार्थवादस्थत्वेन प्रधानभूतविध्युद्देशस्थऋगादिपदे निस्सन्दिग्धे अङ्गगुणविरोधन्यायेन लक्षणातात्पर्यग्राहकत्वाद्वेदपद एव तदेकदेशऋगादिलक्षणा। वस्तुतस्तु—वेदशब्दस्यावयवेऽपि न लक्षणा वेदत्वस्य प्रत्येकवृत्तित्वात्। इतरथा शूद्रस्यैकवाक्यश्रवणे दोषानापत्तेरिति प्राप्ते—

उपक्रमे वेदपदश्रवणेनैतावदवगम्यते नूनमत्र वेदस्य स्तूयमानत्वादुद्देश्यत्वं विधेयत्वं वा तस्यावश्यं वाक्ये विवक्षितमिति। तत्र च विधेयस्योच्चैस्त्वादेर्लाभात्परिशेषादेव तस्योद्देश्यत्वावगतेः। वस्तुतस्तु—ऋगादिपदमनुवाद एव सदुद्देश्यपरम्। अतश्चासञ्जातविरोधिनः उपक्रमस्थस्य वेदपदस्यैव तात्पर्यग्राहकस्य सत्त्वात् ऋगादिपदे तत्प्रचुरत्वेन ऋग्वेदादिविहितकर्माङ्गभूतमन्त्रलक्षणा। न चोपक्रमावगतस्यापि अपच्छेदाधिकरणन्यायेन परेण बाधः तस्य हि विधेयस्तुतिसापेक्षत्वेन अर्थवादैकवाक्यताया आवश्यकत्वात्पूर्वविरोधे परस्यानुत्पन्नत्वादेवाप्रवृत्तेः। न च वेदत्वस्य ऋगादिष्वपि पर्याप्तत्वादुपक्रमाविरोधः। वेदत्वस्य मन्त्रब्राह्मणसमुदायात्मके ग्रन्थविशेष एव पर्याप्तत्वेन अवयवपर्याप्तत्वाभावात्। इतरथा एकवाक्याध्य-

**यनेनाप्यध्ययनविध्यर्थसम्प्रत्यापत्तेः । शूद्रस्यैकपदश्रवणनिषेधस्तु वृन्ताकावयवादिनिषेधवन्नानुपपन्नः । यथा चैतादृशविषये निषेधस्य विध्यपेक्षया वैलक्षण्यं तथा कौस्तुभे द्रष्टव्यम् । तस्मादुपक्रमानुसारेण ऋग्वेदविहितकर्माङ्गभूतमन्त्राङ्गत्वमेवोच्चैस्त्वादीनाम् । एवं च वेदत्वस्य प्रकरणस्थवाक्यमात्रेष्वपर्याप्तत्वात्प्रकरणेन वाक्यस्य स्वविषये उपसंहारानुपपत्तेर्वेदत्वावच्छिन्नविहितकर्ममात्रोद्देशेनं वाक्येन स्वरविधानावगतेः प्रकरणबाधेऽपि न क्षतिः ॥ १ ॥**

---

## (२)–गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः ॥ ९ ॥

**गुणमुख्यव्यतिक्रमे** गुणमुख्ययोः अङ्गप्रधानयोः विधायकवेदप्रयुक्ते विरोधे सति यथा आधानं "वसन्ते ब्राह्मणोऽग्निमादधीत"* इत्यादिना यजुर्वेदे विहितं तदङ्गभूतं तु वारवन्तीयादि सामवेदे पाठादुत्पत्तिविधिविषयः तत्र वारवन्तीयादिसाम्नि प्रधानविधायकयजुर्वेदनिबन्धनः उपांशुस्वरः उत स्वविधिपरसामवेदनिबन्धनः उच्चैस्स्वरः इति विरोधेन विशये सति **मुख्येन** मुख्यानुसारेणैव **वेदसंयोगः** वेदनिबन्धनस्वरसम्बन्धस्स्वीकार्यः कुतः **तदर्थत्वात्** मुख्यार्थत्वात् अङ्गस्य प्रधानविधायको हि विधिस्साङ्गमेव प्रधानं विधत्ते । ततश्च आधानविधायकयाजुर्वेदिक उपांशुस्वर एवाधानाङ्गे वारवन्तीयादिसाम्नि अनुष्ठेयः इति भाष्यकृतो मतम् ॥ वार्तिककारमते तु गुणमुख्यव्यतिक्रमे गुणः उत्पत्तिविधिः मुख्यं विनियोगविधिः तत्रैव प्रयोज्यत्वावगतेः ताभ्यां व्यतिक्रमे विरोधे सति यथा वारवन्तीयादिसाम्नस्सामवेदे पाठादुत्पत्ति-

---

* तै. ब्रा. १-१-२.

विधिः यजुर्वेदे तु "वारवन्तीयं गायति" इति विनियोगविधिः तत्र वारवन्तीयादिसाम्नि विभिन्नवेदनिबन्धनविभिन्नस्वरयोः प्राप्तयोर्विरोधः तत्र मुख्येन विनियोगविध्यनुसारेणैव वेदसंयोगः वेदनिबन्धनस्वरसम्बन्धः तदर्थत्वात् मुख्यभूतविनियोगार्थत्वादुत्पत्तेरिति ॥ ९. ॥

याजुर्वेदिके आधाने सामवेदपठितानि वारवन्तीयादीनि सामान्यङ्गत्वेन श्रुतानि । तेषु सामवेदिकस्स्वरः स्ववेदनिबन्धनत्वाच्छीघ्रमुपस्थितः न तु प्रधाननिबन्धनो याजुर्वेदिकः प्रधानैकवाक्यतापेक्षितत्वेन विलम्बोपस्थितिकत्वादिति प्राप्ते—

साङ्गस्यैवाधानस्य यजुर्वेदेन विधानात् अङ्गेषु विलम्बोपस्थितिरप्ययं प्रधानाश्रितत्वाद्बलीयान् । अतस्तेषु याजुर्वेदिक एव स्वर उपांशुत्वमिति भाष्यकारः ॥

वार्तिककारस्तु—प्रयोगविध्याश्रितस्य स्वरस्य प्रधाने श्रुतस्याप्यङ्गे कल्प्यत्वेन दौर्बल्यमेव । इतरथा ज्योतिष्टोमाङ्गभूतहौत्रादेरप्यध्वर्युकर्तृकत्वापत्तेः । वारवन्तीयस्यापि यजुर्वेदे "वारवन्तीयं गायति" इति विनियोगविधेराम्नानाच्च । अत एवं चिन्तनीयम् । यत्र वेदान्तरे उत्पत्तिः वेदान्तरे च विनियोगः तत्र वारवन्तीयादौ कस्स्वरः इति चिन्तायां उत्पत्तेः पूर्वभावित्वात् असञ्जातविरोधित्वेन तन्निबन्धन एव स्वरो बलीयान् । अतश्च ऋचा ऋग्वेदेन क्रियते उत्पाद्यत इति श्रुत्यर्थ इति प्राप्ते—

आम्नानमात्रेण मन्त्रस्य प्रयोजनानवगमेन प्रयोज्यत्वानवगतेः स्वरानपेक्षत्वाद्विनियोगोत्तरकालमेव स्वरसम्बन्धात् क्रियत इत्यस्य प्रयुज्यत इत्यर्थावगतेः प्रयोगस्य च विनियोगाधीनत्वेन

विनियोगस्यैवाव्यवहितपूर्वं पुरस्स्फूर्तिकत्वात् । तस्माद्विनियोगनिबन्धन एव स्वरोऽसति बाधकेऽनुष्ठेय इत्याह ॥ २ ॥

---

## (३)–भूयस्त्वेनोभयश्रुति ॥ १० ॥

**उभयश्रुति** उभयत्र वेदद्वये श्रुतिः श्रवणं यस्य कर्मणः तत्कर्म **भूयस्त्वेन** अङ्गाम्नानबाहुल्यानुरोधेन एकत्रोत्पन्नं अङ्गाम्नानबाहुल्यरहिते तु वेदे कतिपयगुणविधानार्थमेव केवलं श्रुतमित्यवधेयम् । तथा च उत्पत्तिविध्यनुसारेणैव तादृशकर्मणि स्वरनिर्णयः ॥ तथा च ज्योतिष्टोमस्य यजुर्वेदे सामवेदे च श्रवणेऽपि याजुर्वेदिक एव स्वर इति रीत्या बोध्यम् ॥ १० ॥

यत्रैकमेव कर्मानेकेषु वेदेषु श्रुतं तत्र क्वोत्पत्तिः क्व च तदनुवादेन गुणार्थं श्रवणमिति जिज्ञासायां यत्राङ्गबाहुल्यं तत्रोत्पत्तिः सेवकबाहुल्येन राजावस्थाननिर्णयवत् । वस्तुतस्तु —कर्मस्वरूपपरिचायकद्रव्यदेवतादिसाकल्यस्यैव निर्णायकत्वम् । तत्रापि द्वैविध्ये बहिरङ्गत्वेऽप्यव्यभिचाराद्देवताया एव न तु द्रव्यस्येत्यायूह्यम् । अतश्चैवंविधनिश्चायकसत्त्वे तत्रैवोत्पत्तिः अन्यत्र तदनुवादेनाविरोधिगुणान्तरविधानम् । विरोधिनि तु गुणाद्भेद एव । एवं यत्र कस्य चिदपि नियामकस्याभावस्तत्राप्यभ्यासाद्भेदः । न ह्यत्र शाखान्तरन्यायेन सत्यपि सर्वेषामुत्पत्तिपरत्वे कर्मैकत्वं तद्वदिहाध्येतृभेदाभावात् । अतो नियामकबलेन यत्रैवोत्पत्तिस्तद्भेदनिबन्धन एव स्वर इति सिद्धम् ॥ (३)

---

## (४) असंयुक्तं प्रकरणादितिकर्तव्यतार्थत्वात् ॥११॥

प्राङ्निरूपितैश्श्रुतिलिङ्गवाक्यैः प्रमाणैः **असंयुक्तं** असम्बद्धं अनवगताङ्गभावं अतएव प्रयोजनाकाङ्क्षासहितं "समिधो यजति"* इत्यादिविहितं प्रयाजादिकं **प्रकरणात्** तन्नामकात्प्रमाणात् दर्शादेरङ्गं स्यात्। दर्शादेः **इतिकर्तव्यतार्थत्वात्** आकाङ्क्षितेतिकर्तव्यताकत्वात्। उभयाकाङ्क्षा प्रकरणमिति प्राचीनाः। वस्तुतस्तु—अवगतफलसम्बन्धसन्निहितवाक्यप्रमितपदार्थवृत्ति यत्पूर्वप्रमाणानवगताङ्गताकविषये इतिकर्तव्यतात्वप्रकारकापेक्षणं तत्प्रकरणमिति कौस्तुभनिरुक्तं बोध्यम्। तथा च—

"स्वार्थबोधे समाप्तानामङ्गाङ्गित्वव्यपेक्षया।
वाक्यानामेकवाक्यत्वं पुनस्संहत्य जायते॥"

इत्युक्तादिशा प्रयाजादिवाक्यानां दर्शादिवाक्यानां चैकवाक्यताकल्पनया समिद्यागादिभिरुपकृताभ्यां दर्शपूर्णमासाभ्यां स्वर्गं भावयेदित्यर्थोऽवगन्तव्यः॥ ११॥

**एवं वाक्ये निरूपिते प्रकरणमिदानीं निरूप्यते। ननु किमिदं प्रकरणं नाम? न तावत्सन्निधिमात्रं गोदोहनादेरपि दर्शाङ्गत्वापत्तेः। अथ साकाङ्क्षत्वमात्रं, विकृतेरपि प्राकृताङ्गविषये तदापत्तेः। नापि साकाङ्क्षत्वे सति सन्निधिपठितत्वं, उपहोमादावपि तदापत्तेः। अथोभयाकाङ्क्षत्वविशिष्टं तत्। सिद्धरूपाणां मन्त्रादीनामपि तदापत्तेः। प्रयाजादीनामनाकाङ्क्षितत्वेन तदनापत्तेश्च। अथ दर्शपूर्णमासयोः प्रकारान्तरेण प्रयाजानाकाङ्क्षत्वेऽपि इतिकर्तव्यतात्वेन तदाकाङ्क्षोपपत्तेर्युक्तं प्रकरणमिति चेत्। किमिदं इतिकर्तव्यतात्वं नाम? न तावत्फले अपूर्वे वा सहकारित्वं, प्राधान्यापत्तेः। प्रयाजादिवदाग्नेयस्यापि विकृतावतिदेशा-**

*तै. सं. २-६-१.

पत्तेश्च। नापि करणजनकत्वं, प्रयाजादिषु बाधादिति चेन्न। सन्निहितस्य फलवतोऽनवगताङ्गताकपदार्थविषये इतिकर्तव्यतात्वेनापेक्षणस्यैव प्रकरणपदार्थत्वात्। अत्रासन्निहितज्योतिष्टोमाङ्गत्वस्य प्रयाजादौ वारणायाद्यं विशेषणम्। अनुयाजाद्यङ्गत्ववारणाय फलवत इति द्वितीयम्। प्रोक्षणादेश्श्रुत्यादित्रयविनियुक्तस्य प्रकरणविषयत्ववारणाय तृतीयम्। सिद्धरूपस्य लिङ्गविनियुक्तमन्त्रादेः प्रकरणाविषयत्वासिद्ध्यर्थं इतिकर्तव्यतात्वेनेति चतुर्थम्। सर्वत्र ह्यशक्तस्य करणत्वायोगाच्छक्तिः करणनिष्ठा समस्तीति निर्विवादम्। सा च कारणतावच्छेदिका कारणतारूपा वेत्यन्यदेतत्। तस्याश्च जन्यवृत्तित्वेन जन्यत्वमेवेत्युत्सर्गः। सामग्र्यलाभे परमनादित्वेत्यविवादः। तदत्र तत्सामग्र्यपेक्षैवेतिकर्तव्यतापेक्षा। तया च सन्निहितप्रयाजादेरङ्गत्वबोधः प्रयाजादेस्तत्सामग्रीत्वात्। सिद्धरूपस्य च द्रव्यादेर्व्यापारावेशं विना तत्सामग्रीत्वासम्भवात् तया अग्रहणम्। अत्र च प्रधानगतेतिकर्तव्यताकाङ्क्षायाः प्रयाजादिगतप्रयोजनाकाङ्क्षासहकृतायास्तत्तद्वाक्यस्य स्वस्वावान्तरवाक्यार्थे समाप्तस्यापि महावाक्यैकदेशत्वरूपपारिभाषिकपदसान्निध्याख्यवाक्यकल्पनया निरुक्तपदानां च स्वार्थोपस्थितिद्वारा तन्निष्ठाश्रुतपदान्तरकल्पनानुकूलयोग्यतारूपलिङ्गकल्पनया च समिधो यजति इत्थं दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यश्रुतेतिकर्तव्यतात्ववाचिपदरूपश्रुतिकल्पनया च इतिकर्तव्यतात्वरूपक्रतिकारकत्वे प्रामाण्यम्। सम्भवति हि प्रयाजादीनामप्युक्तशक्तिजनकत्वेन भावनायामन्वयः। तस्मात्सिद्धं प्रकरणं नाम चतुर्थं प्रमाणम्॥

यत्त्वत्र पार्थसारथिना अननुगृहीतस्यापि कर्मादेस्संयोगविभागारम्भकत्वदर्शनान्नेदं प्रकरणम्। अपि तु व्यापारसा-

मान्यस्याख्यातार्थत्वमङ्गीकृत्य तद्विशेषापेक्षैवेतिकर्तव्यतापेक्षा । तयैव च प्रयाजादीनां तत्त्वेनान्वय इति तदेव च प्रकरणमित्युक्तम् । तन्न । तथात्वे निरुक्तप्रकरणस्य तद्घटिताङ्गत्वबोधकत्वानुपपत्तेः । प्रयाजादेर्भावनात्वे तस्यैव फलसम्बन्धापत्तेश्च । अस्मन्मते तु यत्नस्यैव भावनात्वात्तस्य च यागजनकत्वेनैव कृतार्थत्वान्न तदापत्तिरिति वैषम्यम् । किञ्चैवं प्रधानस्य स्वतो निराकाङ्क्षस्यान्यतराकाङ्क्षयैव प्रकृतौ प्रयाजाद्यङ्गत्वापत्तिः विकृतौ च भावनाया विशेषापेक्षायामक्लृप्तोकारैरपिसन्निहितैरुपहोमैरेव निराकाङ्क्षत्वोपपत्तेर्नातिदेशकल्पनापत्तिरित्यादि कौस्तुभे विस्तरः ॥ ४ ॥

---

## (५) क्रमश्च देशसामान्यात् ॥ १२ ॥

**क्रमश्च** सन्निधिरपि सन्निहितयोरङ्गाङ्गिभावे प्रमाणं **देशसामान्यात्** समानस्थानत्वात् । यथा—दर्शपूर्णमासप्रकरणे—अनुमन्त्रणमन्त्रे प्रथमं "अग्नेरहम्"* इति ततो "दब्धिरसि"* इति मन्त्रो द्वितियस्थाने येनैव क्रमेण पठ्यते तेनैव क्रमेण ब्राह्मणे प्रथममाग्नेययागोऽनन्तरमुपांशुयाजो द्वितीयस्थाने पठ्यते । ततश्च सन्निधिपाठबलादेव आकाङ्क्षारूपं प्रकरणं समभिव्याहाररूपं वाक्यं लिङ्गं च कल्पयित्वा कल्पितया श्रुत्या उपांशुयाजे "दब्धिरसि"* इति मन्त्रस्याङ्गतया विनियोगः ॥ १२ ॥

**स्थानं चाङ्गत्वे पञ्चमं प्रमाणम् ॥ तच्चेतिकर्तव्यतात्वेनायोग्यसम्बन्धयोर्वाक्यार्थयोस्सान्निधिः । इति कर्तव्यतात्वेनायोग्यत्वं**

---

*तै. सं. १-६२.

द्वेधा क्वचिदाकाङ्क्षाविरहात् यथा विकृतेरुपहोमादिविषये क्लृप्तोपकारप्राकृताङ्गैरेव निराकाङ्क्षत्वात् । क्वचिदव्यापारात्मकत्वात् यथा जपादेर्मन्त्रादौ । अत्र चैकवाक्योपात्तव्रीहियागादिसन्निधेरपि तथात्वापत्तेर्वाक्यार्थेत्युक्तम् । प्रयाजादीनां स्थानविषयत्वापत्तिनिरासार्थमाद्यं विशेषणम् ॥ तच्च सादेश्यापरपर्यायं द्विविधं पाठसादेश्यमनुष्ठानसादेश्यं च । आद्यं द्विविधं यथाक्रमपाठस्सन्निधिपाठश्चेति । त्रयमपीदं द्विविधं उभयाकाङ्क्षयाऽन्यतराकाङ्क्षया चेति । अत्रोभयाकाङ्क्षाघटकप्रधानाकाङ्क्षा चेतिकर्तव्यताकाङ्क्षाभिन्ना द्रष्टव्या । तत्र पाठक्रमात्काम्ययाज्यानुवाक्यामन्त्राणां काम्येष्टयङ्गत्वम् । सन्निधेस्तु सान्नाय्यपात्रशुन्धनविधिसन्निधौ समाम्नातस्य "शुन्धध्वम्"* इति मन्त्रस्य तदङ्गत्वम् । अनुष्ठानसादेश्यस्य तु पशुधर्माणां दैक्षपश्वङ्गत्वम् । यद्यपि चैषां लिङ्गादिप्रमाणान्तरेणैव विनियोगात्क्रमादीनां च क्वचिदपूर्वसाधनत्वलक्षणातात्पर्यग्राहकत्वमात्रत्वान्नाङ्गत्वे प्रामाण्यम् । तथाऽपि षड्विधस्यापि क्रमस्यासङ्कीर्णोदाहरणानि कौस्तुभोक्तरीत्योहनीयानि । अत्र षड्विधेऽपि क्रमे आरादुपकारकस्थले तावदितिकर्तव्यताकाङ्क्षायाः कल्पनीयत्वात्प्रकरणकल्पकत्वम् । मन्त्रादिरूपसन्निपत्योपकारकस्थलेऽपि मन्त्रादेस्स्वरूपेण यागजनकत्वेऽपि तन्नियमादृष्टोपहितस्य तदजनकत्वात्करणनिष्ठयोग्यताजनकत्वरूपेतिकर्तव्यतात्मकप्रकरणकल्पनाऽऽवश्यक्येव । अत एव तदपेक्षया तस्य दौर्बल्यम् । षड्विधे तु क्रमे उभयाकाङ्क्षालक्षणादन्यतराकाङ्क्षालक्षणस्य तत्रापि पाठक्रमादनुष्ठानसादेश्यस्य विधिसन्निधानस्य पुरस्स्फूर्तिकत्वात् तयोस्तु मध्ये सन्निधानस्य प्राबल्यम् । एकग्रन्थस्थत्वादित्यादि कौस्तुभे द्रष्टव्यम् ॥

---

* तै. सं. १-१-३.

## (६) आख्या चैवं तदर्थत्वात् ॥ १३ ॥

**आख्या च** आध्वर्यवमित्यादियौगिकशब्दरूपा समाख्याऽपि **एवं** अङ्गत्वे प्रमाणं तस्यास्समाख्यायाः **तदर्थत्वात्** सः क्रियाकर्तृसम्बन्धः अर्थः प्रतिपाद्यो यस्यास्तथाभूतत्वात् । तथाहि—अध्वर्योरिदं इति योगेन हि आध्वर्यवमिति समाख्या काण्डे प्रवर्तते रूढिकल्पने गौरवात्। काण्डे चाध्वर्युसम्बन्धो न प्रणीतत्वरूपः वेदस्यानादित्वात् । अतः अध्वर्युकर्तव्यपदार्थप्रतिपादकत्वमेव स वाच्यः । तथा च सिद्धमध्वर्योस्तत्काण्डपठितपदार्थेषु कर्तृतया शेषत्वमिति ॥ १३ ॥

ऋग्वेदादिविहितपदार्थेषु हौत्राध्वर्यवादिसमाख्या वेदे याज्ञिकैश्च प्रयुज्यते । साऽप्यङ्गत्वे प्रमाणम् । तथा हि—सर्वत्र क्लृप्तावयवशक्तिकं द्विविधं पदं प्रकृतविधौ वाक्यार्थान्वय्यर्थकं तद्भिन्नं चेति । तत्राद्यं "निर्मन्थ्येनेष्टकाः पचन्ति" "प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति" इत्यादौ निर्मन्थ्यादिपदम् । तत्र वाक्येनैव मन्थनादीनां पाकाद्यङ्गत्वान्न सामाख्यानिको विनियोगः। द्वितीयं तु "आध्वर्यवमधीते" "प्रैतु होतुश्चमसः" इत्यादौ। तत्र विशेष्यस्य काण्डस्यैव प्रकृतविधौ अन्वये जाते विशेषणस्याध्वर्युकर्तृकत्वादेस्सिद्धवन्निर्देशान्यथाऽनुपपत्त्या विनियोगः कल्प्यत इति तत्र समाख्यया विनियोगः । अत्र समाख्ययोरवयवार्थयोस्सम्बन्धे संसर्गमर्यादया बुद्धे न तन्निर्देशान्यथाऽनुपपत्त्या स्वतन्त्रविधिकल्पना गौरवापत्तेः । किन्तु अन्वाधानादिवाक्यस्य "अध्वर्युं वृणीते" इति वाक्यस्य चैकवाक्यतासम्पादकपदमात्रं "यमध्वर्युं वृणीते सोऽग्नीनन्वादधाति" इति तद्वयोर्विध्योः कथञ्चिदस्त्वेकबुद्धिस्थतेत्येवंविधस्थानकल्पनापूर्वकमध्वर्योरितिकर्तव्यताकाङ्क्षारूपप्रकरणकल्पनया तद्विध्योर्महावाक्यैकदेशत्वाख्यपदसन्निधिरूपं वाक्यं प्रकल्प्यते। तेन चा-

ध्वर्युमात्रनिष्ठयोग्यतारूपालिङ्गकल्पनया एकवाक्यतासम्पादकपद-रूपश्रुतिकल्पनायुक्तं तस्याष्षष्ठप्रमाणत्वम् ॥ ६ ॥

## (७) श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात् ॥ १४ ॥

**श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां** प्रमाणानां **समवाये** एकत्र द्वयोस्त्रयाणां वेति रीत्या यथासम्भवं समावेशे **पारदौर्बल्यं** परस्य दौर्बल्यं परदौर्बल्य तदेव पारदौर्बल्यं पूर्वपूर्वस्य प्राबल्यं परस्यपरस्य दौर्बल्यमित्यर्थः । कुतः **अर्थविप्रकर्षात्** अर्थस्य उत्तरप्रमाणावसेयस्य विप्रकर्षात् पूर्वप्रमाणकल्पनामूलकाद्व्यवधानात् । यावद्धि उत्तरं प्रमाणं स्वपूर्वप्रमाणकल्पनाद्वारा क्वचिदर्थे विनियोक्तुं प्रक्रमते ततः पूर्वमेव प्रवृत्तं पूर्वं प्रमाणं उत्तरानपेक्षं अन्यत्र विनियोगमवगमयतीत्युत्तरस्याप्रवृत्तिरेवेति ॥ १४ ॥

तदेवं षट्प्रमाणेषु निरूपितेष्वधुना विरोधे बलाबलं निरूप्यते—विरोधश्चैकस्य शेषस्य शेषिद्वये प्रमाणद्वयसत्वे यथैन्द्रीमन्त्रस्य श्रुत्या गार्हपत्याङ्गत्वे लिङ्गाच्चेन्द्राङ्गत्वे । यथा वा एकस्मिन् शेषिणि शेषद्वयविनियोजकप्रमाणद्वये यथा गार्हपत्ये श्रुत्या ऐन्द्रीमन्त्रः लिङ्गादाग्नेयः । अयं च शेषद्वयविनियोगो द्वारैक्य सत्येव बलाबलप्रयोजको न तु तद्भेदेऽपि वाक्यप्रकरणाभ्यां वैमृधप्रयाजादीनामेकशेष्यर्थत्वेऽपि तदभावात् । यत्र त्वेकस्य शेषस्यैकस्मिन्नेव शेषिणि प्रमाणद्वयं तत्र वैषम्ये प्रबलस्यैव प्रयोजनार्थे विनियोजकत्वम् । साम्ये तु एकस्य विनियोजकत्वं इतरस्य पुनरश्रुतित्वेन प्रयोजनान्तरकल्पनम् । नि-

यामकाभावे द्वयोरभ्युदयाशिरस्कत्वकल्पनं कर्मान्तरबोधकत्वं वा। एवं यत्र "अरुणया क्रीणाति"* इत्यादौ आरुण्यस्यापूर्वसाधनीभूतक्रयार्थत्वे प्रमाणत्रयं तत्रापि श्रुतेरेव विनियोजकत्वं नत्वन्यस्य वाक्यस्योद्देश्यसमर्पकत्वमात्रत्वात् । अत एव न "ऐन्द्र्या"† इत्यत्र लिङ्गवाक्यविरोधः । वाक्यस्योद्देश्यमात्रसमर्पकत्वेन श्रुतिसहकारित्वेऽपि कृतिकारकत्वबोधकत्वरूपविनियोजकत्वाभावात् । प्रकरणं त्वपूर्वसाधनत्वलक्षणातात्पर्यग्राहकमात्रम् । न तु तदपि विनियोजकं गौरवात् । अत एव विनियोजकप्रमाणबलाबलमपि निरूप्यमेव । तदिह श्रुत्योर्विरोधे ऐन्द्रीमन्त्रस्य तृतीयया गार्हपत्याङ्गत्वमेव न तु तद्धितश्रुत्या इन्द्राङ्गत्वम् । तस्य सूक्ततद्धितत्वेन प्राधान्येन कृतिकारकत्ववाचित्वाभावात् । अतश्च तस्य मुख्यश्रुतित्वाभावाद्दुर्बलत्वम् । एवं च तस्यैव मन्त्रस्य लिङ्गादिन्द्राङ्गत्वमिति लिङ्गविरोधेऽप्येतदेवोदाहरणम् । अत्र हि सर्वत्र उत्तरोत्तरस्य पूर्वपूर्वकल्पकत्वेन प्रामाण्यस्य तत्तन्निरूपणावसरे स्थापितत्वादुत्तरोत्तरस्य श्रुतिकल्पनं यावदवगतस्यैव पूर्वपूर्वेण शेषशेषिणोर्निराकाङ्क्षत्वापादनेन बाधः । न चाङ्गानां प्रकृत्यर्थत्वेन निराकाङ्क्षाणामपि विकृत्याकाङ्क्षयैवातिदेशकल्पनवदिन्द्राद्याकाङ्क्षयैव लिङ्गस्य श्रुतिकल्पकत्वोपपत्तिः । तस्य ध्यानाद्युपायान्तरेणापि स्मृतिसिद्धेर्नियमेन विकृतिवदनाकाङ्क्षत्वात् । अतः श्रुत्या गार्हपत्याङ्गत्वमेव । न च श्रुतेः करणत्वमात्राभिधायकत्वेन गार्हपत्यनिरूपितत्वस्य वाक्याधीनत्वान्नायं श्रुतिलिङ्गविरोध इति वाच्यम् । तथात्वेऽपि ब्राह्मणवाक्यत्वेन मन्त्रलिङ्गापेक्षया 'यद्यप्यन्यदेवत्यः पशुः' इतिवत्प्रबलत्वोपपत्तेः । वस्तुतस्तु यथा न

*तै. सं. ६-१-६. †तै. सं. ५-५-७.

केवलया श्रुत्या विरोधो नैवं वाक्येनापि तस्यापि गार्हपत्यसमीप इत्येवमुपपत्तेः । अतश्चोभयविरोधसत्त्वेऽपि 'प्रधानेन व्यपदेशा भवन्ति' इति न्यायेन श्रुतिलिङ्गविरोधोदाहरणत्वम् । लिङ्गयोर्विरोधे मुख्यसामर्थ्येन गौणस्य बाधः । लिङ्गवाक्ययोस्तु "स्योनं ते"* इति सदनकरणप्रकाशस्य पूर्वार्धस्य 'तस्मिन् सीद'* इत्युत्तरार्धेन सादनप्रकाशकेन 'तस्मिन्'* इति विभागे साकाङ्क्षेणैकवाक्यत्वात्सकलस्य मन्त्रस्य सदनसादनयोरन्यतरत्रोभयत्र वा प्रतिष्ठापन एव 'तस्मिन्'* इति पदसन्निधिरूपेण वाक्येन विनियोगे प्रारिप्सिते ततः पूर्वप्रवृत्तेन लिङ्गेन तत्तदाख्यातस्य मुख्यविशेष्यकत्वेन स्वार्थबोधकस्य परोपसर्जनत्वकल्पने प्रमाणाभावात्तच्छब्दस्य च "सा वैश्वदेवी' इतिवद्वाक्यान्तरोपस्थितार्थपरामर्शकत्वेनापि चरितार्थत्वात्प्रत्येकमेव विनियोग इति । वाक्ययोर्विरोधे उपांशुत्वस्य "त्सरा वा एषा यज्ञस्य' इति वाक्येन यज्ञपदैकवाक्यत्वात् यज्ञभागधर्मत्वं "तस्माद्यत्किञ्चित्प्राचीनमग्नीषोमीयात्तेनोपांशु चरन्ति" इत्यनेन सन्निहितयत्किञ्चित्पदैकवाक्यतयाऽवगतपदार्थधर्मत्वेन बाध्यते । वाक्यप्रकरणविरोधे च वैमृधस्य वाक्यावगतेन पौर्णमास्यङ्गत्वेन प्रकरणावगतदर्शाङ्गत्वबाधः ।

यत्तु–अग्नीषोमादिपदैकवाक्यतापन्नानां "इदं हविः"† इत्यादिपदानाममावास्याङ्गदेवताप्रकाशनार्थत्वं प्राकरणिकं वाक्येन बाध्यत इत्युदाहरणमुक्तं मूले । तत् श्रुतिलिङ्गाविनियुक्तस्य सिद्धरूपत्वेन प्रकरणाविषयस्यच सूक्तवाकस्य मुख्यप्रकरणविनियोज्यत्वप्रसक्त्यभावेऽप्यधिकाराख्यगौणप्रकरणस्यापूर्वसाधनत्वलक्षणातात्पर्यग्राहकत्वस्य प्रसक्तत्वात्तद्बाधाभिप्रायेण द्रष्टव्यम् । प्रकरणयोर्वि-

*तै. ब्रा. ३-७-६. †तै. ब्रा. ३-५-१०.

रोधे महाप्रकरणमवान्तरप्रकरणेन । प्रकरणक्रमयोर्विरोधे "अक्षैर्दीव्यति" इत्यादिविदेवनादीनां सन्निधानादभिषेचनीयाख्यसोमयागाङ्गत्वप्रसक्तौ प्रकरणाद्राजसूयाङ्गत्वम् । न चाभिषेचनीयस्यापि फलवत्त्वेन प्रकरणाशङ्का । तस्य विकृतित्वेन क्लृप्तोपकारप्राकृताङ्गनिराकांक्षस्य तदभावात् । न च विकृतावपि यत्प्राकृताङ्गानुवादेन वैकृतमङ्गं वाचनिकं विधीयते यथा पृषत्यादि तस्यापि विकृतिगताङ्गाकांक्षायामनिवृत्तायामेव विधेयत्वात्तत्संदष्टस्य तत्पूर्वभावित्वे सति प्रधानोत्तरभाविनः अपूर्वाङ्गस्य वा प्रकरणेनैव ग्रहणोपपत्तेर्विदेवनादीनां चाभिषेचनीयोत्तरमुक्तविधाभिषेकपूर्वभावित्वेन पाठात्प्रकरणग्रहणोपपत्तिरिति वाच्यं प्राकृताङ्गानुवादेन विहितस्याप्यपूर्वाङ्गस्योपहोमवत् विकृत्याकाङ्क्षायां निवृत्तायामेव विधानात् । यस्य हि प्राकृतकार्यापन्नतया वैकृताङ्गस्य विधानं यथा औदुम्बरत्वशरादेस्तस्यैवानिवृत्ताकाङ्क्षायां विधानं तत्संदष्टस्यैव च तत्पूर्वभाविनो वा प्रधानोत्तराङ्गस्य विकृतिप्रकरणेन ग्रहणम् । अभिषेकस्य तु प्राकृतकार्यापन्नत्वाभावान्न तत्पूर्वपठितानां विदेवनादीनामभिषेचनीयप्रकरणग्राह्यत्वोपपत्तिः । वस्तुतस्तु—अभिषेकस्यापि स्वतन्त्रोत्पन्नस्य प्रकरणाद्राजसूयाङ्गत्वावगतेः "माहेन्द्रस्य स्तोत्रं प्रत्यभिषिच्यते" इत्यत्र प्रतिशब्दयोगेन कालार्थसंयोग इति वक्ष्यते । अतो विदेवनाद्यभिषेकान्तानां सर्वेषामेव सन्निधानादभिषेचनीयाङ्गत्वप्रसक्तौ प्रकरणेन तद्बाधः । न च राजसूयस्यापि प्रत्येकं विकृतित्वात्प्रकरणाभावः पवित्रादारभ्य क्षत्रस्य धृतिं यावद्राजसूयत्वधर्मपुरस्कारेण वाचनिकाङ्गाम्नानात्तत्संदष्टविदेवनादीनां प्रकरणग्राह्यत्वोपपत्तेः । एवं प्रकरणस्य क्रमान्तरैरपि उदाहरणान्यूह्यानि । एवं क्रमयोर्विरोधे सन्निधानेन याज्याद्वयस्य काम्यैन्द्राग्नद्वयाङ्गत्वे अनियमेन प्रसक्ते

यथाक्रमं पाठादाद्यस्याद्याङ्गत्वम् । क्रमसमाख्ययोर्विरोधे पौरो॰ रोडाशिकसमाख्याते काण्डे समाम्नातस्य 'शुन्धध्वम्'[1] इति मन्त्रादेस्सन्निधानात्साम्नाय्याङ्गत्वम् । न च महाधिकारेण सन्निधिबाधः। तस्यापि वाचनिकाङ्गसंदष्टत्वेन बलवत्त्वात् । न चैवं तस्य प्रकरणत्वापत्तिः । मन्त्रस्य सिद्धरूपत्वेन लिङ्गविनियोज्यत्वेन च प्रकरणाविषयत्वात् । सन्निधानस्यापि समाख्यावदपूर्वसाधनत्वलक्षणातात्पर्यग्राहकत्व एव बलाबलं न तु विनियोगे । तत्र तूदाहरणान्तरं मृग्यम् । एवं समाख्ययोर्विरोधे आध्वर्यवमितिसामान्यसमाख्याया याजमानमितिविशेषसमाख्यया बाधः । एवं द्व्यन्तरितत्र्यन्तरितादिप्रमाणस्य पूर्वैस्सह विरोधे शेषानेकत्वे चोदाहरणानि कौस्तुभे द्रष्टव्यानि ॥

स चायं श्रुतिलिङ्गादिबाधोऽप्राप्तबाधः । तत्त्वं च अङ्गताबोधकलिङ्गादिकल्प्यप्रमाणप्रतिबन्धकत्वम् । पूर्वपूर्वप्रमाणेन ह्यङ्गत्वेऽवधारिते निराकांक्षत्वादुत्तरोत्तरतः पूर्वपूर्वप्रमाणकल्पनैव नोदेतीति सोऽयमप्राप्तबाधः । एवं गृहमेधीये "आज्यभागौ यजति"[2] इत्यादावपि । अन्यत्र तु सामान्यविशेषनित्यनैमित्तिकभावादौ प्राप्तबाधः । तत्त्वं च क्लृप्तस्य बोधकस्य विशेषविषयताप्रतिबन्धकत्वम् । सामान्यशास्त्रादेर्हि विशेषशास्त्रादिना पदहोमादिविषयतामात्रं प्रतिबध्यते न तु सामान्यशास्त्रमपि। तस्य क्लृप्तत्वेनाकल्पनीयत्वात्, होमान्तरेष्वप्याहवनीया भावापत्त्या मिथ्यात्वस्यापि कल्पयितुमशक्यत्वाच्च । अत एव येन सामान्य शास्त्रमेव पूर्वमालोचितं तस्य विशेषादर्शनजनितभ्रम एव विशेषविषयताविषयको विशेषशास्त्रेण बाध्यते । एवं यत्रापि 'न तौ पशौ करोति' इत्यादौ शास्त्रप्राप्तस्य निषेधस्तत्रापि प्रापकशास्त्रस्य यद्यपि निषेधस्य प्राप्तिसापेक्षत्वेनोपजीव्यत्वादत्य-

---

[1] तै. सं. १-१-३. [2] तै. सं. २-६-२.

न्तबाधानुपपत्तेर्विशेषविषयत्वमावश्यकं . तथाऽपि तत्र विकल्पाङ्गीकाराद्भावपक्षे विशेषविषयत्वप्रतिबन्धाभ्नोक्तलक्षणाव्याप्तिः । यथा च तत्र रागप्राप्तनिषेधवद्भ्रान्तिप्राप्तस्य बाधमङ्गीकृत्य न विकल्पस्तथा कौस्तुभे द्रष्टव्यम् । वक्ष्यते चात्रापि दशमे । अतस्सिद्धं बाधस्य द्वैविध्यम् ॥ ७ ॥



## (८)—अहीनो वा प्रकरणाद्गौणः ॥ १५ ॥ असंयोगात्तु मुख्यस्य तस्मादपकृष्येत ॥ १६ ॥

"तिस्र एव साह्नस्योपसदो द्वादशाहीनस्य"[1] इत्यत्र ज्योतिष्टोमप्रकरणाम्नाते वाक्ये **अहीनः** अहीनशब्दः **गुणो वा** गौण्या वृत्त्या बह्वदिवसकत्वसादृश्येनाहस्साध्यक्रतुसमूहत्वरूपावयवयोगात्मकगौणतया वा यागाभ्याससमुदायात्मकज्योतिष्टोमपर एव । कुतः **प्रकरणात्** ज्योतिष्टोमप्रकरणाबाधात् । अन्यथा अहीनपदस्याप्रकृताहीनक्रतुपरत्वे तदुद्देशेन द्वादशोपसत्त्वविधौ ज्योतिष्टोमप्रकरणबाधापत्तेः ॥ १५ ॥ एवं पूर्वपक्षे सिद्धान्तमाह—**मुख्यस्य** अहीनपदरूढ्यर्थस्य क्रतुविशेषस्य ज्योतिष्टोमप्रकरणे **असंयोगात्तु** अविद्यमानत्वात् **तस्मात्** प्रकृतात् ज्योतिष्टोमात् **अपकृष्येत** अपकृष्य विच्छिद्य अहीनपदमुख्यार्थे क्रतुविशेषे निवेश्येत । अहीनपदस्य सत्रज्योतिष्टोमादौ वैदिकैरप्रयुज्यमानतया क्रतुविशेष एव प्रयुज्यमानतया च यजतिचोदनाचोदितसुत्यासमुदायत्वावच्छिन्ने रूढिरवश्यस्वीकार्या । रूढिबाधापेक्षया च प्रकरणबाध एव वरमिति भावः ॥ १६ ॥

**एवं विरोधे बलाबलं निरूप्याधुना विरोध एव कास्ति क नास्तीति चिन्तार्थमुत्तरः प्रपञ्चो[2] यावदध्यायसमाप्ति ॥**

---

[1] तै. सं. ६-२-९.

[2] अत्र चतुर्थपादे तृतीयादेरधिकरणषट्कस्य विध्यनुवादचिन्तारूपतया प्रासङ्गिकत्वेऽपि न क्षतिरिति प्रपञ्चपदेन सूचितम् ॥

ज्योतिष्टोमे उपसदो विधाय "तिस्र एव साह्नस्योपसदो द्वादशाहीनस्य"[1] इति[2] श्रुतम् । तत्र द्वादशत्वं किं द्वादशाहे निविशते[3] प्रकरण एव वेति चिन्तायां त्रित्वस्य तावदुपसदनुवादेन विहितस्य वार्त्रघ्नयन्यायेन[4] स्वापूर्वसाधनीभूतोपसदर्थत्वादुपसदां च प्रकरणात् ज्योतिष्टोममात्राङ्गत्वावगतेः साह्नपदं अह्ना समाप्यमानत्वा[5]त्तदनुवादमात्रं न तूद्देश्यविशेषणं वाक्यभेदात् वैयर्थ्याच्च[6] । अतश्च तद्वदेव द्वादशत्वमपि तदनुवादेन विधीयमानमुपसदर्थमेव । न च तस्याहीनोद्देशेन विधिः । उपसदुपसर्जनत्वेन श्रुतस्य तस्याहीनसम्बन्धानुपपत्तेः, तस्यावृत्त्या द्वादशत्वापत्तेश्च । द्वादशाहप्रकरणपठितवाक्यान्तरेण तत्र तस्य प्राप्तत्वाच्च । अतोऽस्यापि त्रित्वेन विकल्पः । अहीनपदं च न हीयत[7] इति व्युत्पत्त्या नञ्समासमङ्गीकृत्य ज्योतिष्टोमानुवादकम् । सर्वे ह्यन्ये क्रतवो विकृतित्वादेनमपेक्षमाणा न जहति ॥

---

1 तै. सं. ६-२-५.

2 तैत्तिरीयसंहितायाष्षष्ठे काण्डे द्वितीयप्रपाठकस्य तृतीयानुवाके "यदुपसद उपसद्यन्ते भ्रातृव्यपराणुत्त्यै" इति प्रथममुपसद्विधिः । ततः "तिस्र उपसद उपैति" इति तत्र त्रित्वविधिः । ततः "द्वादशाहीने सोम उपैति" इति द्वादशत्वविधिश्श्रूयते ॥

3 सिद्धान्तकोटेः प्रथममुल्लेखः सूत्रे वाशब्दसूचितायास्सिद्धान्तोपक्रमताया ज्ञापनायेति शम्भुभट्टीयम् । तच्चिन्त्यं अग्रिमाधिकरण एव व्यभिचारात्॥

4 नवमप्रथमपादे द्वितीयाधिकरणस्य द्वितीयवर्णकेन ॥

5 "तं सहैवाह्ना संस्थापयन्ति" इत्यर्थवादवाक्यमिह द्रष्टव्यम् ॥

6 न हीयते न त्यज्यत इति अहीनः कर्मणि निष्ठा । एतदेव विवृतं 'सर्वे हि' इत्यादिना ॥

7 षष्ठ्यन्तस्य नामार्थान्वये व्युत्पन्नतायाः प्राचीनैरङ्गीकाराच्च वाक्यभेदप्रसक्तिरिति वैयर्थ्यदोषकथनम् ॥

अथ[1] नायं नञ्समासः तथात्वे तस्य तत्पुरुषत्वात् "तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः" इति स्मृत्या "प्रकृत्या पूर्वपदम्" इत्यनुवृत्तिसहितयाऽव्ययाख्यस्य नञ्पूर्वपदस्योदात्ताख्यप्रकृतिस्वरत्वविधानादाद्युदात्तत्वापत्तेः। अपि तु मध्योदात्तत्वात् "अह्नः खः क्रतौ" इति स्मृत्या "तस्य समूहः" इत्यनुवृत्तिसहितया अहश्शब्दस्य क्रतुसमूहवाचिखप्रत्ययान्तत्वविधानात्तस्य च "आयनेयीनीयियः फ ढ ख छ घां प्रत्ययादीनाम्" इति स्मृत्या ईनादेशविधानादयं शब्दः खप्रत्ययान्तः। तथात्वे हि "आद्युदात्तश्च" इति सूत्रात्प्रत्ययादेरीकारस्योदात्तस्वरसिद्धिः। न च ईकारस्येनादेशावयवत्वात्कथं प्रत्ययावयवत्वमिति वाच्यं "आयन्नादिषूपदेशिवद्वचनं स्वरसिद्ध्यर्थम्" इति स्मृत्या प्रत्ययस्वरसिद्ध्यर्थं ईनादेशस्यापि प्रत्ययोपदेशकालकत्वरूपोपदेशिवद्भावस्य विहितत्वात्। अतो नायं नञ्समास इति चेत्—तथाऽपि प्रकरणानुरोधादहीनशब्दस्य बहुदिवसकत्वसादृश्येन गौणतयैवोपपत्तेः[2]। वस्तुतस्तु—अहस्साध्यक्रतुसमूहत्वस्य शक्यतावच्छेदकस्य ज्योतिष्टोमेऽप्यभ्याससमूहात्मके सत्त्वादहीनशब्दस्य मुख्यवृत्त्यैवानुवादत्वोपपत्तिरिति प्राप्ते—

आस्तां तावदहीनपदम्। एवकार एव तावत्त्रित्वातिरिक्तसङ्ख्यायास्साधनत्वाभावमनुवदन् न द्वादशत्वेन विकल्पं सहते।

---

[1] भाष्याद्युक्तां सिद्धान्तयुक्तिमाशङ्क्य निराकरोति—अथेति॥

[2] रथकाराधिकरणे तु प्रकरणबाधाप्रसक्तेः रूढिर्न त्यज्यत इति भावः। अहीनपदस्य रूढत्वं नास्ति येन रथकाराधिकरणविरोधश्शङ्क्येतेत्याह—वस्तुतस्त्विति॥

किञ्चैवं प्रकरणादेव त्रित्वद्वादशत्वयोर्ज्योतिष्टोमसम्बन्धोपपत्तेस्साह्नाहीनशब्दयोर्द्वयोरपि वैयर्थ्यप्रसङ्गः । अस्मन्मते तु एकेनाह्ना समाप्यमानत्वेन स्वल्पस्य कर्मणस्स्वल्पैव सङ्ख्योचितेति औचित्येन स्तुतिपरतया साह्नशब्दस्य न वैयर्थ्यम् । सङ्ख्ययोरेकार्थत्वेन विधौ शब्दभेदो न युज्यते । अतोऽहीनपदं साह्नादर्थान्तरपरमित्यप्यविवादम् । युक्तं चैतत् । "तस्य समूहः" इत्यनुवृत्तिसहितया "अह्नः खः क्रतौ" इति स्मृत्या वैदिकप्रयोगाच्च अहस्समूहसाध्यक्रतुविशेषत्वस्यैव सत्रादिव्यावृत्तस्य यजतिचोदनाचोदितसुत्यासमुदायात्मकत्वस्यैव योगरूढ्या[1]ऽहीनपदशक्यतावच्छेदकत्वप्रतीतेर्न द्वादशत्वस्य ज्योतिष्टोमे निवेशसम्भवः । अतश्चाहीनसम्बन्ध्युपसदुद्देशेन द्वादशत्वविधिः । षष्ठीस्थले च परस्परसम्बन्धस्य प्राचीनमते व्युत्पन्नत्वान्न विशिष्टोद्देशे वाक्यभेदः । वस्तुतस्तु—अहीनोद्देशेनातिदेशप्राप्तेः पूर्वप्रवृत्त्या द्वादशोपसत्त्व[2]मेवानेन वाक्येन द्वादशत्वप्राप्तिफलकं "तां चतुर्भिः"[3] इतिवद्विधीयते । द्वादशाहप्रकरणस्थवाक्यान्तरं तु शाखान्तरपरतया वा सत्रमात्रपरतया वा न विरुध्यते इति

---

[1] अहीनपदे अहःपदार्थस्य दिनस्य समूहसाध्यक्रतुरूपखप्रत्ययार्थैकदेशे समूहेऽन्वये दिनसमुदायसाध्यक्रतुत्वावच्छिन्नं योगार्थः । सत्रादिविलक्षणे क्रतुविशेष एव वैदिकप्रयोगबलात् यजतिचोदनाचोदितसुत्यासमुदायत्वावच्छिन्नं रूढ्यर्थ इति योगरूढताऽहीनपदस्य ॥

[2] द्वादशपदार्थोपसत्पदार्थाभ्यां विशिष्टाया भावनाया अहीनोद्देशेन विधौ पश्चादरुणैकहायनीन्यायेन तयोः परस्परान्वयः । अतो न विधेयानेकता । न वा सुबन्तयोः परस्परान्वयापत्तिरिति ध्येयम् ॥

[3] १-२-४. अधिकरणे इदं द्रष्टव्यम् ॥

भाष्यकाराभिप्रायः । वस्तुतस्तु[1]—द्वादशाहप्रकरणस्थवाक्यस्य सत्राहीनोभयसाधारणत्वादेवाहीनेऽपि द्वादशत्वप्राप्त्युपपत्तेरेकवाक्यतालाभाय प्रकरणपाठार्थवत्त्वाय चौचित्येन त्रित्वविधेरेवायमर्थवादः । महतः कर्मणो महती सङ्ख्योचिता न तु प्रकृत इति च स्तुतिः । अतो वाक्येन प्रकरणं बाधित्वा द्वादशत्वस्याहीनसम्बन्धावगतेः न तेन ज्योतिष्टोमे द्वादशत्वम् । मूले तु[2] षष्ठ्या भाक्तश्रुतित्वमादाय श्रुतिप्रकरणविरोधोपन्यास इति द्रष्टव्यम् ॥८॥

——o——

## (९)–द्वित्वबहुत्वयुक्तं वाऽचोदनात्तस्य ॥ १७ ॥ पक्षेणार्थकृतस्येति चेत् ॥ १८ ॥ न प्रकृतेरेकसंयोगात् ॥ १९ ॥

"तस्मादपकृष्यते" इति पूर्वसूत्रादनुवर्तते । **द्वित्वबहुत्वयुक्तं वा** द्विवचनबहुवचनयुक्तौ "युवं हिस्थस्स्वर्पती इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात् । एते असृग्रमिन्दव इति बहुभ्यो यजमानेभ्यः" इत्यत्र ज्योतिष्टोमप्रकरणाम्नातवाक्ये विधीयमानौ मन्त्रौ तस्मात् प्रकृताज्ज्योतिष्टोमात् अपकृष्येते अपकृष्य "एतेन राजपुरोहितौ सायुज्यकामौ यजेयाताम्" "एको द्वौ बहवो वाऽहीनेन यजेरन्" इति विहिते द्विबहुयजमानके कुलायाहीनादावेव निवेश्येते । कुतः तस्य द्विबहुयजमानकत्वस्य प्रकृते ज्योतिष्टोमे **अचोदनात्** अविधानात् इति

---

[1] वार्तिककारीयस्सिद्धान्तोऽयम् ॥

[2] प्राचीनग्रन्थपर्यायं मूलपदमिह शास्त्रदीपिकादिग्रन्थपरम् । न तु भाष्यपरम् । भाष्ये पूर्वपक्षिणा वाक्येनैव प्रकरणबाधस्य शङ्कितत्वात् ॥

सिद्धान्तोपक्रममधिकरणसूत्रम् ॥ १७ ॥ अस्मिन् सिद्धान्ते आशङ्कते— **पक्षेण** पाक्षिकेणासामर्थ्येन एकस्य यजमानस्य कदाचित् दक्षिणादिसम्पादनपुरस्सरमशक्तौ सत्यां **अर्थकृतस्य** यथाशक्तिन्यायानुसारेणैकत्वबाधेनाप्यर्थात्प्राप्तस्य द्विबहुयजमानकत्वस्य प्रकृते ज्योतिष्टोमे सम्भव एव इति **चेत् न प्रकृतेः** निखिलसोमप्रकृतेः ज्योतिष्टोमस्य **एकसंयोगात्** एकेनैव कर्त्रा सम्बन्धात् "सोमेन यजेत" इत्युत्पत्तिविधौ कर्तुरेकत्वस्यौपदेशिकतयाऽन्तरङ्गतया च प्रयोगविध्यन्वयितया बहिरङ्गदक्षिणापरिमाणाद्यनुरोधेन बाधनं न युक्तम् । एकत्वस्याननुष्ठेयतयाऽनुष्ठेयमात्रविषयकयथाशक्तिन्यायविषयताऽपि नास्तीति भावः ॥१८-१९

**ज्योतिष्टोम एव "उपास्मै गायता नरः"[1] इति नित्यां प्रतिपदं[2] विधाय "युवं हि स्थस्स्वर्पती इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात् । एते असृग्रमिन्दवः इति बहुभ्यो यजमानेभ्यः" इति श्रुतम् । तत्राद्यवाक्ये "द्वयोर्यजमानयोः" इति यदि सप्तमी तदा सा निमित्तत्वपरा । यद्यपि च पृथग्विभक्तिश्रवणं तथाऽपि हविरार्त्यधिकरणन्यायेन[3] पाक्षिकत्वाभावेन प्रत्येकं निमित्तत्वापर्यवसानात् प्रधानभूतनिमित्तत्वानुरोधेन मिळितयोरेव द्वित्वावच्छिन्नयजमानत्वावच्छिन्नयोर्निमित्तत्वं प्रतिपाद्यते । यदि तु षष्ठी तदाऽधिकारित्वाख्यसम्बन्धानुवादकासती स्ववैयर्थ्यपरिहारार्थं[4] पदद्वयेऽपि लक्षणामङ्गीकृत्य लाघवात्**

---

[1] तै. ब्रा. १-५-९.

[2] प्रतिपत् नाम स्तोत्रीया आद्या ऋक् ।

[3] षष्ठचतुर्थस्य षष्ठाधिकरणेन ।

[4] मन्त्रविधिपरेऽत्र वाक्येऽधिकारविध्यसम्भवात् वाक्यान्तरसिद्धस्याधिकारस्येहानुवाद एवाश्रयणीयः तस्य चानुवादस्य न किञ्चिदिह प्रयोजनम् ।

द्वित्वयजमानत्वयोरेकं व्यासज्यवृत्तिनिमित्तत्वं प्रतिपादयति। विशेषणविशेष्यभावेऽपि विनिगमनाविरहात् । एवं "बहुभ्यो यजमानेभ्यः" इति तादर्थ्यचतुर्थ्याऽप्यधिकारित्वसम्बन्धानुवादिकया उक्तविधनिमित्तत्वे लक्षणा । अतश्च नान्यतराविवक्षाप्रसङ्गः । निमित्ते च प्रतिपदुद्देशेन मन्त्रविधानेऽपि विजातीयत्वा[1]न्नानेकोद्देश्यता । प्रकरणाच्च[2] प्रतिपत्सम्बन्धलाभ इति पक्षद्वयेऽप्यविवादम् ॥

तदिहेमौ मन्त्रौ ज्योतिष्टोम एव निविशेते उत द्विबहुयजमानके कुलायाहीना[3]दाविति चिन्तायां प्रकरणावरोधात्प्रकृत एव निवेशः । न च तत्र निमित्ताभावः । अतएव "वसन्तेवसन्ते ज्योतिषा यजेत"[4] इत्यादिना उपादेयकर्तृविशेषणत्वेनोक्तस्यैकत्वस्य विवक्षायामपि नित्यत्वेन ज्योतिष्टोमे यथाशक्त्युपबन्धस्य[5] वक्ष्यमाणत्वाद्यद्येको न शक्नुयात्तदा द्विबहुयजमानकत्वप्राप्तेः प्रतिपद्विधानसम्भवात् । अथवा—यजमानशब्दस्य यागकर्तृमात्रवचनस्य पत्न्यामपि सम्भवादाद्यवाक्ये ता-

द्वित्वविशिष्टयजमानाधिकारिकत्वविशिष्टप्रतिपद उद्देश्यत्वे तु वाक्यभेदः। तादृशविशिष्टप्रतिपदि वाक्यलक्षणाङ्गीकारे तु सप्तम्या अधिकारितासम्बन्धावच्छिन्ननिमित्तत्वे लक्षणैव लघीयसीति भावः ।

[1]ईप्सितत्वानीप्सितत्वाभ्यां भाव्यनिमित्तयोर्वैधर्म्यात् एकेनेतराकाङ्क्षाशान्तेरसम्भवात् । सजातीयोद्देश्यभेद एव वाक्यभेद इति भावः ।

[2]तथा च वाक्येन प्रतिपद्रूपभाव्यसम्बन्धानपेक्षणान्नैकवाक्येऽनेकोद्देश्यताऽऽशङ्काऽपि ।

[3]कुलायाहीनयोर्विधिपरं वाक्यमत्रैव सिद्धान्ते वक्ष्यते ।

[4]"सोमेन यजेत" इत्युत्पत्तिवाक्यमुपेक्ष्यैतदुपादानं वक्ष्यमाणस्य नित्यत्वस्य वीप्सया प्रतिपत्त्यर्थम् ।

[5]षष्ठतृतीयादिमाधिकरणे इति शेषः ।

वत् स्त्रीलिङ्गत्वे बाधकाभावात् पत्नीद्वित्वे स मन्त्रः । द्वितीयवाक्येऽपि पाशाधिकरणन्यायेन[1] लिङ्गानुरोधेन प्रकरणबाधानुपपत्तेः व्यत्ययानुशासनेन[2] पुल्लिङ्गस्य स्त्रीत्वपरत्वावगतेः पत्नीबहुत्वे द्वितीयो मन्त्रः । नित्या तु प्रतिपत् पत्न्येकत्व इति प्राप्ते—

नित्यत्वेऽपि ज्योतिष्टोमस्य नैकत्वे यथाशक्तिन्याय[3]विषयता उत्पत्त्यादिवाक्येषु समानाभिधानश्रुत्या भावनायामन्वितस्य तस्यान्तरङ्गत्वेनाशक्तौ दक्षिणापरिमाणा[4]द्यङ्गान्तरबाधेनास्यैवानुग्राह्यत्वात् । किञ्च—यत् कृतिसाध्यत्वेनानुष्ठेयतया[5] प्रसक्तं तत्रैव यथाशक्त्युपबन्धो न त्वननुष्ठेये कालादौ अतश्च तद्वदेवास्यापि न तन्न्यायविषयतेति न प्रकृते यागे द्वित्वबहुत्वे । न च यजमानशब्दः पत्नीपरः । पुंस्येव प्रचुरप्रयोगेण शक्त्यवगमेन लक्षणायां प्रमाणाभावात् । यजमानेभ्य इति पुल्लिङ्गस्य 'प्रास्मै'[6]

---

[1]नवमतृतीयस्य पञ्चमेऽधिकरणे प्रकरणसहकृतपाशप्रातिपदिकानुरोधेन बहुवचनस्यैवैकत्वे लक्षणा स्वीकृता ।

[2]"व्यत्ययो बहुलम्" (३-१-८५) इति पाणिनिसूत्रस्थेन "सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च । व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिद्ध्यति बाहुलकेन" इति भाष्येण ।

[3] ६-३-१.

[4]दक्षिणापरिमाणादिकं कर्त्रानत्यर्थतया कर्त्रन्वयिनि प्रयोगविधावेवान्वेतीति बहिरङ्गम् ।

[5]अनुष्ठेयतया अनुष्ठेयविशेषणतया वा प्रसक्तमित्यर्थः । अतः "कृष्णानां व्रीहीणाम्" (तै. सं. १-८-९) इत्यादौ कृष्णत्वादिगुणस्य यथाशक्ति न्यायविषयत्वेऽपि न क्षतिः । कृष्णत्वं हि तत्र विहारदेशनयनादिरूपानुष्ठानविषयव्रीहिविशेषणम् । कर्तृविशेषणमेकत्वं तु न तथा कर्तुरनुष्ठीयमानत्वाभावात् ।

[6]तै. ब्रा. ३-६-६.

इत्यस्य मेष्यामिव[1] निषिद्धत्वेनागतिकव्यत्ययानुशासनाङ्गीकारानुपपत्तेश्च । अतश्च वाक्येन प्रकरणबाधात् यत्र "एतेन राजपुरोहितौ सायुज्यकामौ यजेयाताम्" "एको द्वौ बहवो वा यजेरन्" इत्याहत्यैव कुलायाहीनादिषु द्वित्वबहुत्वविधानं तत्रैवास्योत्कर्षः । न चात्र तत्क्रतूपस्थापकाभावः । प्रतिपत्सम्बन्धेनैव सामान्यतः क्रतुसम्बन्धेऽवगते निमित्तबलेन तद्विशेषोपस्थितौ बाधकाभावात् ॥ ९ ॥



## (१०)–जाघनी चैकदेशत्वात् ॥२०॥ चोदना वाऽपूर्वत्वात् ॥ २१ ॥ एकदेश इति चेत् ॥ २२ ॥ न प्रकृतेरशास्त्रनिष्पत्तेः ॥२३

**जाघनी च** "जाघन्या पत्नीस्संयाजयन्ति" इति दर्शपूर्णमासप्रकरणाम्नातं वाक्यं प्रकरणादुत्कृष्यते जाघनीशब्दस्य **एकदेशत्वात्** उत्तरार्धादिशब्दवदेकदेशद्रव्यवाचित्वेन जाघन्याः परप्रयुक्ततया प्रयाजशेषवदुद्देश्यत्वावगत्या जाघन्युद्देशेन पत्नीसंयाजविधानस्यैवाश्रयणीयतया प्रकरणे च जाघन्या विरहेण पशुयाग एवोत्कर्षावश्यकत्वात् ॥२०॥ एवं पूर्वपक्षे सिद्धान्तमाह—उक्ते जाघनीवाक्ये जाघन्या गुणतया **चोदना वा** विधिरेव **अपूर्वत्वात्** प्रकरणे जाघन्या अप्राप्तत्वेनोद्देश्यत्वासम्भवात् । पत्नीसंयाजानां च प्राप्ततयोद्देश्यत्वसम्भवात् । तस्मान्नोत्कर्षः ॥ २१ ॥ पूर्वपक्ष्युक्तहेतुमनूद्य निराकरोति—**एकदेशः**

---

[1]नवमाद्यस्य पञ्चदशेऽधिकरणे अध्रिगुप्रैषे पुंपशुमादायापि निवेशसम्भवान्न लक्षणाऽऽश्रिता । इह तु यजमानद्वित्वस्य प्रकृतौ सर्वथा निवेशासम्भवात्पाशाधिकरणन्यायेन लक्षणैव युक्तेत्यभ्युच्चयमात्रमिदम् ।

अवयवभूता जाघनी अवयविनं पशुमन्तरा कथं प्रकरणे उपपद्यतां **इति चेत् न प्रकृतेः** जाघन्यवयविनः पशोः **अशास्त्रनिष्पत्तेः** शास्त्रप्राप्तत्वानावश्यकत्वात् । तथाच पशोर्दर्शपूर्णमासप्रकरणेऽविहितत्वेऽपि लौकिकपशुसम्बन्धिजाघन्याः क्रयादिनाऽप्यानीतायाः पत्नीसंयाजे गुणत्वोपपत्तिः । जाघनीपदं च वस्तुतः पश्ववयवरूपैकदेशवाचकमपि पशुपुच्छरूढतया नोत्तरार्धादिपदवत्ससम्बन्धिकं, येन प्रकृतैकदेशस्यैव ग्रहणं "उत्तरार्धात्स्विष्टकृते समवद्यति "* इत्यादाविवाशङ्क्येतेति ॥ २२-२३ ॥

**दर्शपूर्णमासयोः पत्नीसंयाजावान्तरप्रकरणे[1] "जाघन्या[2] पत्नीस्संयाजयन्ति" इति श्रुतम् । तत्र किमनेन वाक्येन अग्नीषोमीयपश्वङ्गनिष्पन्नजाघन्युद्देशेन पत्नीसंयाजा विधीयन्ते ततश्चैतस्य विधानस्य प्रकरणादुत्कर्षः, उत पत्नीसंयाजोद्देशेन जाघनी द्रव्यत्वेन विधीयत इति चिन्तायां जाघनीशब्दस्योत्तरार्धादिशब्दवदेकदेशद्रव्यवाचित्वेन जाघन्याः परप्रयुक्तत्वावगमात् प्रयोजनवत्त्वावगमेन प्रयाजशेषवत्[4] उद्देश्यत्वावगतेः तृतीयायाः द्वितीयार्थलक्षणामङ्गीकृत्य पत्नीसंयाजा एव तदुद्देशेन विधीयन्ते । एवं द्वितीयविधिप्रकारा[5]ङ्गीकरणाल्लाघवं, इतरथा तृतीयविधिप्रकारापत्तेः । एवं च वाक्येन प्रकरणबाधात् पत्नीसंयाजानां पश्वङ्गत्वमात्रप्रसक्तावपि "आज्येन पत्नीस्संयाजयन्ति"† इति वचनस्य निर्विषयत्वापत्तेः प्रकरणबाधायोगात् तेन[3] चारादुप-**

---

[1]अवान्तरप्रकरणकीर्तनफलं सिद्धान्ते व्यक्तम्. *तै. सं. २-६-६.

[2]जाघनी पशोः पुच्छम्. †तै. सं. २-६-१०.

[3]४-१-१३ अधिकरणे उत्तरार्धशब्दविचारो द्रष्टव्यः ।

[4]४-१-१४ अधिकरणे प्रयाजशेषन्यायो द्रष्टव्यः ।

[5]१-४-२ अधिकरणे विधिप्रकारषट्कं प्राक् निरूपितम् ॥

कारकतया दर्शपूर्णमासाङ्गत्वावगमेऽप्यनेन वचनेन संनिपत्योपकारकतयाऽग्नीषोमीयपशुयागाङ्गतया विधिर्नानुपपन्नः । न च जाघन्याः परप्रयुक्तपश्वनुनिष्पन्नत्वस्य लोकेऽपि सम्भवादव्यभिचरितक्रतुसम्बन्धाभावेन कथं यागीयत्वोपस्थितिः । अग्नीषोमीयप्रकरणे श्रुतेन "जाघन्या पत्नीस्संयाजयन्ति" इति वाक्यान्तरेण प्रकृतापूर्वसाधनीभूतजाघन्युद्देशेन पत्नीसंयाजविधायकेन यागसम्बन्धोपस्थितौ "अंशुं गृह्णाति"* इतिवद्[1]नारभ्याधीतेऽ[2]प्यस्मिन् क्रतुसम्बन्धावगमोपपत्तेः ॥

यत्तु[3]—कौश्चिदतिदेशादेव पत्नीसंयाजानां पशुयागसम्बन्धावगमात् प्राकरणिकवाक्यं तद्धर्मकर्मान्तरविधायकं पूर्वपक्ष इत्युक्तम्—तत् अतिदेशेन पत्नीसंयाजानामारादुपकारकत्वविधया पशुयागसम्बन्धावगमेऽपि तात्पर्यग्राहकाभावे अनारभ्याधीतवाक्ये जाघन्यास्तदीयत्वोपस्थितौ प्रमाणाभावात् अतिदेशेन सन्निधाने प्रकरणान्तरासम्भवेन कर्मान्तरत्वानुपपत्तेश्चोपेक्षितम् । तस्माद्वाक्येन प्रकरणं बाधित्वा इदं विधानमग्नीषोमीये उत्कृष्यत इति प्राप्ते—

जाघनीशब्दस्य पश्ववयववाचित्वेऽपि उत्तरार्धादिशब्दवत् ससम्बन्धिकत्वाभावात् लोकसिद्धहट्टस्थजाघन्या पवाज्यवत्पत्नीसंयाजोद्देशेन विधिसम्भवे तृतीयया लक्षणाङ्गीकरणे प्रमाणाभावः । अतिदेशात्प्राप्तानां पत्नीसंयाजानामारादुपकारकत्वबाधेन

---

[1] ३-६-११ अधिकरणे वाक्यमिदं चिन्तितम्. *तै. सं. ३-३-४.

[2] दर्शपूर्णमासप्रकरणाम्नातस्यापि "जाघन्या" इति वाक्यस्यानारभ्याधीतत्वं अपेक्षितपशुप्रकारणभिन्नप्रकरणस्थत्वसाम्येन ज्ञेयम् ।

[3] शास्त्रदीपिकाप्रकाशोक्तमिदम् ।

पशुप्रकरणस्थवाक्येनैव सन्निपत्योपकारकत्वलाभे दर्शपूर्णमासप्रकरणस्थवाक्यवैयर्थ्यापत्तिश्च । अतः पत्नीसंयाजोद्देशेनैव जाघनीविधिः । न च प्राप्तकर्मानुवादेन पत्नीनामपि विधाने देवतात्वेन प्राप्त्युद्भावनेऽपि च विशिष्टोद्देशे वाक्यभेदापत्तिरिति वाच्यं अवान्तरप्रकरणादेव कर्मविशेषोद्देशसम्भवेनावाक्यभेदात् । अतो नास्य प्रकरणादुत्कर्षः । अग्नीषोमीयप्रकरणस्थवाक्यं तु विकल्पेन प्राप्ताया नियमार्थमिति वक्ष्यते[1] । न चैवं तत्र हृद्स्थजाघन्या एव नियमसम्भवेन पश्वनुनिष्पन्नाया ग्रहणे प्रमाणाभावः । प्रतिपत्त्यन्तराभावेनोपस्थितायास्तस्यास्त्यागे प्रमाणाभावादिति तत्रैव वक्ष्यमाणत्वात्[1] ॥ १० ॥

---

(११)—संतर्दनं प्रकृतौ क्रयणवदनर्थलोपात्स्यात् ॥२४॥ उत्कर्षो वा ग्रहणाद्विशेषस्य ॥ २५॥कर्तृतो वा विशेषस्य तन्निमित्तत्वात् ॥२६॥ क्रतुतो वाऽर्थवादानुपपत्तेस्स्यात् ॥ २७ ॥ संस्थासु कर्तृवद्धारणार्थाविशेषात् ॥ २८ ॥ उकथ्यादिषु वाऽर्थस्य विद्यमानत्वात् ॥२९॥ अविशेषात् स्तुतिर्व्यर्थेति चेत् ॥ ३० ॥ स्यादनित्यत्वात् ॥ ३१ ॥

---

[1] १२-४-६ अधिकरणे.

ज्योतिष्टोमे आधिषवणफलके प्रकृत्याम्नाते "न सन्तृणत्त्यसन्तृण्णे हि हनू अथो खलु दीर्घसोमे सन्तृद्ये धृत्यै"[1] इत्यत्र श्रुतं **सन्तर्दनं प्रकृतौ** ज्योतिष्टोमप्रकरण एव निविष्टं **स्यात् अनर्थलोपात्** दीर्घश्चासौ सोमश्चेति कर्मधारये इष्टयाद्यपेक्षया दीर्घत्वस्य सोमवत्त्वस्य च ज्योतिष्टोम एव सम्भवेन दीर्घसोमपदार्थबाधविरहात् । **क्रयणवत्** यथा "गवा क्रीणाति". "वाससा क्रीणाति"[2] इत्याम्नाताः क्रियाः विकल्पेन प्रकृतौ निविशन्ते तथा असन्तर्दनं सन्तर्दनं च प्रकरण एव विकल्पेन निविशते । क्रयसमुच्चयस्य द्वादशे स्थापयिष्यमाणत्वेऽपि तत्रत्यपूर्वपक्षाभिप्रायेणेह पूर्वपक्षिणा क्रयदृष्टान्तोऽभिहित इति बोध्यम् ॥२४॥ एवं पूर्वपक्षे सिद्धान्तमाह—प्रकरणात् **उत्कर्षो वा** उत्कर्ष एव सन्तर्दनस्य विकृतिषु **विशेषस्य** "दीर्घसोमे"[1] इत्यंशस्य **ग्रहणात्** उपादानात् । प्रकरण एव तस्य निवेशे तादृशविशेषग्रहणं व्यर्थं स्यात् । दीर्घत्वं च सजातीयसोमयागापेक्षयैव झडित्युपतिष्ठते, न तु विजातीयेष्ट्याद्यपेक्षया । 'तथा च ज्योतिष्टोमापेक्षया दीर्घे विकृतिभूते सोमयागे एव तस्मिन्नेवोत्कर्षेण निवेशस्सन्तर्दनस्येति ॥ २५ ॥ अत्र पूर्वपक्षी शङ्कते—**विशेषस्य** 'दीर्घसोमे'[1] इत्यस्य **कर्तृतो वा** दीर्घस्य सोम इत्येवं कर्तृपरतयैवोपपत्तेः **तन्निमित्तत्वात्** तस्य कर्तृदैर्घ्यस्य कादाचित्कत्वेन निमित्तत्वसम्भवात् सन्तर्दनस्य नैमित्तिकतया प्रकरण एव निवेशोपपत्तिः ॥ २६ ॥ अत्र सिद्धान्ती समाधत्ते—**क्रतुतो वा** 'दीर्घसोमे'[1] इत्यस्य दीर्घश्चासौ सोमश्चेति क्रतुपरतयैवोपपत्तिः **स्यात्** । अन्यथा "धृत्यै"[1] इति **अर्थवादानुपपत्तेः** यजमानदैर्घ्येण फलकविदारणाप्रसक्तेः सोमविवृद्ध्यैव च तत्प्रसक्तया सन्तर्दनस्य धृतिफलकत्वप्रतिपादनपरस्यार्थवादस्योपपत्तिः ॥ २७ ॥ ननु अग्निष्टोमादन्यत्र **संस्थासु** सन्तर्दनस्य निवेशो वाच्यस्स च न सम्भवति

[1] तै. सं. ६-२-११. [2] तै. सं. ६-१-१०.

**कर्तृवत्** कर्तृभूतयजमानदैर्घ्यपरत्व इव संस्थापरत्वेऽपि **धारणार्थावि-शेषात्** "धृत्यै"[1] इत्यर्थवादानुपपत्तेराविशेषात् । "दश मुष्टीर्मिमीते" इति वचनेन तत्रापि सोमपरिमाणैक्येन सोमदैर्घ्यासम्भवादिति चेत् न **उक्थ्यादिषु वा** संस्थासु निवेशः तत्र प्रदानविवृद्धया सोमविवृद्धि-रूपस्य **अर्थस्य** दीर्घसोमपदार्थस्य **विद्यमानत्वात्** ॥ २८-२९ ॥

"दशमुष्टीर्मिमीते" इति वचनेन तदधिकसोममानासम्भवात् प्रदेयाविवृ-द्धेश्च प्रकारान्तरेणापि सम्भवात् कर्तृदैर्घ्यपरत्व इव संस्थापरत्वेऽपि **अविशेषात्** "धृत्यै"[1] इति **स्तुतिः व्यर्था** अनुपपन्नार्था **इति चेत्** न संस्थासु निवेशः **स्यात्** सन्तर्दनस्य । सोमपरिमाणस्य **अनित्य-त्वात्** अनियतत्वात् "प्रजाभ्यस्त्वा इत्यवशिष्टानंशूनुपसमूहति" इत्य-नेनोपसमूहनविधानेन यावदपेक्षितसोमग्रहणप्रतीतेः । तदेवं सोमद्रव्यत एव प्रदेयविवृद्धिसम्भवे द्रव्यान्तरेण तद्विवृद्धिर्न युक्ता समाश्रयितुम् । त-स्मात् संस्थास्वेव निवेश इति भाष्यकृतां पक्षः । वार्तिककाराणां तु संस्थास्वेवेति न नियमः किन्तु विकृतिमात्रे सोमविवृद्धेस्तत्रापि सत्त्वा-दिति मतम् ॥ ३०-३१ ॥

**ज्योतिष्टोमे अधिषवणफलके[2] प्रकृत्य "न सन्तृणत्ति"[1] इत्यनेनासन्तर्दनं विधाय "अथो खलु दीर्घसोमे सन्तृद्ये धृत्यै"[1] इत्यनेन सन्तर्दनं विहितम् । सन्तर्दनं नाम द्वयोः फलकयो-स्संश्लेषप्रदेशतनूकरणेनैकोपर्यपरस्य[3] संश्लेषः । तदेवं सन्तर्दनं प्रकरण एव निविशते उत अग्निष्टोमादन्यत्रोत्कृष्यत इति चि-न्तायां—प्रकरणानुग्रहादनुत्कर्षः । न च वाक्यविरोधः । ज्यो-**

---

[1] तै. सं. ६-२-११.

[2] अभिषवाधारकाष्ठफलके इत्यर्थः.

[3] लोहकीलेनेतिशेषः.

तिष्टोमस्यापीष्ट्याद्यपेक्षया दीर्घत्वात्सोमद्रव्यकत्वाच्च[1] दीर्घसोमत्वोपपत्तेः । अतश्च व्रीहियवादिवत्[2] सन्तर्दनासन्तर्दनयोर्विकल्पः । यस्त्वत्र सूत्रे क्रयणवदिति क्रयदृष्टान्तो विकल्पे दत्तः स द्वादशे "दशभिः क्रीणाति" इति वचनेन समुच्चयस्य[3] वक्ष्यमाणत्वात् वचनाभावं कृत्वा बोध्यः । अस्तु वा इष्ट्यादेरिहानुपादानात् तदपेक्षया दीर्घत्वस्य च नित्यत्वेन दीर्घसोमपदवैयर्थ्यापत्तेरष्टदोषदुष्टविकल्पस्य चान्याय्यत्वात् दीर्घस्य यजमानस्य सोमो दीर्घसोम इत्येवं षष्ठीतत्पुरुषमपि प्रकरणानुरोधेनाङ्गीकृत्य यजमानदैर्घ्ये निमित्ते सन्तर्दनविधानम् । यदि तु निषादस्थपत्याधिकरणन्यायेन[4] कर्मधारयस्यैव न्याय्यत्वात् यजमानदैर्घ्येण च फलकाविदारणाप्रसक्तेस्तद्द्वारकत्वेन सन्तर्दनस्तुतेरसम्भवेन धृत्या इत्यर्थवादानुपपत्तेः दीर्घश्चासौ सोमश्चेति कर्मधारय एवाङ्गीक्रियते । तदाऽपि ज्योतिष्टोम एवोक्थ्यादिसंस्थान्तरयुक्ते प्रदानविवृद्ध्या प्रदेयसोमाविवृद्धेरावश्यकत्वात् दीर्घसोमत्वोपपत्तेर्वाक्यप्रकरणयोरविरोधान्निवेशः । न च प्रदानविवृद्धेस्तोयादिना सम्पादनम् । सोमद्रव्यकस्य यागस्य विना वचनं द्रव्यान्तरसंसृष्टेन सोमेन करणायोगात् । न च त्रिपर्वदशमुष्टित्वरूपसोमपरिमाणबाधः । स्थूलदीर्घपर्वसोमग्रहणेन तद्बाधाभावात् । अत एव सोमपदेन यागलक्षणायां प्रमाणाभावात् सोमदीर्घपर्वत्वमेव सन्तर्दने निमित्तमित्यपि शक्यं वक्तुम् ।

---

[1] सोमेन यजेत इत्यादौ मत्वर्थलक्षणया सोमपदस्य सोमद्रव्यकयागपरत्वदर्शनादिहापि सोमपदं सोमद्रव्यकयागपरं, दीर्घश्चासौ सोमश्चेति कर्मधारय इति भावः.

[2] १२-३-४. [3] १२-४-३. [4] ६-१-१३.

वस्तुतस्तु—त्रिपर्वदशमुष्टिपरिमितसोमग्रहणोत्तरं "अवशिष्टानंशूनुपसमूहति" इत्युपसमूहनविधानात्तत्र चार्थवादे "यद्वै तावानेव सोमस्स्याद्यावन्तं मिमीते यजमानस्यैव स्यान्नापि सदस्यानां प्रजाभ्यस्त्वेत्यवशिष्टानंशूनुपसमूहति" इति पूर्वोक्तमानानिन्द्योत्तरादोहनवद्यावदपेक्षितपरत्वप्रतीतेः कपिञ्जलाधिकरणन्यायस्याप्यप्रवृत्त्या परिमाणाभावात्प्रदेयविवृद्धिस्सुलभैव। न चैवमपि अग्निष्टोमसंस्थाया अङ्गत्वादन्यासां काम्यानां तिसृणां संस्थानां च विकृतित्वेन सर्वतः प्रकरणाभावाज्ज्योतिष्टोमे च प्रदानवृद्ध्यभावेन प्रदेयवृद्ध्यभावात् कथं वाक्यप्रकरणयोरविरोध इति वाच्यं काम्यसंस्थासु ग्रहणविवृद्ध्या आश्रयभूतज्योतिष्टोमाभ्यासविवृद्धेरावश्यकत्वात् संस्थानां च तिसृणामपि स्वतः प्रकरणाभावे च ज्योतिष्टोमस्य सर्वत्रानुस्यूतत्वात् काम्यसंस्थाकज्योतिष्टोमप्रयोगे सन्तर्दनविधानेन प्रकरणानुग्रहोपपत्तेः। अत एवाग्निष्टोमसंस्थाकज्योतिष्टोमप्रयोगे असन्तर्दनं, प्रदानविवृद्ध्यभावान्न विकल्पोऽपि। अत एव च दीर्घत्वस्यानुयोगिनः काम्यसंस्थाकज्योतिष्टोमस्य प्रतियोगिनश्च नित्यसंस्थाकज्योतिष्टोमस्य प्रकरणादेव लाभादिति लाघवम्। न चैवमितरसंस्थाकज्योतिष्टोमस्यापि प्रकरणेऽङ्गीक्रियमाणे "एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः य एतेनानिष्ट्वा अथान्येन यजते गर्तपत्यमेव तद्भवति" इत्यत्रापि एतच्छब्देनेतरसंस्थाकज्योतिष्टोमस्य ग्रहणापत्तेः अग्निष्टोमसंस्थाकस्यैव प्रकरणाद्ग्रहणं वक्ष्यमाणं विरुध्येतेति वाच्यं ज्योतिष्टोमत्वावच्छेदेनैव फलवत्त्वेन प्रकरणाङ्गीकारात्। अग्निष्टोमसंस्थाया अङ्गत्वेनेतराङ्गवत्प्रकरणविच्छेदकत्वानुपपत्तेश्च। एतच्छब्देन तु ज्योतिष्टोमत्वावच्छिन्नस्योक्तावपि अन्यशब्देन तद्विकृतिमात्रवाचकेन संस्था-

नामप्युक्तत्वात्तासामपि ज्योतिष्टोमोत्तरकालविधिप्रतीतेरर्थादग्निष्टोमसंस्थाकस्यैव प्रथमकरणोपपत्तेः । अतो वाक्यप्रकरणयोरविरोधात्प्रकरण एव सन्तर्दनस्य निवेश इति प्राप्ते—

भाष्यकारेण तावदिष्टापत्त्यैव सिद्धान्तितम् । पूर्वपक्षश्च प्रकारद्वयेनैव कृतः ॥

वार्तिककारेण तु विकृतिमात्रे अग्निष्टोमातिरिक्तविवृद्धस्तोमके निवेश इत्युक्तम् । तस्यायमाशयः । दीर्घत्वं तावद्ग्रहणविवृद्धिप्रयुक्तसोमविवृद्धिकृतमिति भवतोऽप्यविवादम् । विवृद्धग्रहणानि च संस्थाङ्गानि वचनात् न तु ज्योतिष्टोमाङ्गानि। अतश्च दीर्घसोमत्वस्य ज्योतिष्टोमसम्बन्धाभावाद्विकृतिमात्रपरत्वमिति। न चोक्तग्रहणानां ज्योतिष्टोमाङ्गत्वाभावेऽपि संस्थाद्वारा तत्सम्बन्धसत्त्वात्तस्य दीर्घसोमत्वोपपत्तिः । सर्वतोमुखादौ पूर्वादिदिक्षु अग्निष्टोमादिनानासंस्थाके दिगन्तरे दीर्घसोमत्वस्य सत्त्वादग्निष्टोमसंस्थाकेऽपि सन्तर्दनापत्तेः । यदङ्गग्रहणविवृद्धिप्रयुक्तविवृद्धप्रदेयकत्वं यत्प्रयुक्तविवृद्धप्रदेयकत्वमेव वा यत्र तत्र तदपूर्वसाधनीभूतफलकसंस्कारकतया सन्तर्दनविध्यवगमादुक्तविवृद्धेश्च संस्थाप्रयुक्तत्वेन ज्योतिष्टोमप्रयुक्तत्वाभावात्तदङ्गत्वेन सन्तर्दनविध्यनुपपत्तेर्वाक्येन प्रकरणं बाधित्वा उक्तविधसर्वविकृतावेव निवेशः । न तु संस्थास्वेव तासां विकृतित्वेन प्रकरणाभावादिति । अत एव सन्तृद्यादिति धातोस्सकर्मकत्वादनुषक्तद्वितीयान्तपदेन फलकस्यैव संस्कार्यत्वावगमाद्दीर्घसोमत्वस्योद्देश्यत्वतद्विशेषणत्वयोरसम्भवेन निमित्तत्वमेव । अत एव नायं बहुव्रीहिः । न वा सोमपदेन यागलक्षणया स्वराक्रान्तोऽपि तत्पुरुषः । अपि तु तेन लतामेवोक्त्वा तत्पुरुषः । समासत्वाच्च न निमित्तेऽपि विशिष्टोद्देशो वाक्यभेदः ॥११॥

**(१२)–सङ्ख्यायुक्तं क्रतोः प्रकरणात्स्यात् ॥ ३२ ॥**
**नैमित्तिकं वा कर्तृसंयोगाल्लिङ्गस्य तन्निमित्तत्वात् ॥ ३३ ॥**

ज्योतिष्टोमप्रकरणे समाम्नाते "न प्रथमयज्ञे प्रवृञ्ज्यात्" इति वाक्ये **सङ्ख्यायुक्तं** सङ्ख्यापरप्रथमपदघटितं प्रथमयज्ञपदं **प्रकरणात्** ज्योतिष्टोमप्रकरणानुसारात् **क्रतोः** प्रकृतज्योतिष्टोमसामान्यस्य बोधकं **स्यात्** । तथा च ज्योतिष्टोममात्रे प्रवर्ग्यस्य निषेध इति ॥ ३२ ॥ एवं पूर्वपक्षे सिद्धान्तमाह—तत्र प्रथमयज्ञपदं **नैमित्तिकं वा** प्रथमप्रवृत्तिविषयत्वरूपप्रवृत्तिनिमित्तकमेव **कर्तृसंयोगात्** कर्तृव्यापारत एव प्रथमद्वितीयादिपदव्यवहारात् । **लिङ्गस्य** "एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमो य एतेनानिष्ट्वाऽथान्येन यजते गर्तपत्यमेवापद्यते" इति वाक्यशेषलिङ्गस्यापि **तन्निमित्तत्वात्** अन्यपदेन विकृतिमात्राभिधानात् प्रथमपदे सोमान्तरनिरूपितप्राथम्यवत्प्रयोगविषयत्वनिमित्तकतयैवोपपत्तेः । तस्मात् ज्योतिष्टोमप्रथमप्रयोग एव प्रवर्ग्यनिषेधः ॥ ३३ ॥

**अनारभ्याधीतः प्रवर्ग्यः[1] "यत्प्रवर्ग्यं प्रवृणक्ति"[2] इति श्रुतः । तस्य च "पुरस्तादुपसदां प्रवर्ग्यं प्रवृणक्ति"[3] इति ज्योतिष्टोमाङ्गत्वेन विनियोगः । अव्यभिचरितक्रतुसम्बन्धसहकृताद्विरुक्तत्वन्यायेन[4] तदुपस्थितेः । न चोपसदङ्गत्वमेव किं न स्यादिति वाच्यं उपसत्पदस्य पुरस्तात्कालप्रतियोगित्वेन स्वार्थोपस्थापकस्योद्देश्यसमर्पकत्वाभावात् । उपस्थितत्वात्तद्वाचकपदान्तर-**

---

[1] तप्ते घृते पयःप्रक्षेपः प्रवृञ्जनम् । तद्यस्मिन् कर्मविशेषे विद्यते सोऽयं प्रवर्ग्यः । स कर्मविशेषो यथा संपद्यते तथा प्रवृञ्जनं कुर्यादित्यर्थः ॥ [2] तै. आ. ८-१. [3] तै. आ. ८-६. [4] ३-६-१.

कल्पनयोर्द्देश्यत्वाङ्गीकारे[1] तु उपसदां फलवत्त्वज्ञानार्थं ज्योतिष्टोमोपस्थितेरावश्यकत्वात् लाघवेन तदर्थत्वोपपत्तेः[2] । कौषीतकिब्राह्मणे प्रकरण एव प्रवर्ग्याम्नानाच्च । तत्र[3] च "न प्रथमयज्ञे प्रवृञ्ज्यात्" इति श्रुतम् । प्रथमयज्ञपदेन सर्वसंस्थस्सर्वावस्थश्च ज्योतिष्टोमोऽभिधीयते उत तदीयप्रथमप्रयोगमात्रमिति चिन्तायां—

प्रथमयज्ञशब्दो ज्योतिष्टोमनामैव "एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः" इति सामानाधिकरण्यात् तस्य प्रथमं प्रयुज्यमानत्वेन प्रवृत्तिनिमित्तसत्त्वाच्च । यद्यपि चान्यसंस्थाना मन्यपदेनाभिधानात् तासु ज्योतिष्टोमोत्तरकालत्वविधानान्न सर्वसंस्थाकज्योतिष्टोमस्य प्रथमं प्रयुज्यमानत्वम् । तथाऽपि ज्योतिष्टोमत्वसामानाधिकरण्येन तावत्तदस्तीति प्रवृत्तिनिमित्ताविघातः ।

---

[1] चतुर्थतृतीयचतुर्दशाधिकरणस्थेन वैमृधन्यायेनेति भावः ।

[2] पौर्णमास्या अपि फलवत्त्वात उपस्थिततद्वाचकपदान्तरकल्पनया वैमृधस्य तदङ्गत्वोपपत्तिरिति न वैमृधन्यायविरोधः । दीक्षणीयावाङ्नियमन्यायेनापि न विरोधः । तत्र दीक्षणीयापदस्य श्रुतत्वात् कल्पनीयताविरहात् । ननु—स्थाण्वाहुतिं जुहोतीत्यत्र उपस्थितस्थाणुवाचकपदान्तरकल्पनया यूपरूपादृष्टाश्रयकाष्ठप्रकृतिस्थाणुसंस्कारकत्वमेव स्थाण्वाहुतेः दशमप्रथमषष्ठाधिकरणे स्थापितमिति तादृशस्थाण्वाहुतिन्यायविरोधः । न च प्रवर्ग्यानुवादेन उपसत्पूर्वकालस्य उपसदङ्गतायाश्चेह विधाने वाक्यभेदप्रसङ्गान्नोपसत्पदकल्पनं युक्तमत्रेति वाच्यं ज्योतिष्टोमाङ्गताविधावपि तद्दोषतौल्यात् । वाक्यान्तरकल्पनया तद्वारणं तु प्रकृतेऽपि तुल्यमित्याशङ्कायामाह—कौषीतकीति ॥

[3] अनारभ्याधीतप्रवर्ग्यविध्यनन्तरं कौषीतकिब्राह्मणस्थप्राकरणिकतद्विध्यनन्तरं चेत्यर्थः ।

अतो वाक्यात्प्रकरणाच्च ज्योतिष्टोमत्वावच्छेदेनैवायं प्रतिषेधः। पर्युदासो वा ज्योतिष्टोमभिन्ने प्रवृणक्तीति । अन्यथा विकल्पापत्तेः । यत्तु—"अग्निष्टोमे प्रवृणक्ति"[1] इति वचनं तत्पर्युदासप्रतिप्रसवार्थम् । तदपि च "कामं तु योऽनूचानश्श्रोत्रियस्स्यात्तस्य प्रवृञ्ज्यात्" इत्यनेनोपसंह्रियते। तेनानूचानस्य श्रोत्रियस्याग्निष्टोमसंस्थाकज्योतिष्टोमे नित्यं करणं, अन्यज्योतिष्टोमे नित्यमकरणं, विकृतिषु च नित्यं करणमिति प्राप्ते—

प्रत्येकशक्त्यैवार्थबोधोपपत्तावतिरिक्तशक्तिकल्पनायां प्रमाणाभावात् प्रथमशब्दस्य चाप्रवृत्तप्रवर्तनविषयवाचित्वादाद्यप्रयोगपरत्वावगतेः यज्ञशब्दस्य च लक्षणया प्रयोगपरत्वं प्रकरणात् ज्योतिष्टोमरूपयज्ञपरत्वमेव वाऽङ्गीकृत्य प्रथमयज्ञपदेन ज्योतिष्टोमप्रथमप्रयोगोऽभिधीयते । स चाग्निष्टोमसंस्थाकज्योतिष्टोमस्य, पाञ्चमिकन्यायात्[2] । "प्रथमं यजमानोऽतिरात्रेण यजेत" इति वचनादतिरात्रसंस्थाकस्य च । अतः उभयत्राप्यनेन वचनेन प्रवर्ग्यस्य प्रतिषेधः पर्युदासो वा । न तु विकृत्यन्तरे । तत्रोपदेशातिदेशाभ्यां तदप्राप्तेः[3] । न च ज्योतिष्टोमे द्वितीयादिप्रयोगापेक्षया प्राथम्यस्य विवक्षितत्वाद्विकृतावपि तद्द्वितीयादिप्रयोगापेक्षया प्रयोगवृत्तिप्राथम्यस्य सत्त्वात् कथं न तत्प्राप्तिरिति वाच्यं प्राथम्यस्य निरूपकापेक्षायां द्वितीयादिप्रयोगस्य निरूपकत्वाकल्पानात् । "एष वाव प्रथमो यज्ञो यज्ञानाम्" इति वचनेन ज्योतिष्टोमविकृतिमात्रस्यैव तदवधारणात् । अत एवम्[4] प्रथमप्रयोगाविषयोऽपि ज्योतिष्टोम एव बोध्यः । तथा च प्रथमयज्ञशब्दो वाक्यशेषाद्वैदिकप्रयोगाच्च निरूढलक्षणया सोमान्तर-

---

[1] तै. आ. ८-६. [2] ५-३-१३. [3] प्रथमयज्ञपदप्रवृत्तिनिमित्ताभावादिति शेषः.
[4] उक्तवचनेनैव.

निरूपितप्राथम्यवत्प्रयोगविषयज्योतिष्टोममेवाभिधत्ते । अन्यथा स्वस्वाङ्गितीयादिप्रयोगनिरूपितप्राथम्यवत्प्रयोगविषययज्ञमात्राभिधाने "आहिताग्नय इष्टप्रथमयज्ञा गृहपतिसप्तदशास्सत्रमासीरन्" इत्यादौ सत्रे यज्ञमात्रोत्तरकालतापत्तेः । अत एवोक्तद्विविधज्योतिष्टोमप्रथमप्रयोगे एव प्रवर्ग्यप्रतिषेधः ॥

वस्तुतस्तु—नायं प्रतिषेधः तथात्वे "न तौ पशौ करोति" इतिवत्[1] अतिरात्रप्रथमाहारेऽपि विकल्पापत्तेः । न च[2]

[1] १०-८-२. अधिकरणे एतद्वाक्यविचारो द्रष्टव्यः. ।

[2] विधिनिषेधयोस्सर्वत्र कर्मवाचकपदे सप्तमी श्रूयमाणा क्वचिदधिकरणत्वपरा क्वचिल्लक्षणयोद्देश्यत्वपरेति व्यवस्थायां तावदिदं नियामकम् । तत्र विधिषु यत्र विधेयस्याङ्गत्वं प्रमाणान्तरप्रमितमधिकरणत्वस्य चास्ति प्रयोजनं यथा—'मन्द्रं प्रातस्सवने' इत्येवमादिषु मन्द्रस्वरस्य प्रकरणप्रतीतं ज्योतिष्टोमाङ्गत्वं सवनान्तरव्यावृत्तिश्च अधिकरणत्वप्रयोजनं तत्र सवने इत्यत्राधिकरणत्वपरत्वम् । यत्र तु अङ्गत्वं विधेयस्य नान्यतः प्रमितं प्रयोजनं च नास्त्यधिकरणत्वस्य यथा——"तत्र जयान् जुहुयात्" "तप्ते पयसि" "तावत्या दीक्षणीयायाम्" इत्यादिषु तत्रोद्देश्यत्वपरत्वमेव लक्षणया भवति । वैधक्रियानिषेधेषु तु विद्यमानकर्मवाचकपदोत्तरसप्तम्यास्तु यत्राङ्गत्वमन्यतोऽवगतं प्रयोजनं चास्त्यधिकरणत्वस्य तस्य मध्ये प्रत्यभिज्ञानमपीत्येवं त्रितयमस्ति तत्रैवाधिकरणत्वपरत्वं यथाऽत्रैव क्रत्वव्यभिचार्युपसद्द्वारा प्रकरणेन वा प्रवर्ग्यस्य क्रत्वङ्गत्वात्तदाश्रितस्य प्रथमप्रयोगरूपाधिकरणनिषेधस्य ज्योतिष्टोमाङ्गत्वं अधिकरणताप्रतिपादनस्य चास्ति प्रयोजनम् अधिकरणत्वे उक्ते तस्यैव निषेधात्क्रियानिषेधाभावेन विकल्पानापत्तौ अतिरात्रेऽपि तदतिदेशान्नित्याधिकरणसिद्धिरूपम् । "पुरस्तादुपसदां प्रवर्ग्येण चरन्ति" इति प्रत्यक्षतो विशेषतः क्रतुमध्ये विधानात्प्रत्यभिज्ञायमानं क्रतोरधिकरणत्वमेवेति पूर्वोक्तहेतु-

क्रियायास्स्वरूपेणोद्देश्यसम्बन्धित्वेन वा निषेध एव विकल्पो यथोक्तस्थले यत्र तु कारकनिषेधः यथा—"रात्रौ श्राद्धं न कुर्वीत" इत्यादौ तत्र निषेधस्य कारकमात्रविषयत्वेन क्रियाविषयत्वाभावात् क्रियाविषयविधिविकल्पापादकत्वानुपपत्तिः। प्रकृते च प्रथमयज्ञशब्दस्य नोद्देश्यपरत्वं, अपि तु "मन्द्रं प्रातस्सवने" इतिवदधिकरणकारकपरत्वम्. अतश्च न विकल्पापत्तिरिति केषांचिदुक्तं युक्तमिति वाच्यम्। कारकस्यापि प्रयोगाधिकरणत्वस्य विधितः प्राप्तौ न्यायतौल्येन प्रथमप्रयोगाधिकरणत्वस्यैव विकल्पापत्तेरावश्यकत्वात्। अत एवाक्षेपेण यत्किञ्चित्कालप्राप्तौ रात्र्युपादानस्यैच्छिकत्वेन रागप्राप्ततया वैधत्वाभावान्न तन्निषेधस्य विकल्पापादकत्वम्। प्रकृते तु प्रथमप्रयोगाधिकरणत्वं नैच्छिकं, प्रतिप्रधानं गुणान्वयस्य वैधत्वात्। अतस्तन्निषेधोपि विकल्पापादक एव। वस्तुतस्तु—प्रथमप्रयोगस्योद्देश्यत्वमेव शास्त्रदीपिकायामुक्तमिति न किञ्चिदेतत्। अतो "नानूयाजेषु"[1] इतिवत् पर्युदास एवायमनारभ्यवाक्यशेष उक्तविधप्रथमप्रयोगभिन्ने प्रवृत्त्यादिति॥

---

त्रयसत्त्वादधिकरणत्वे निर्णीते तस्यैव कारकस्य निषेधात्क्रियानिषेधाभावेन विधिनिषेधयोरेकविषयत्वाभावेन न विकल्पः। एवं दीक्षितकर्तृकहोमे प्रदाननिषेधे सङ्क्रान्त्यधिकरणकपिण्डदाननिषेधेष्वपि द्रष्टव्यम्। "न तौ पशौ" इत्यादौ तु पशुयागगताधिकरणत्वस्य पुनः प्रत्यभिज्ञानाभावेन हेतुत्रयाभावेन नाधिकरणत्वपरत्वमितिक्रियानिषेध एवेति विकल्प एव। "न होतारम्" (तै. ब्रा. १-६-९) इत्यत्रापि द्वितीयाश्रुतित एव होतुस्साध्यत्वाद्वरणैकपरो निषेधः श्रुतिबलादेव जात इति प्रकाशकाराणां पक्षं शङ्कते॥

[1] १०-८-३.

ततश्च प्रापकप्रमाणाभावात्प्रथमप्रयोगे अकरणप्रसक्तौ "अग्निष्टोमे प्रवृणक्ति"* इति वचनं वस्तुतोऽत्यन्ताप्राप्तप्रापकमपि प्रतिप्रसवफलकं[1] सदग्निष्टोमसंस्थाकत्वे निमित्ते प्रथमप्रयोगेऽपि नित्यं प्रवर्ग्यविधानार्थम् । न तु विकल्पेन । विकल्पे प्रमाणाभावात् । अस्य नान्यविषयता सामान्यविधित एव सर्वत्र प्राप्तत्वादिति प्रथमप्रयोगविषयतैव । अनेन च काममित्यनूचानवाक्यस्यापेसंहारः । तेनाग्निष्टोमसंस्थाकप्रयोगे अनूचानस्य नित्यं करणम् । तथा श्रोत्रियस्यापि । अनूचानो वेदाध्यापकः । तेन क्षत्रियवैश्ययोर्निवृत्तिः । श्रोत्रियः प्रकर्षेण वेदतदर्थज्ञः । कामपदेन प्रकर्षाभिधानात् । तस्य इत्येकपदेनोभयोः कर्त्रोर्विधानाच्च न विधेयानेकत्वम् । तदन्येषामग्निष्टोमप्रथमाहारेऽपि नित्यमकरणम् ॥

यत्तु वार्तिके अनूचानादेर्विकल्पोऽन्येषां तु नित्यमकरणमित्युक्तं तन्न प्रौढिमात्रम् । अत एव पार्थसारथिना अनूचानादेः नित्यमेव प्रयोग इत्युक्तम् । यदि तु तदव समर्थनीयमित्याग्रहस्तदा कामंपदेन[2] विकल्पाभिधानादग्निष्टोमवाक्यस्य च तेनोपसंहारादनूचानादेर्विकल्प इत्येवं समर्थनीयम् ॥

सर्वथा अतिरात्रप्रथमाहारे प्रतिप्रसवाभावान्नित्यमेवाप्रयोगः । विकृतौ तु प्रथमप्रयोगेऽपि नित्यं करणमिति स्थितम् ॥ १२ ॥



[1]प्रतिप्रसवलक्षणं एकान्तरे एतदुत्तराधिकरणे व्यक्तम् ॥

[2]"कामं कामयेतां तस्मै दद्याताम्" इत्यापस्तम्बसूत्रे काममित्यस्य विकल्पपरत्वमाश्रितं धूर्तस्वाम्यादिभिः ॥

*तै. आ. ६-६.

## (१३)–पौष्णं पेषणं विकृतौ प्रतीयेताचोदना-त्प्रकृतौ ॥ ३४ ॥

दर्शपूर्णमासप्रकरणाम्नाते "पूषा प्रपिष्टभागोऽदन्तको हि सः" इति वाक्ये **पौष्णं पेषणं** पूषदेवतासम्बन्धितया प्रतीयमानं प्रदेयद्रव्यपेषणं प्रकरणाद्विच्छिद्य **विकृतौ** पूषदेवत्यतया प्रसिद्धायां **प्रतीयेत** कुतः **प्रकृतौ** दर्शपूर्णमासप्रकरणे पूषदेवताकस्य कर्मण **अचोदनात्** अविधानेन प्रकरणे निवेशायोगादिति ॥ सिद्धान्तसूत्रमेवेदम् ॥ ३४ ॥

**दर्शपूर्णमासप्रकरणे "पूषा प्रपिष्टभागोऽदन्तको हि सः"* इति श्रुतम्। तत्र[1] किं दर्शपूर्णमासयोरेवाङ्गत्वेन कर्मान्तरविधिः उत पूषदेवत्ययागे पेषणमात्रविधिरिति चिन्तायां—न तावद्भागशब्दलक्षितयागोद्देशेन पेषणावधिः एकप्रसरताभङ्गापत्तेः[2]। पूषपदेन विशेषणे वाक्यभेदाच्च। क्तप्रत्ययार्थद्रव्योपसर्जनस्य पेषणस्य यागान्वयानुपपत्तेश्च। अत एव न पूषपदमेव शा-**

---

[1] अत्र भाष्यकारादिभिर्दीर्घसोमपदाहीनपदार्थयोः प्रकृतावनिविशमानत्वात्प्रकरणबाधेनोत्कर्षस्य पूर्वं साधितत्वात्तेनैव न्यायेन पूषदेवतायां रूढस्य पूषपदस्य प्रकरणानिवेशित्वादुत्कर्षस्यैव सिद्धेर्नात्रापूर्वं पूर्वपक्षसिद्धान्तरचनं कार्यमित्युत्तरविवक्षार्थं सूत्रकृता स्मार्यत इत्युक्तम्। तत्र वक्ष्यमाणयुक्तिभिर्विकृतावुत्कर्षेऽपि वाक्यार्थानुपपत्तेर्न तत्र प्रकरणबाधेन निवेशः। किन्तु तदविरोधेन कथंचित्पूषपदस्य गौणीमनाश्रित्यापि प्रकरणे निवेशो युक्तः इत्यधिकाशङ्कया क्लेशेन परिहार्यया शक्यत एव अधिकरणारम्भ इत्याशयेनाधिकरणरचनामाह—तत्रेति। अयमेव चास्वरसः प्राञ्च इत्यनेनाधिकरणान्ते सूचितः।.

[2] १-५-१०. अधिकरणे अयं दोषो द्रष्टव्यः। *सं. २-६-८.

क्यार्थस्य लक्षितपूषदेवत्ययागस्य वोद्देश्यतापरम् । पूष्णोऽ[1]व्यभिचरितक्रतुसम्बन्धाभावेन क्रतूपास्थतौ प्रमाणाभावाच्च । अतो गुणात् द्रव्यदेवताविशिष्टकर्मान्तरविधिरेवायमिति प्राप्ते—

प्रापेष्टभागपदेन तावत् भागो भजनीयं सेव्यमस्येति व्युत्पत्त्या सेवनासम्भवेऽपि सम्बन्धमात्रं देवस्वादिव्यवहारप्रमाणकं प्रपिष्टपूष्णोः प्रतीयते । तच्च[2] यागं विनाऽनुपपन्नमिति यागमनुमापयतीत्येतावदुभयोरविवादम् । तत्र च विशेषणमात्रविधिसम्भवे विशिष्टविध्यादिकल्पनस्यान्याय्यत्वात् प्रमाणाभावेन नापूर्वयागान्तरानुमितेरित्यपि प्रथमतोऽवगतमेव । अतश्चानुमीयमाने यागे अनुमापकपूषसम्बन्धेन प्रसिद्धपूषदेवत्ययागत्वोपस्थिति-रपि सुलभैव । अतश्च यागविशेषानुमितेरेव तात्पर्यग्राहकत्वात्पूषपदं विजातीयापूर्वसाधनीभूतपूषदेवतापरं; तदुद्देशेनैव च स्वजन्ययागप्रदेयचरु[3]प्रकृतित्वसम्बन्धेन प्रापष्टद्रव्यकत्वं प्रपिष्टभागसमासार्थो विधीयते । सम्भवति च द्रव्योद्देशेन [4]देवताविधिवद्देवतोद्देशेनापि निरुक्तसम्बन्धेन द्रव्यविधिर्विशेषणमात्रविधिफलकः । यद्यपि च प्रकृतिद्रव्यस्याप्यतिदेशेन सम्भवत्प्राप्तिकता तथाऽपि ततः पूर्वं विधानाङ्गीकारान्नैकप्रसरताभङ्गाद्यापत्तिः । [5]षेषणमात्रविधिश्च फलमिति गुणादिप्रमाणाभावान्न कर्मान्तरता।

[1] पूष्ण: शब्दरूपत्वादिति भावः ।

[2] ‘सरस्वत्याज्यभागा स्यात्’ । (तै. सं. २-२-९.) इत्यादाविवेति शेषः ।

[3] उत्तराधिकरणसिद्धान्तपर्यालोचनया चरुपदमिह निवेशितम् ।

[4] अभ्युदितेष्टिवाक्ये षष्ठपञ्चमाद्याधिकरणविचारिते इति शेषः ।

[5] “लोहितोष्णीषा ऋत्विजः” इत्यत्र लोहितोष्णीषपदेनोपात्तानां विशिष्टानामृत्विजामतिदेशप्रवृत्तेः पूर्वप्रवृत्त्यङ्गीकारेण विधिर्विशेषणीभूतलोहितोष्णीषविधानफलकस्स्वीकृत इति भावः ।

एतेन पूर्वपदेन तद्देवत्यकर्मलक्षणया तदुद्देशेन प्रविष्टभागवद्लक्षितपेषणविधिरिति प्रकारोपि निशादस्थपत्यधिकरणन्यायेन[1] लक्षणापेक्षया कर्मान्तरविधेरेव न्याय्यत्वात् "वषट्कर्तुः प्रथमभक्षः"[2] इत्यादावतिप्रसङ्गापत्तेश्चोपेक्षितः । तत्रास्मदुक्तप्रकारस्तु भक्षस्य प्रत्यक्षविधिनैव [3]प्राप्तत्वेन ततः पूर्वप्रवृत्त्यङ्गीकारानुपपत्तेरसम्भवी । तदेतत्सर्वं[4] सिद्धमेवोत्तरविवक्षया स्मार्यत इति प्राञ्चः ॥ १३ ॥

---

(१४)—तत्सर्वार्थमविशेषात् ॥ ३५॥ चरौ वाऽर्थोक्तं पुरोडाशेऽर्थविप्रतिषेधात्पशौ न स्यात् ॥ ३६ ॥ चरावपीति चेत् ॥ ३७ ॥ न पक्तिनामत्वात् ॥ ३८ ॥

तत् पूर्वाधिकरणोदाहृतवाक्यस्थं पेषणं सर्वार्थं चरुपशुपुरोडाशरूपसकलपौष्णद्रव्यार्थं अविशेषात् तद्वाक्ये चर्वादिविशेषमात्राश्रवणात् ॥३५

एवं पूर्वपक्षे सिद्धान्तमाह—चरौ वा चरावेव पौष्णे पेषणमुक्तवाक्ये नि-

---

[1]षष्ठाद्यान्तिमाधिकरणम् ।

[2]३—६—१०.

[3]यद्भक्षोद्देशेन प्राथम्यं विधित्सितं भवता तस्य नैमित्तिकरूपस्य तत्तत्प्रत्यक्षविधिनैव प्राप्तत्वादिति भावः ।

[4]भाष्यकारादिप्राचीनमतमुपहसन्निवानुवदति—तदेतदिति ॥ प्राञ्च इति सूचितोऽस्वरसः प्रथममेवास्माभिस्सूचितः ।

धीयते । यतः **पुरोडाशे** पेषणं **अर्थोक्तं** अर्थसिद्धम् । पुरोडाशत्वसिद्ध्यर्थं पेषणस्यार्थादेव सिद्धेः पुरोडाशे पेषणविधेर्न किञ्चित्प्रयोजनम् । **पशौ** तु प्रदेयस्य पेषणे सति **अर्थविप्रतिषेधात्** हृदयाद्याकाररूपार्थस्य विनाशप्रसङ्गात् पेषणं **न स्यात्** ॥ ३६ ॥ अत्राशङ्क्य समाधत्ते —**चरावपि** अर्थविप्रतिषेधोऽस्ति चरुशब्दस्य ओदने प्रयोगात् पेषणे च सति ओदनत्वस्य अन्योन्यासंलग्नत्वलक्षणविशदपाकनिमित्तकस्य भङ्गात् **इति चेत् न चरुशब्दस्य पक्तिनामत्वात्** तण्डुलप्रकृतिकत्वानवस्रावितत्वोभयविशिष्टान्तरूष्मपक्वत्वमात्रनिमित्तकत्वात् ओदनत्वस्य तत्प्रवृत्तिनिमित्तेऽनिवेशेन पेषणेऽपि तदर्थभङ्गविरहात् ॥ ३७— ३८ ॥

तत् पेषणं पूषदेवत्ये चरौ पशौ पुरोडाशे[1] च स्यात् उत चरावेवेति चिन्तायां अविशेषाददन्तकत्वहेतुवशाच्च सर्वत्रेति प्राप्ते—

पुरोडाशे तावत्पाकात्पूर्वं पेषणस्य प्राप्तत्वादेव विधानं व्यर्थं तदुत्तरं तु पुरोडाशपदवाच्याकृतिविनाशापत्तिः । एवं पशुहृदयादावपि । तेषामप्याकारविशेषविशिष्टमांसवाचित्वात् । न चोभयत्रावदानोत्तरकालं पेषणाविधिः अत्यन्ताप्राप्तपेषणविधौ गौरवापत्तेः । चरावतिदेशेन प्रसक्तस्य प्रयोजनाभावेन निवर्तमानस्य प्रतिप्रसवमात्रकरणे तु लाघवम् । प्रकृतौ हि प्रदेयपुरोडाशसिद्धेरन्यथोपपादयितुमशक्यत्वादर्थप्राप्तमपि पेषणमध्वर्युकर्तृकत्वादिप्रयोजनासिद्ध्यर्थं सधर्मकं विहितम् । तत् चरौ प्र-

---

1 "पौष्णं चरुमनुनिर्वपेत्" तै. सं. २-२-१. । "पौष्णं श्याममालभेत ग्रामकामः" तै. सं. २-१-६. "पशुमालभ्य पुरोडाशं निर्वपति" तै. सं. ६-३-१०. इत्यादिभिरवगताश्चरुपशुपुरोडाशाः पौष्णाः ।

देयासिद्धेस्तद्व्यतिरेकेण जायमानतया चरुत्वावच्छिन्नं प्रति पेषणस्याकारणत्वान्निवर्तमानं प्रतिप्रसूयते। अत एव प्रसक्तप्राप्तिकस्य कारणान्तरेण निवृत्तिप्रसक्तौ विधिः प्रतिप्रसवः[1]। तत्र चोत्पत्तिविनियोगाङ्गसम्बन्धादौ यथासम्भवं विधेर्व्यापाराभावाल्लाघवम्। [2]अत एव पेषणस्य प्रदेयासिद्धिरूपप्राकृतप्रयोजनलोपेनात्र अदृष्टप्रयोजनान्तरकल्पनेऽपि न प्रतिप्रसवत्वाविघातः। धर्माणां तु पेषणस्य कर्मान्तरत्वाभावेन

"प्रधानं नीयमानं हि तत्राङ्गान्यपकर्षति"

इति न्यायेन प्राकृतपेषणाङ्गतया प्राप्तानामत्रैवादृष्टरूपकार्यान्तरप्रयुक्तत्वकल्पनं न दोषाय। इष्यते चायमर्थोऽग्निसंस्कारकमन्थनादेः पशुप्रकरणाम्नातस्य वचनाच्चातुर्मास्याङ्गत्वेन विनियोगे तद्धर्माणां कार्यान्तरप्रयुक्तत्वकल्पनादौ। वस्तुतस्तु[3]—अत्र पेषणस्य न का-

---

[1] ऋवर्ग्याधिकरणे न्यायसुधोक्तं "अकर्तव्यत्वोक्तयर्थनिषेधविषयीकृतस्य कर्तव्यतोक्तिरूपः प्रतिप्रसवः" इति लक्षणं अत्रैव पेषणप्रतिप्रसवे अव्याप्तमिति भावः।

[2] अयं च प्रतिप्रसवविधिरपूर्वविधिरेव निवृत्तस्य पुनःकरणप्राप्तावेव व्यापारात्।

[3] दशमप्रथमदशमे "याज्ञिकाश्चानवस्रावितान्तरूष्मपक्वौदने चरुशब्दमुपचरन्ति" इति शास्त्रदीपिकायां न्यायमालायां चोक्तेः अन्योन्यासंलग्नत्वलक्षणविशदपाकनिमित्तमोदनत्वं चरुशब्दप्रवृत्तिनिमित्तघटकमित्यभ्युपेत्य पेषणस्याप्राकृतकार्यकारित्वमगत्याऽङ्गीकृतम्। चरुशब्दप्रवृत्तिनिमित्तशरीरे ओदनत्वस्य घटकत्वमेव नास्तीति न्यायसुधाकृन्मतं स्वमतत्वेन स्वीकुर्वन्नाह—वस्तुतस्त्विति।

र्यान्तरकल्पनाऽपि, प्रदेयसिद्ध्यर्थत्वादेव। यद्यपि हि चरुत्वावच्छिन्नं प्रति पेषणस्याकारणत्वं तथाऽपि पिष्टकचरावपि चरुशब्दप्रयोगात्पेषणविधिबलेन च "पौष्णं चरुम्"[1] इत्यत्र सामान्यवाचिनोऽपि चरुशब्दस्य पिष्टकचरुविशेषपरत्वनिश्चयात् तस्य च प्रदेयस्य पेषणमन्तरेणासिद्धेर्न पेषणस्य कार्यान्तरकल्पनाऽपि। अत एव चरुत्वं नाम अनवस्रावितान्तरूष्मपक्वतण्डुलप्रकृतिकत्वम्। अत्र भक्त[2]व्यावृत्त्यै अनवस्रावितेति। मण्डकव्यावृत्त्यै अन्तरिति। सूपशाकादिव्यावृत्त्यै तण्डुलेति। अत एव पिष्टकचरावपि तत्सम्भवान्नपेषणस्य विघातकत्वमिति तत्रैव पेषणम्॥ १४॥

—※ ० ※—

(१५)—एकस्मिन्नेकसंयोगात्॥ ३९॥ धर्मविप्रतिषेधाच्च॥ ४०॥ अपि वा सद्वितीये स्याद्देवतानिमित्तत्वात्॥ ४१॥ लिङ्गदर्शनाच्च॥ ४२॥ वचनात्सर्वपेषणं तं प्रति शास्त्रवत्त्वादर्थाभावाद्धि चरावपेषणं भवति॥ ४३॥ एकस्मिन् वाऽर्थधर्मत्वादै-

---

[1] तै. सं. २-२-१

[2] भक्तं अनवस्रावणसाध्यं अन्योन्यासंलग्नत्वरूपवैशद्यविशिष्टं ओदनापरपर्यायम्। मण्डकं तण्डुलप्रकृतिकापूपविशेषः पात्राद्बहिरूष्मणाऽपि पच्यते। तण्डुलपदं चात्र यवमुद्गादिचरुसाधारण्येन यवादिसाधारणं बोध्यम्। अनवस्रावितान्तरूष्मपक्वत्वं चरुत्वमिति वार्तिकादौ तण्डुलप्रकृतिकत्वमुपलक्षणीयमिति भावः।

न्द्राग्नवदुभयोर्न स्यादचोदितत्वात् ॥ ४४ ॥
हेतुमात्रमदन्तत्वम् ॥ ४५ ॥ वचनं परम् ॥

तत्पेषणं **एकस्मिन्** पूषैकदेवताके एव हविषि स्यात् । **एकसंयोगात्** "पूषा प्रपिष्टभागः"[1] इत्यत्र एकेनैव पूष्णा सम्बन्धावगमात् इति सिद्धान्तोपक्रममिदमधिकरणसूत्रम् ॥ ३९ ॥ **धर्मविप्रतिषेधाच्च** पूष्णः पेषणं तदन्यस्यापेषणमिति धर्मयोर्विरोधादपि द्विदेवत्ये ऐन्द्रापौष्णादौ चरौ पेषणासम्भवात्पूषमात्रदेवताक एव पेषणम् ॥ ४० ॥ अत्र सिद्धान्ते पूर्वपक्षी शङ्कते **अपि वा** इति पक्षान्तरं द्योत्यते । **सद्वितीये** अन्यसहितपूषदेवताकेऽपि तत्पेषणं स्यात् । पेषणस्य देवतानिमित्तत्वम् पूषदेवतासद्भावमात्रनिमित्तत्वावगमात् द्विदेवत्ये च घटकतया पूषदेवतासद्भावाव्याहतेः । "आग्नेयं चतुर्धा करोति" "इन्द्रपीतस्य"[2] इत्यादौ तु सापेक्षे तद्धितसमासयोरसम्भवाद्युक्ता केवलयोरेवाग्नीन्द्रयोर्देवतात्वप्रतीतिः । न त्विह इतरसहितपूष्णोपि देवतात्वप्रत्यये किञ्चिद्बाधकमस्तीति ॥ ४१ ॥ "अदन्तको हि सः"[1] इति लिङ्गदर्शनाच्च अन्यसहितेऽपि पेषणम् । न ह्यन्यसहितस्य पूष्णो दन्ता जायन्ते । एवं "सौमापौष्णं चरुं निर्वपेन्नेमपिष्टं पशुकामः" इति लिङ्गदर्शनाच्च इतरसहितपूषदेवत्येऽपि पेषणं गम्यते । तत्र हि सोमांशेऽपेषणेऽपि "नेमपिष्टं" इत्यनेन पूषनिमित्तकमर्धपिष्टत्वमनूद्यते ॥ ४२ ॥ ननु नेमपिष्टत्वमुत्तरवाक्ये विधीयत इति नेदं लिङ्गमन्यसहितपूषदेवताकहविस्सामान्ये पेषणस्येति चेन्न तथा सति सोमापौष्णस्य चरुशब्देन विशेषणे वाक्यभेदापत्तेस्सोमापौष्णमात्रोद्देशेन पेषणविधौ च तादृशविधिपरात् **वचनात्** **सर्वपेषणं** सर्वेषु चरुषु पशुषु पुरोडाशेषु च सौमापौष्णेषु पेषणं प्रसज्यते । **तं प्रति** चर्वादिकं सर्वमुद्दिश्यापि हि **शास्त्रवत्त्वात्** तादृ-

---

[1] तै. सं. २-६-८.  [2] तै. सं. ३-२-६.

शङ्गास्त्रप्रवृत्तिसद्भावात् । एतद्विध्यभावे हि **चरौ** उपलक्षणत्वात् पशौ च **अर्थाभावात्** हविर्निष्पत्तिरूपप्रयोजनाभावात् प्रकृतिप्राप्तपेषणनिवृत्तेः **अपेषणं भवति** तथा च तत्र पेषणविध्यङ्गीकारे सोमापौष्णमात्रे पेषणविधानप्रसङ्गे चरुशब्दोपादानवैयर्थ्यम् । नेमापिष्टत्वानुवादाङ्गीकारे तु नायं दोष इति ॥ ४३ ॥ एवं पूर्वपक्षिशङ्कायां सिद्धान्ती समाधानमाह—**एकस्मिन्वा** पूषरूपैकदेवताक एव पेषणं "पूषा प्रपिष्टभागः" इत्यत्र **अर्थधर्मत्वात्** पूषपदार्थोद्देशेन पेषणरूपधर्मस्य विधीयमानत्वात् । तत्र च पूषस्वरूपे आनर्थक्यशङ्कायां स्वपर्याप्तदेवतात्वप्रयोज्यापूर्वसाधनत्वस्य पूषपदेनोद्देश्यपरेण लक्षणात् **उभयोः** देवतात्वस्थले च उभयोरेव चोदनाविषयतया देवतात्वात् पूषादेरेकमात्रस्य देवतात्वेनाचोदितत्वात् उद्देश्यतावच्छेदकरूपानाक्रान्ततया पेषणं **न स्यात्** । **ऐन्द्राग्नवत्** यथा "आग्नेयं चतुर्धा करोति" इति विहितं चतुर्धाकरणं ऐन्द्राग्ने न भवति चोदनायां हि यावान् श्रूयते तावानेव देवतात्वेन परिगृह्यते । "पूषा प्रपिष्टभागः" इत्यत्र च पूषमात्रं श्रूयते तावत एव देवतात्वमुक्तम् ॥ ४४ ॥ **अदन्तत्वं** "अदन्तको हि" इत्यदन्तत्वाम्नानं **हेतुमात्रं** हेतुवन्निगदरूपार्थवादमात्रं यागधर्मपेषणप्रशंसार्थमिति न तस्य किञ्चिदर्थसाधकता ॥ ४५ ॥ "नेमापिष्ट" इत्येतत्तु **वचनं परं** विधायकमेव केवलम् । आग्नेयादिवाक्यवच्च देवताद्रव्यतद्धर्मविशिष्टैकयागभावनाविधानान्न वाक्यभेदः न पश्वादौ पेषणप्रसक्तिरिति ॥ ४६ ॥

इति सारबोधिन्यां जैमिनिसूत्रवृत्तौ तृतीयस्य तृतीयः

———:o:———

**यत्रान्यसहितः पूषा देवता यथा राजसूये "ऐन्द्रापौष्णश्चरुः" इति तत्रापि पेषणं उत यत्र केवल एव देवता तत्रैवेति चिन्तायां "अदन्तको हि सः" इत्यर्थवादानुसारात्पेषणस्य पूषस्वरूपप्रयुक्तत्वावगतेस्तत्स्वरूपस्य चान्यसहितेऽपि सत्त्वाद्युक्त-**

मेव पेषणम् । अत एव "सामापौष्णं चरुं निर्वपेन्नेमपिष्टं पशुकामः" इति नेमपदवाच्यार्धपिष्टत्वानुवादोऽपि सङ्गच्छते[1] । यदि तु नवमाद्यन्यायेन पूषस्वरूपे आनर्थक्यादपूर्वसाधनत्वलक्षणाया आवश्यकत्वमाशङ्क्येत तदाऽस्तु पूर्वोक्तविधया पूषप्रपिष्टसम्बन्धज्ञानजन्ययागानुमितेरेव तात्पर्यग्राहिकायास्सत्वात् साऽपि पूषपदे[2] । परं त्वर्थवादाद्यनुरोधात्पूषाधिष्ठानकदेवताप्रयोज्यापूर्वीयत्वलक्षणाया एवाङ्गीकारात् द्विदेवत्येऽपि पेषणमर्थस्य । यथा चैवं सति पाकसम्पत्तिस्तथा यतितव्यं अन्तरायकरणेन वा क्रमिकनिक्षेपेण वा पात्रभेदेन वेति प्राप्ते—

आनर्थक्यपरिहारायापूर्वसाधनत्वलक्षणाया आवश्यकत्वादधिष्ठानद्वारकत्वकल्पनस्य च पूष्णो देवतात्वोपस्थितिमन्तरेणानुपपत्तेः तदुपस्थितौ च तद्द्वारकत्वमात्रकल्पनयैवानर्थक्यपरिहारात् द्विदेवत्ये च चतुर्धाकरणाद्यधिकरण[3]न्यायेन केवलस्य पूष्णो देवतात्वाभावात् यत्र केवल एव पूषा तत्रैव पेषणम् । न चापूर्वसाधनीभूतदेवतात्वस्यैव प्रकारतया पूषपदेन लक्षणेऽपि तस्य पूषोपस्थितौ स्वरूपसम्बन्धस्यैव संसर्गविधया विवक्षणेन पर्या-

[1]सिद्धान्ते तु नेमपिष्टत्वांशेऽपि विधिस्स्वीकार्य इति गौरवं स्यादिति भावः ॥

[2]पूषपदस्यैवात्रोद्देश्यसमर्पकतायाः पूर्वाधिकरणे स्थापितत्वादुद्देश्यवाचकपद एव अपूर्वसाधनत्वलक्षणाया अन्यत्र दृष्टत्वादितिभावः । एतेन पेषणस्य द्वाराकांक्षायां भागशब्देन पूषोपलक्षितयागसाधनहविषो लक्षणाद्धविषो द्वारत्वं द्विदेवत्यहविषोऽपि पूषोपलक्षितत्वमस्तीति पूर्वपक्षं वर्णयतां प्रकाशकारादीनां मतं कटाक्षितं ॥

[3]चतुर्धाधिकरणं तृतीयप्रथमान्त्याधिकरणम् । 'आदिपदेन इन्द्रपीताद्यधिकरणपरिग्रहः ॥

मेराविवक्षणात्तस्य च द्विदेवत्येपि एकस्मिन् पूष्णि सत्त्वेन तस्याप्युद्देश्यत्वोपपत्तेः कथं न पेषणमिति वाच्यं, व्यासज्यवृत्तिधर्मप्रकारतायामेकमात्रवृत्तिसम्बन्धस्य संसर्गत्वानुपपत्तेः। अन्यथा एको द्वित्वसमवायवान् इतिवत् "एको द्वित्ववान्" "एको द्वौ" इत्यादिशाब्दबाधापत्तेः । अतो व्यासज्यवृत्तिदेवतात्वस्य पर्याप्तिसम्बन्धेनैव प्रकारत्वात्तस्य च पूष्णि केवले बाधात् पूषमात्रवृत्तिदेवतात्वस्यैव प्रकारत्वेन तत्रैव पेषणाद । अदन्तकत्वं त्वर्थवादमात्रत्वान्न विरुध्यते। नेमपिष्टत्वस्यापि च तत्रैव विधेयत्वाङ्गीकाराद्विशिष्टभावनाविधानेनावाक्यभेदा[1]दगमकत्वम् ॥१५॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां तृतीयस्याध्यायस्य
तृतीयः पादः

---:o:---

## अथ तृतीयाध्यायस्य चतुर्थः पादः

(१) निवीतमिति मनुष्यधर्मश्शब्दस्य तत्प्रधानत्वात् ॥१॥ अपदेशो वाऽर्थस्य विद्यमानत्वात् ॥२॥ विधिस्त्वपूर्वत्वात्स्यात् ॥ ३ ॥ स प्रायात्कर्मधर्मस्स्यात् ॥४॥ वाक्यस्य शेषवत्त्वात् ॥५॥ तत्प्रकरणे यत्तत्संयुक्तमविप्रतिषेधात् ॥६॥ तत्प्रधाने वा तुल्यवत्प्र-

---

[1] "यदाग्नेयोऽष्टाकपालः" इत्यादाविवेतिभावः ॥

**सङ्ख्यानादितरस्य तदर्थत्वात् ॥७॥ अर्थवादो वाऽप्रकरणात् ॥८॥ विधिना चैकवाक्यत्वात् ॥९॥**

अनिर्धारितक्रत्वर्थपुरुषार्थान्यतररूपताककर्मविषयकश्रुत्यादित्रयस्य प्रकरणेन सः विरोधाविरोधविचारः एतत्पादार्थः । पूर्वपादे अहीनाद्यधिकरणे द्वादशोपसत्त्वादेः क्रत्वर्थतायाश्सिद्धत्वान्निर्धारितताहशान्यतरकविषयक एव विरोधाविरोधविचार इति नातिप्रसङ्गः । दर्शपूर्णमासप्रकरणाम्नाते "निवीतं मनुष्याणां प्राचीनावीतं पितॄणामुपवीतं देवानामुपव्ययते" इति वाक्ये निवीतविधिं कृत्वाचिन्त्यते । तत्र विधीयमानं **निवीतमिति** एतत् **मनुष्यधर्मः** शुद्धमनुष्यधर्मः **शब्दस्य** "मनुष्याणां" इति षष्ठयाः तत्प्र**धानत्वात्** "दध्नेन्द्रियकामस्य" इत्यादाविव स्वप्रकृत्यर्थाभिलषितफलजनकत्वप्रत्यायकतया मनुष्यप्राधान्यबोधकत्वात् इत्येवं प्रथमः पूर्वः पक्षः ॥ १ अत्र शङ्कते तटस्थः निवीतवाक्यं **अपदेशो वा** उपदेशप्रतिद्वन्द्यनुवाद एव **अर्थस्य** निवीतरूपस्य **विद्यमानत्वात्** कर्मसौकर्यार्थं परिकरबन्धरूपस्य तस्य विधिमन्तराऽपि प्राप्तत्वात् ॥ २ ॥ समाधत्ते पूर्वपक्षी—निवीतवाक्यं **विधिस्तु** विधिरेव **स्यात् अपूर्वत्वात्** कर्मसौकर्यस्योपायान्तरेणापि सम्भवेन निवीतस्य नियमेनाप्राप्तया विधेयस्य निवीतनियमस्य प्रमाणान्तराप्राप्तत्वात् ॥ ३ ॥ एवं शुद्धमनुष्यधर्मत्वपक्षमसहमानश्शुद्धक्रतुधर्मत्ववादी स्वपक्षमाह—**सः** निवीतं विधेयधर्मपदानुरोधात् पुंस्त्वम् । **कर्मधर्मः** दर्शपूर्णमासरूपप्राकरणिककर्मधर्मः **स्यात् प्रायात्** दर्शपूर्णमासधर्मप्राये दर्शपूर्णमासप्रकरणे पाठात् ॥ ४ ॥ एवं शुद्धक्रतुधर्मत्वपक्षमसहमानः क्रतुयुक्तपुरुषधर्मत्ववादी स्वपक्षमाह—निवीतं क्रतुयुक्तपुरुषधर्मः **वाक्यस्य** निवीतवाक्यस्य **शेषवत्त्वात्** आध्वर्यवकाण्डसमाख्यारूपविशेषवत्त्वात् । तथा च प्रकरणसमाख्ययोः अप्यविरोधाय

दर्शपूर्णमासकर्तुरध्वर्योर्धर्मः निवीतमिति ॥ ५ ॥ एवं क्रतुयुक्तमनुष्यधर्मत्व-पक्षमसहमानः प्राकरणिकमनुष्यप्रधानककर्मधर्मत्ववादी स्वपक्षमाह—**तत्प्रकरणे** दर्शपूर्णमासप्रकरणे **यत्** मनुष्योद्देश्यकमन्वाहार्यदक्षिणादानतदङ्ग-पाकादिकं **तत्संयुक्तं** तदङ्गं निवीतं तथा सति मनुष्यप्राधान्यपरायाः "मनुष्याणां" इति षष्ठीश्रुतेः प्रकरणसमाख्याभ्यां सह **अविप्रतिषेधात्** अविरोधात्। तथा च श्रुतिप्रकरणसमाख्यानामैकरस्येन प्राकरणिकमनुष्य-प्रधानककर्मधर्मत्वमेव निवीतस्य युक्तमिति ॥ ६ ॥ एतमपि पक्षमसहमानः निवीतविधिपक्षीयसिद्धान्ती स्वपक्षमाह—**तत्प्रधाने वा** मनुष्यप्रधानके कर्मण्यातिथ्यादावेव निवीतं विधीयते "निवीतं मनुष्याणां" इति निवीतवाक्यस्य "प्राचीनावीतं पितृणां" इति प्राचीनावीतवाक्येन "उप-वीतं देवानां" इत्युपवीतवाक्येन च **तुल्यवत्** तुल्यतयैव **प्रसङ्ख्या-नात्** आम्नानात् **इतरस्य** प्राचीनावीतस्य उपवीतस्य च **तदर्थत्वात्** पितृदेवत्यदेवदेवत्यकर्मार्थत्वात् निवीतस्यापि सनकऋष्यादि मनुष्यदेवत्या-तिथ्यतर्पणादिकर्मार्थतया एवोचितत्वात्। प्राचीनावीतपदसमभिव्याहाररूप-वाक्येन प्रकरणसमाख्ययोर्बाधस्यैव युक्तत्वात् ॥ ७ ॥ परमसिद्धान्ती कृत्वा-चिन्तामुद्घाटयति—निवीतमित्यादिः **अर्थवादोवा** अर्थवाद एव न विधिः **अप्रकरणात्** मनुष्यप्रधानकातिथ्यादेरप्रकृतत्वात् उपस्थित्यभावेन तदुद्दे-शेन विधेरयोगात् ॥ ८ ॥ **विधिना** "उपव्ययते" इत्युपवीतविधिना **च** **एकवाक्यत्वात्** उपवीतस्तावकतया तदेकवाक्यत्वसम्भवाच्च निवी-तवाक्यं न विधिः अन्यथा वाक्यभेदप्रसङ्गात्। यथा तत्र तत्र प्राची-नावीतनिवीते प्रशस्ते औचित्यात् एवं दैवे उपवीतमेव प्रशस्तमित्यादि-रीत्या तु स्तुतिरवगन्तव्या ॥ ९ ॥

——:o:——

## अथ तृतीयाध्यायस्य चतुर्थः पादः

दर्शपूर्णमासयोः "निवीतं[1] मनुष्याणां प्राचीनावीतं पितृणामुपवीतं देवानामुपव्ययते देवलक्ष्ममेव तत्कुरुत" इति श्रुतम्। तत्र सर्वोऽप्ययम् "उपव्ययते" इत्यस्योपवीतविधेश्शेषो न तु स्वतन्त्रो विधिरित्यौदुम्बराधिकरणेनैव [2]स्थितम्। यदा विधिस्तदा कृत्वाचिन्तया निवीतवाक्ये[3] विचारः॥

तत्र प्रकरणाच्छुद्धक्रतुधर्मः, मनुष्यग्रहणं तु सम्बन्धसामान्यवाचिन्या षष्ठ्याऽर्थप्राप्त[4]कर्तृत्वाख्यसम्बन्धानुवादादविरुद्धमित्याद्यः पक्षः। मनुष्यग्रहणस्य वैयर्थ्यापत्तेः षष्ठ्या अङ्गाङ्गिभाव[5]सम्बन्धपरत्वावसायात् निवीतस्य मनुष्याभिलाषितफलजनकत्वाङ्गीकाराच्छुद्धमनुष्यधर्मः षष्ठीश्रुत्या[6] प्रकरणबाधादिति द्वितीयः। अबाधेनोपपत्तौ बाधायोगात् फलकल्पनापत्तेश्च सन्निपत्योपकारकत्वलाभाच्च प्रकरणसहकृतया तया[7] जञ्जभ्यमानमन्त्रवत्[8] क्रतुयु-

[1]निवीतं परिकरबन्ध इति वार्तिकं। परिकरवत् उत्तरीयस्य मध्यदेशे बन्धनं निवीतमिति चूडामणिदीक्षितः॥

[2]१-२-२

[3]उपवीतप्राचीनावीतवाक्ययोस्तु वक्ष्यमाणायाः पूर्वपक्षकोटित्रयोपपादनरीतेरसम्भवात् न विचार इति भावः॥

[4]सर्वस्यापि कर्मणो मनुष्याधिकारित्वादर्थप्राप्तं मनुष्याणां कर्तृत्वं॥

[5]"दध्नेन्द्रियकामस्य जुहुयात्" "द्वादशाहीनस्य" इत्यादाविव षष्ठ्या कर्मजन्यफलभागित्वरूपमङ्गित्वं षष्ठीप्रकृत्यर्थस्य, तदभिलषितफलजनकत्वरूपमङ्गत्वं कर्मणः प्रतिपाद्यते इति भावः॥

[6]षष्ठ्याः श्रुतित्वं प्राचनिानुमतं॥ [7]षष्ठीश्रुत्या॥ [8]३-४-९.

क्तपुरुषधर्म इत्यपरः ॥ अत्र पूर्वपक्षत्रयक्रमो मूलेऽ[1]न्यथाकृतोप्य-नुक्तिसहत्वादुपेक्षितः । सिद्धान्तस्तु—प्राचीनावीतवैषम्यापत्तेः[2] त-त्समभिव्याहारात्मकवाक्यनुरोधात् षष्ठ्याः मनुष्यसम्प्रदानकप्राक-रणिकान्वाहार्यदानपाकादिपदार्थोपकारकत्वरूपसम्बन्धपरत्वावसा-यादुक्तविधसम्बन्धेन मनुष्यार्थत्वम् । सम्भवति हि प्राचीनावीतस्या-पिपितृदेवत्यप्राकरणिकप्रोक्षणीशेषनिनयनाङ्गत्वात् पित्रुद्देश्यकप्राकर णिककर्माङ्गत्वम् । अतस्तत्समभिव्याहारादस्यापि तत् । एवं चाध्व-र्यवसमाख्याऽप्यनुगृहीता भवति । इतरथा तस्या गुणभूतकर्तृप्रा प्तावेव नियामकत्वस्य वक्ष्यमाणत्वात् [3]क्रतुयुक्तपुरुषधर्मत्वे तद-नुपपत्तेः । न च भवन्मतेऽपि दानस्य याजमानत्वात् [4]कथं समा-

---

[1]भाष्यादौ शुद्धमनुष्यधर्मः क्रतुयुक्तपुद्धर्मः शुद्धक्रतुधर्मः प्राकरणिकमनु-ष्यप्रधानककर्मधर्मः इतिपूर्वपक्षचतुष्टयं सूत्रक्रमानुरोधेन प्रदर्श्य सन-कादिमनुष्यप्रधानसर्वकर्मधर्म इति सिद्धान्तः प्रदर्शितः । तत्र पूर्व-पूर्वास्वरसेनैवोत्तरपक्षाणामुपपादनस्य युक्तत्वात् पूर्वपक्षस्य प्रबल-स्यैव प्रथमतः करणं उत्तरपक्षानुत्थितिः । कथंचिदुत्थानेऽपि वा बहुत-रक्लेशोपपादनीयत्वापत्तिः । तत्र सिद्धान्तपक्षत्वेनोक्तश्च इहाग्रे "यत्तु" इत्यादिना दूषयिष्यते । अतः प्रकरणाच्छुद्धक्रतुधर्मत्वपक्षे प्रथममुक्ते ततोपि वाक्यप्राबल्याच्छुद्धमनुष्यधर्मत्वपक्षे द्वितीये प्रसक्ते वाक्य-सहकृतप्रकरणेन क्रतुयुक्तपुरुषधर्मत्वपक्षस्तृतीयः पदमादधातीत्येवं क्रमेण पूर्वपक्षत्रयं प्रदर्शनीयं प्राकरणिकमनुष्यप्रधानककर्मधर्मत्वप-क्षश्च सिद्धान्तत्वेन प्रदर्शनीय इत्याशयः ॥

[2]प्राचीनावीतवाक्ये पितृणामित्येतदनुरोधात् शुद्धपितृधर्मत्वं क्रतुयुक्तपितृ-धर्मत्वं वा असम्भवि कर्मणां मनुष्याधिकारत्वादीति भावः ॥

[3]३-८-३. [4]३-८-१ अधिकरणे दानस्य याजमानत्वं स्थितं ॥

स्योपपत्तिः, निवीतस्याराादुपकारकत्वेना[1]ध्वर्युकर्तृकेनापि तेन दानोपकारसिद्धेः। पाकाद्यर्थत्वमेव[2]वाऽङ्गीक्रियतामिति न दोषः। अतस्सर्वप्रमाणाबाधात्प्राकरणिकमनुष्योद्देश्यककर्माङ्गमित्येव सिद्धान्तः॥

यत्तु मूले पक्षान्तरं सिद्धान्तत्वेनोपन्यस्तं तथा हि--वाक्या[3]दयं शुद्धमनुष्यप्रधानकातिथ्यादिकर्माङ्गतया विधिः। न च तदुपस्थापकाभावः मनुष्यपदस्य लक्षणया [4]सनकादि*मनुष्यपरत्वेन तत्प्रधानकस्य हन्तकारातिथ्यादेरुपस्थितिसम्भवात्। अत एव न

---

[1] १०-४-१ अधिकरणं ऋत्विग्गतनिवीतोपवीतयोरदृष्टार्थत्वभाषणात्तद्वीत्येति भावः॥

[2] इह पितृमनुष्याद्युद्देश्यककर्मण एवोद्देश्यत्वं वक्तव्यं तच्च तदुद्देश्यककर्मप्रयोगान्तःपात्यङ्गप्रधानसाधारणं ग्राह्यमिति दक्षिणाग्नौ क्रियमाणस्याध्वर्युकर्तृकान्वाहार्यपाकस्यान्वाहार्यौदनकरणकदानसिद्धिद्वारा ऋत्विगुद्देश्यकत्वमिति तादृशपाकेऽध्वर्युणाकर्तव्ये निवीतं कार्यमिति न्यायसुधाकृतः पक्षमाह पाकादीति॥

[3] "प्राचीनावीतं पितृणां" इति समभिव्याहाररूपवाक्यादित्यर्थः॥

[4] "सनकादिभ्यो हन्त न मम" इत्यादिमन्त्रपुरस्सरं क्रियमाणोतिथिसत्कारः हन्तकारातिथ्यं "भिक्षां च याचतां दद्यात्पात्रं ब्रह्मचारिणां। ग्रासप्रमाणं भिक्षा स्यादग्रं ग्रासचतुष्टयं। अग्रं चतुर्गुणं प्राहुर्हन्तकारं द्विजोत्तमाः। भोजनं हन्तकारं वा अग्रं भिक्षामथापि वा। अदत्वा तु न भोक्तव्यं यथाविभवमात्मनः" इति मार्कण्डेयपुराणादिकमिहानुसंधेयम्॥

*स्नातकादि इत्यपिपाठः

फलकल्पना ऽपीति तत् वाक्याबाधस्यास्मन्मतेऽप्युपपादितत्वात्, सनकादि[2]परत्वस्य तेन चातिथ्याद्युपस्थितेरव्यभिचरितत्वाभावेन वक्तुमशक्यत्वात्, प्रकरणसमाख्ययोर्बाधे प्रमाणाभावात्, कृत्वा चिन्तात्वेन च सिद्धान्तानियमस्यानावश्यकत्वात् अस्य पक्षस्य वार्तिककृता क्लिष्टत्वाभिधानाच्चैषापेक्षितम् । अतः प्राकरणिकमनुष्यप्रधानककर्माङ्गत्वमेव सिद्धान्तः ॥

वस्तुतस्तु[3] नायं विधिः वाक्यभेदापत्तेः अपि तु उपवीतविधेरेव शेषः प्राचीनावीतवत् । यथा च निवीतप्राचीनावीते तत्तत्प्रधानकत्वसम्बन्धेन मनुष्यपितृसम्बन्धिनी उचिते तथोपवीतमपि देवसम्बन्धितया; अतस्तदेव दर्शपूर्णमासयोः प्रशस्तमिति स्तुतिः। अथ वा ते तत्रतत्र वक्ष्यमाणवचना[4]त्प्रशस्ते, अत्र तु दैवत्वादुपवीतमेवेति स्तुतिः[5] ॥ १ ॥

———:o:———

## (२)—उपवीतं लिङ्गदर्शनात्सर्वधर्मस्स्यात्॥१०॥ न वा प्रकरणात्तस्य दर्शनम् ॥११॥

**उपवीतं** पूर्वाधिकरणोदाहृतवाक्यविहितं **सर्वधर्मः** प्रकृताप्रकृतसर्वदैवकर्मणामङ्गं **स्यात्** **लिङ्गदर्शनात्** मृताग्निहोत्रप्रयोगप्रकरणाम्नाते

[1]अध्वनीनोऽतिथिर्ज्ञेयश्श्रोत्रियो वेदपारगः । मान्यावेतौ गृहस्थस्य ब्रह्मलोकमभीप्सतः ॥ १ ॥ इति याज्ञवल्क्यवचनादितः फलस्य क्लृप्तत्वादिति भावः ॥ [2]स्नातकादि इत्यपि पाठः

[3]कृत्वा चिन्तात्वमेवोद्घाटयति — वस्तुतस्त्विति ॥

[4]एतदुत्तराधिकरणे "प्राचीनावीती" इत्यादिवचनं वक्ष्यते ॥

[5]ते न देवयोग्ये इदं तूपवीतं तद्योग्यमिति व्यतिरेकेण स्तुतिरिति भावः ॥

"प्राचीनावीती दोहयेद्यज्ञोपवीती हि देवेभ्यो दोहयति" इति वाक्ये दर्शपूर्णमासातिरिक्तकर्मसम्बन्धितयाऽपि उपवीतानुवादरूपस्य लिङ्गस्य दर्शनात्। तत्र हि देवेभ्य इति बहुवचनान्न दर्शाङ्गदोहनमनूद्यते किन्तु अग्निहोत्राद्यङ्गदोहनमेवेति ॥ १० ॥ एवंपूर्वपक्षे सिद्धान्तमाह—**न वा** नैव, उपवीतं सर्वधर्मः **प्रकरणात्** दर्शपूर्णमासप्रकरणान्मात्राङ्गत्वस्यैव युक्तत्वात्। **दर्शनं** उपदर्शितं तु **तस्य** दर्शपूर्णमासस्थस्यैव देवेभ्य इति बहुवचनस्य त्वनुवादगतस्य प्रकृतिभूतसान्नाय्यविकृतिभूतपयस्याद्यनुन्यायाभिप्रायेणोपपत्तेः। यथाप्राप्तस्यैव ह्यनूदितत्वम् ॥ ११ ॥

**तदिदमुपवीतं सर्वकर्माङ्गम्। मृताग्निहोत्रे[1] "प्राचीनावीती दोहयेत् यज्ञोपवीती हि देवेभ्यो दोहयति" इति जीवदवस्थायां यज्ञोपवीतानुवादलिङ्गस्य प्राप्त्यभावेन सर्वार्थतागमकत्वात्। विप्रकृष्टत्वेन दर्शपूर्णमासस्थस्यानुवादानुपपत्तेश्च वैकल्पिकेन्द्रमहेन्द्रदेवत्यदार्शिकदोहने देवताबहुत्वाभावेन तदनुवादानुपपत्तेश्च। सर्वार्थत्वे तु कर्तृसंस्कारकस्योपवीतस्य[2] बहुदेवत्याग्निहोत्रप्रयोगाङ्गत्वेन[3] तद्दोहनेऽपि प्राप्तेरनुवादोपपत्तिरिति प्राप्ते—**

**सन्निकृष्टासम्भवे विप्रकृष्टानुवादस्यापि[4] न्याय्यत्वात्प्रकृति-**

[1]मृताग्निहोत्रे मृतस्य यजमानस्याग्निहोत्रं तदानीमन्येन क्रियमाणे तत्प्रयोगे ॥

[2]कर्तृसंस्कारत्वं च ३-१-११अधिकरणे स्थितमुपवीतस्य कर्तुश्च प्रयोगाङ्गस्य साङ्गप्रधानप्रयोगाङ्गतया अङ्गभूतहविर्दोहेऽपि प्राप्तौ तद्धर्मस्यापि प्राप्तिरिति भावः ॥

[3]सायंप्रयोगे अग्निप्रजापत्योः प्रातःप्रयोगे सूर्यप्रजापत्योर्द्वयोर्द्वयोर्देवतात्वेऽप्यग्निहोत्रप्रयोगे सर्वासामेव देवतानामग्निसूर्यप्रजापतिरूपाणां समुच्चयाद्बहुवचनोपपत्तिरिति भावः ॥

[4]आश्रीयते च निवीतप्राचीनावीतविषये "निवीतं मनुष्याणाम्" तै. सं. २-५-११. इत्यादौ ॥

विकृत्य[1]भिप्रायेण च साम्नाय्येऽपि देवताबहुत्वसत्त्वादनुवादोपपत्तेः[2] प्रकरणाद्दर्शपूर्णमासाङ्गमेवोपवीतम् । वस्तुतस्तु[3]—वक्ष्यमाण[4]वचनानुसारादाग्निहोत्रेऽपि यज्ञोपवीतसत्त्वेन तत्रत्यस्यैवायमनुवादः[5] ॥ २ ॥

## (३)-विधिर्वा स्यादपूर्वत्वात् ॥ १२ ॥

पूर्वाधिकरणोदाहृतवाक्ये "उपव्ययते"[6] इत्यंशो **विधिर्वा** विधिरेव **स्यात् अपूर्वत्वात्** वासोविन्यासविशेषरूपोपवीतनियमस्य दर्शपूर्णमासाङ्गतया अप्राप्तत्वात् । "यज्ञस्य प्रसृत्या अजिनं वासो वा दक्षिणत उपवीय"[7] इत्यनेन हि फलाधिक्यजनकगुणाधिक्यद्वारा हि वासोविन्यासः सर्वक्रतुषु विधीयमानः फलकामनायामसत्यां न प्रवर्तेत । अतोऽत्र दर्शपूर्णमासयोस्तन्नियमविधिर्युक्त एवेति ॥ १२ ॥

**"उपव्ययते"[6] इति[8]विधिरनुवादो वेति चिन्तायां "नित्यो-**

[1]साम्नाय्यस्य विकृतिरिह पयस्यादिर्ग्राह्यः ॥

[2]यत्र तु प्राप्तिकालवैषम्यापत्तिर्द्विरुक्तत्वं वा तत्र पाशमन्त्रगतबहुत्वस्य न विकृत्यभिप्रायेण गतिरित्येकत्वलक्षणयाऽपि प्रकृतावेव निवेश इष्यते । इह तु अनुवादत्वात्प्रकृतिविकृत्यभिप्रायेण तदुपपत्तिर्युक्तैवेति भावः ॥

[3]एवं वार्तिकमतेनाधिकरणं व्याख्याय भाष्यकारकृतस्यैतदधिकरणोपेक्षणस्य बीजं सूचयन्निवाधिकरणविचारमाक्षिपति - वस्तुतस्त्विति ॥

[4]उत्तराधिकरणवक्ष्यमाणस्मृतिकाठकवचनाभ्यामित्यर्थः । तथा चोक्तरीत्या पूर्वपक्षोद्भावनादेरसम्भवं युक्तं भाष्यकारकृतमुपेक्षणम् ॥

[5]प्रयोजनं तु पूर्वपक्षे दर्शपूर्णमासातिरिक्तकर्मसु उपवीतभ्रंशे यजुर्भ्रेषप्रायश्चित्तम् । सिद्धान्ते तु स्मार्तं हरिस्मरणमेवेति लिङ्गप्रकरणविरोधश्चायम् ॥

[6]तै. सं. २-५-११. [7]तै. आ. २-१.

[8]"उपव्ययते" तै. सं. २-५-११ इत्यस्य विधित्वे सति प्राक्तनाधिकरणद्वयासिद्धान्तो घटते । तदेव त्वयुक्तमित्याक्षेपेणेदमधिकरणमारभ्यते । सूत्रे सिद्धान्तेनैवोपक्रमादिह सिद्धान्तकोटिरेव प्रथममुपात्ता ॥

दकी नित्ययज्ञोपवीती" इति गौतमस्मृत्या प्राप्तत्वादनुवादः। यदि तु अनेन पुरुषार्थतया प्राप्तिराशङ्क्येत तथाऽपि "यज्ञोपवीतिना कर्तव्यम्" इति स्मृत्यनुसारात्क्रत्वर्थत्वेनापि प्राप्तिरुद्भावनीया। यदि तूक्तवचनेनाङ्गत्वे तद्भ्रेषे स्मार्तप्रायश्चित्तापत्तेर्यजुर्भ्रेषप्रायश्चित्तप्राप्त्यर्थं दर्शपूर्णमासयोस्तद्विधानमित्याशङ्क्येत ततो "यज्ञोपवीत्येवाधीयीत याजयेद्यजेत वा"[1]इत्यादितैत्तिरीयकश्रुत्या सर्वयज्ञार्थत्वेन यज्ञोपवीतविधानात्तत्प्रायश्चित्तस्यापि प्राप्त्युपपत्तेः विधानानर्थक्यम्। यदि त्वेतेषां सर्वेषां वचनानां नवतन्तुकत्रिसूत्ररूपमुख्ययज्ञोपवीतविषयत्वाद्वासोविन्यासरूपगौणो[2]पवीतस्यैवाप्राप्तस्य दर्शपूर्णमासाङ्गत्वेन विधिराशङ्क्येत ततो "यज्ञस्य प्रसृत्या अजिनं वासो वा दक्षिणत उपवीय दक्षिणं बाहुमुद्धरतेऽवधत्ते सव्यमिति यज्ञोपवीतमेतदेव विपरीतं प्राचीनावीतं संवीतं मानुषम्" इति वचनेन तस्यापि सर्वयज्ञार्थत्वेन प्राप्तत्वादनुवाद एवायं दर्शपूर्णमासस्तुत्यर्थ इति प्राप्ते —

"यज्ञस्य प्रसृत्यै"[1] इत्यनेन[3]फलाधिक्यजनकगुणाधिक्यद्वार-

---

[1] तै. आ. २-१.

[2] यज्ञोपवीतोपवीतशब्दयोः नवतन्तुकत्रिसूत्ररूपब्रह्मसूत्र एव प्रचुरप्रयोगात्तत्रैव शक्तिः। शूद्रादीनां तु मुख्ययज्ञोपवीताभावाद्वासोविन्यास एव तत्स्थानीय इति यज्ञोपवीतकार्यकर्तृत्वेन यज्ञोपवीतोपवीतशब्दयोर्गौणः प्रयोगः। अत एव यज्ञोपवीतमन्त्रे गौणमुख्यन्यायेन 'मुख्यमेव यज्ञोपवीतशब्देनोच्यत इति न वासोविन्यासे तन्मन्त्रप्राप्तिः। "उपव्ययते" तै. सं. २-६ ११. इति विहितोपवीतेन सह श्येने "निवीता ऋत्विजः प्रचरन्ति" इति विहितस्य ब्रह्मसूत्राश्रितनिवीतस्य समुच्चयभाषणमपि दशमचतुर्थाद्याधिकरणगतं तद्वाक्यविहितस्योपवीतस्य वासोविन्यासरूपतामवगमयतीति ॥

[3] प्रसृतिः फलाधिक्यजनकत्वाधानं इत्याशयः ॥

कत्वेनास्य जयादिहोमव[1]त्सर्वयज्ञाङ्गत्वावगत्याऽनावश्यकत्वप्रतीते रावश्यकत्वार्थं दर्शपूर्णमासयोर्वासोविन्यासविध्युपपत्तिः। अत एव शिष्टा अपि वासोविन्यासं विनाऽपि कर्मान्तराण्याचरन्ति। यद्यपि च 'यज्ञस्य'[2] इतिवाक्यं "यज्ञोपवीत्येव"[2] इत्यस्य वाक्यस्य शेषः सन्निधानादिष्येत, तथाऽपि समस्तेन तेन वासोविन्यास एव फला भिव्यार्थं विधीयत इति न दोषः। मुख्यब्रह्मसूत्ररूपयज्ञोपवीतं तु सदा स्मृत्यैव सर्वयज्ञार्थत्वेन विधीयते। एवं च श्रौतप्रायश्चित्त- सिद्ध्यर्थमिदमपि दर्शपूर्णमासाङ्गत्वेन "उपव्ययते"[3] इत्यनेन विधीयत इत्यपि केचित्[4]। निवीतादिसमभिव्याहारस्योभयत्र प्रत्य- भिज्ञापकस्य तुल्यत्वात्तु वासोविन्यास[5]एवात्र नियम्यत इति युक्तमुत्पश्यामः। सर्वथा "उपव्ययते"[3] इति विधिः दर्शपूर्णमा-

[1] ३-४-१३. अधिकरणे जयादिहोमविचारे द्रष्टव्यः ॥ [2] तै. आ. २-१.

[3] तै. सं २-६-११ [4] केचित् शास्त्रदीपिकाप्रकाशकारादयः ॥

[5] दर्शपूर्णमासप्रकरणाम्नाते उपवीतवाक्ये "निवीतं मनुष्याणम्" (सं.२-६-११) इत्यादिनिवीतादिपरवाक्यसमभिव्याहारदर्शनेन सादृश्यात्काठकवाक्यशेषस्य "एतदेव विपरीतं प्राचीनावीतं संवीतं मानुषम्" (आ. २-१.) इत्यस्य उपस्थितौ सत्यां ब्रह्मसूत्रापेक्षया काठकवाक्यविहितवासोविन्यासस्यैव झडित्युपस्थितस्य विधानं युक्तं न ब्रह्मसूत्रस्य "यज्ञस्य प्रसृत्यै" (आ. २-१) इत्यस्यार्थवादमात्रतामङ्गीकृत्य फलपरत्वानङ्गीकारेऽपि वैकल्पिकस्याजिनस्य निवृत्त्यर्थं--

"यज्ञोपवीते द्वे धार्ये श्रौते स्मार्ते च कर्मणि।
तृतीयमुत्तरीयार्थे वस्त्राभावे तदिष्यते ॥"

इति स्मृतितः पक्षे प्राप्तस्य वासोविन्यासविरहस्य बाधनार्थं वा दर्शपूर्णमासाङ्गतया वासोविन्यासोऽत्र नियम्यत इति भावः ॥

**साविधि[1]व्यवाहितत्वात् तत्स्तावकत्वानुपपत्तेरिति सिद्धम् ॥ ३ ॥**

अथवा —"विधिना चैकवाक्यत्वात्" इत्यादित एवोपवीतवाक्यस्य विधितायास्सिद्धत्वात्पुनरिह तद्विचारे न किंचित्प्रयोजनम्। अतो विचारान्तरस्येदं पूर्वपक्षसूत्रमित्यास्थेयं । तथाहि—

## (३)–विधिर्वा स्यादपूर्वत्वात् ॥१२॥

"प्राचीनावीती दोहयेद्यज्ञोपवीती हि देवेभ्यो दोहयति" इत्यस्मिन् दिष्टगताग्निहोत्रप्रकरणाम्नाते वाक्ये यज्ञोपवीतस्यापि **विधिर्वा** विधिरेव **स्यात् अपूर्वत्वात्** तत्र यज्ञोपवीतपदस्य ब्रह्मसूत्रपरत्वे तस्य स्मृतितः प्राप्तत्वेऽपि श्रौतप्रायश्चित्तप्राप्तिफलकतया अप्राप्तत्वात् । तत्पदस्य वासोविन्यासपरत्वे च अजिनवैकल्पिकतया तस्य काठकश्रुतितः प्राप्तत्वेऽपि तन्नियमस्यात्र विधित्सितस्याप्राप्तत्वादिति । पूर्वपक्षेऽस्मिन् स्थित एव विचारान्तरमारभ्यते ॥ १२ ॥

**एवं वा—यावज्जीववाक्य[2]नाग्निहोत्रे जीवनस्य निमित्तत्वावगमेऽपि वचनेनैव[3]दाहावधि सायंप्रातःकाले मरणोत्तरं नित्यत्वेन विहिताग्निहोत्रप्रयोगो मृताग्निहोत्रम्। तस्मिन् मृताग्निहोत्रे "प्राचीनावीती दोहयेद्यज्ञोपवीती हि देवेभ्यो दोहयति" इत्यनेन श्रुतेन दैवाग्निहोत्रे किं यज्ञोपवीतस्य विधिरनुवादो वेति चिन्तायां—**

---

[1] दर्शपूर्णमासविधेरतिदूरस्थत्वेन तत्स्तावकतया तदेकवाक्यत्वं निवीतायुपवीतान्तवाक्यस्याशक्याभ्युपगमम्। तस्मादुपवीतविधिस्वीकारे आवश्यके तच्छेषतया निवीतादिवाक्यं सङ्गच्छते इति भावः ॥

[2] ३-४-१. अधिकरणे एतद्वाक्यविचारो द्रष्टव्यः ॥

[3] दिष्टगताग्निहोत्रविधिपरेण वचनान्तरेण ॥

स्वरूपेण प्राप्तस्यापि ब्रह्मसूत्रस्य श्रौत[1]प्रायश्चित्तप्राप्तिफलकतया विधिः वासोविन्य सरूपस्य वा नियमार्थे[2]विधिरिति प्राप्ते-ऽस्थितं तावदपर्यवसितं मध्ये चिन्तान्तरारम्भः ॥ ३ ॥

---

## (४)–उदकत्वं चापूर्वत्वात् ॥ १३ ॥ सतो वा लिङ्गदर्शनम् ॥ १४ ॥

दिष्टगताग्निहोत्रप्रकरण एवाम्नाते "ये पुरोदञ्चो दर्भास्तान् दक्षिणाग्रांस्तृणीयात्" इति वाक्ये ये पुरा जीवदग्निहोत्रे दर्भाः त उदञ्चः कार्या इत्येवं विधिवाचकपदाध्याहारेण **उदक्त्वं च** विधिरिति पूर्वसूत्रादनुवर्तते । विधिविषय इत्यर्थः । कुतः **अपूर्वत्वात्** अप्राप्तत्वात् स्मृतिप्राप्तत्वेऽपि श्रौतप्रायश्चित्तप्राप्तिफलकतया अप्राप्तत्वात् ॥ १३ ॥ एवं पूर्वपक्षे सिद्धान्तमाह—**सतो वा** "अग्रवन्ति प्रागग्राण्युदगग्राणि वा" इत्यादिस्मृतितः प्राप्तस्यैवात्र उदक्त्वस्यानुवादः यतोऽत्र **लिङ्गदर्शनम्** अनुवादलिङ्गयोः यच्छब्दयोगविधिप्रत्ययविरहयोर्दर्शनमस्ति । न खल्वेवं लिङ्गदर्शने सति स्मृतिप्राप्तस्य विधिना अभ्युपगम उचित इति भावः ॥ १४ ॥

तत्रैव "ये पुरोदञ्चो दर्भास्तान् दक्षिणाग्रांस्तृणीयात्" इति

---

[1] विधित्वपक्षे यजुर्वेदविहितत्वात्तद्भ्रेषे "यदि यजुष्टो भ्रंश इति दक्षिणाग्नौ जुहुयात्" इति श्रौतं प्रायश्चित्तं भवति । स्मृतिप्राप्तकर्माङ्गत्वेनानुवादत्वपक्षे तु एतदव्यवहितोत्तराधिकरणे वक्ष्यमाणरीत्या प्रायश्चित्तान्तरप्राप्तिस्स्यादिति प्रयोजनभेदाद्विधित्वं युक्तमित्याशयः । पूर्वाधिकरणोक्तरीत्याऽत्र यज्ञोपवीतपदस्य काठकवाक्यप्रत्यभिज्ञानेन वासोविन्यासविशेषपरत्वाङ्गीकारपक्षमाश्रित्याह —वासोविन्यासेति ॥

[2] नियमोऽत्र पूर्वाधिकरणप्रदर्शितरीत्या बोध्यः ॥

श्रुतेऽपि ये पुरा दर्भास्ते उदञ्चः[1]कार्याः इत्येवं विधिवाचकपदाध्याहारेणापि पूर्ववद्विधिः। न च पुराशब्दस्य विशेषणत्वे विशिष्टोद्देशः। दक्षिणाग्रत्वस्य मृताग्निहोत्रे विधावर्थादेवोदक्त्वस्य जीवदवस्थायामेव प्राप्तत्वेनाविशेषणत्वात्। [2]निपातत्वेन पुराशब्दान्वयस्य व्युत्पन्नत्वाच्च। न च "अग्रवन्ति प्रागग्राण्युदगग्राणि वा" इति सामान्यस्मृत्यै[3]वोदगग्रत्वप्राप्तेर्विध्यानर्थक्यामेति वाच्यं यजुर्भ्रेषप्रायश्चित्तसिद्ध्यर्थं तद्विधानोपपत्तेः। अन्यथा स्मृतिमूलभूतश्रुतेरविज्ञातवेदत्वात् "यद्यविज्ञाते भूर्भुवस्सुवरित्याहवनीये जुहुयात्" इत्येतत्प्राप्येतेति प्राप्ते—

यच्छब्दश्रवणात्प्रत्यक्षविध्यभावाद्विध्यन्तरैकवाक्यत्वाच्च नायं विधिः, अपि तु प्राप्तत्वात्तच्छब्दापेक्षितोद्देश्यविशेषसमर्पक एवेत्यनुवादः ॥ ४ ॥

---

द्वादशसूत्रे कृतस्य पूर्वपक्षस्यापि चतुर्दशं सूत्रमिदमेव सिद्धान्तपरम् ॥

## (४)—सतो वा लिङ्गदर्शनम् ॥१४॥

सतो वा स्मृतिप्राप्तस्यैव वा श्रुतितो नियमेन प्राप्तस्य वा यज्ञोपवीतपदार्थस्य दिष्टगताग्निहोत्र प्राचीनावीतविधिशेषतयाऽनुवादः यतोऽत्र लिङ्गदर्शनं अनुवादलिङ्गयोः हिशब्दयोगसम्भवद्विध्यन्तरैकवाक्यत्वयोर्दर्शनमस्ति ॥ १४ ॥

---

[1]पुरा यजमानस्य जीवदवस्थायामित्यर्थः। उदञ्चः उदगग्राः "दक्षिणाग्रान्" इत्युत्तरत्र श्रवणात् ॥

[2]विशिष्टोद्देशकृतवाक्यभेदशङ्कैव नात्रावतरतीत्याशयेनाह — निपातेति ॥ २—१-२. अधिकरणे निपातस्य नामान्वयव्युत्पन्नत्वं दर्शितं द्रष्टव्यम् ॥

[3]अग्रवन्ति दर्भसमित्स्रुगादीनि यानि तानि प्रागग्राण्युदगग्राणि वा कार्याणीति स्मृत्यर्थः ॥

**स्थितादुत्तरम्—**

**हिशब्दोपबन्धाद्विध्यन्तरैकवाक्यत्वाद्वायमपि निवीतादिवत्प्राचीनावीतस्तुत्यर्थः । अत एव ' उपव्ययते '* इतिवदानर्थक्याभावादपि विधिकल्पनं निरस्तम् । यज्ञोपवीतपदवाच्यब्रह्मसूत्रस्य च स्मृत्यैव [1]जीवदग्निहोत्रे प्राप्तत्वादौचित्यादिना स्तुत्युपपत्तिः । वासोविन्यासरूपस्यापि वा अनियमेनोक्त[1]विधया जीवदग्निहोत्रे प्राप्तत्वात् स्तुत्युपपत्तिः । यदि तु नियमेन तत्प्राप्तिस्स्तुतावावश्यकी अपेक्ष्येत, ततस्सन्निकृष्टासम्भवाद्विप्रकृष्टदर्शपूर्णमासादिस्थस्यैवायमनुवादः स्तुत्यर्थं नानुपपन्नः । बहुवचनं तु प्रकृतिविकृत्यभिप्रायमित्युक्तमेव[2] ॥ ४ ॥**

---

## (५)–विधिस्तु धारणेऽपूर्वत्वात् ॥१५॥

"अधस्तात्समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयति" इति दिष्टगताग्निहोत्रप्रकरणाम्नातवाक्ये हिशब्दयुक्तेऽपि स्रुग्धारणस्योपरि समिधः **धारणे विधिस्तु** विधिरेव **अपूर्वत्वात्** वाक्यान्तरेणाप्राप्तत्वात् । न खल्वर्थस्य कथञ्चिदप्यप्राप्तत्वेऽनुवादस्सम्भवति । तस्मात् इह हिशब्दस्यानुवादलिङ्गत्वासम्भवादर्थान्तरपरत्वमेव स्वीकार्यम् । तस्य प्रसिद्धयर्थकत्वे वा सिद्धवदनुवादान्यथाऽनुपपत्त्या उपरि धारणविधिः कल्पनीय इत्याश्रयणीयमिति ॥ १५ ॥

**मृताग्निहोत्र एव ' अधस्तात्समिधं धारयन्ननुद्रवेत् उपरि**

---

[1] ३-४-३. अधिकरणे द्रष्टव्यम् ॥ [2] ३-४-२. अधिकरणे ॥

* तै. सं. २-५-११.

हि देवेभ्यो धारयति"[1] इति श्रुतेन किं उपरिधारणं दैवाग्निहोत्रे विधीयते उतायमप्यनुवाद इति चिन्तायां-

हिशब्दश्रवणाद्विध्यन्तरैकवाक्यत्वाच्च 'उपरि हि' इत्यनुवादः पूर्वस्तुत्यर्थः। न च प्राप्त्यभावः "स्रुग्दण्डे समिधमुपसङ्गृह्यानुद्रवति" इति वचनेन स्रुग्दण्डस्याधिकरणत्वप्रतीतेरुपरिधारणाभावे पतनप्रतिबन्धकत्वरूपतदयोगादुपरिभावस्य प्राप्तेः। न च समित्स्रुग्दण्डयोरुभयोरपि कृतार्थत्वात्[2] "उत यत्सुन्वन्ति सामिधेनीस्तदन्वाहुः" इतिवद्दे[3]शार्थत्वावधारणात् सप्तम्या सामीप्यमात्रलक्षणेति कथं[4] चिदुक्तं युक्तम्। कृतार्थयोरङ्गाङ्गिभावाभावेऽप्यधिकरणत्वेनैव दृष्टान्त इव स्रुग्दण्डस्य देशत्वोपपत्तेः[5]। अतोऽत्राप्यनुवाद इति प्राप्ते—

---

[1] स्रुचि गृहीतं पित्र्यं हविर्होतुं यदा गार्हपत्यादाहवनीयं प्रति गच्छेत् तदा स्रुग्दण्डस्याधस्तात् समिधं धारयेत्। दैवाग्निहोत्रे दैवं हविर्होतुं यदा गार्हपत्यादाहवनीय गच्छेत् तदा स्रुग्दण्डस्योपरि समिधं धारयति हि इत्यर्थः, "स्रुग्दण्डे समिधमुपसङ्गृह्य" इत्युदाहरिष्यमाणवचनानुरोधात्। अत एव हविर्निरूपितोपरिभावपरतामस्य वचनस्याश्रित्य पूर्वपक्षप्रवर्तनं शास्त्रदीपिकाकृतामनुचितमित्याशयः॥

[2] समिधो होमार्थतया, स्रुचो हविर्धारणार्थतया, कृतार्थत्वम्॥

[3] ३-७-७. अधिकरणे द्रष्टव्यम्॥

[4] शास्त्रदीपिकाप्रकाशकाराणाम्॥

[5] "उत यत्सुन्वन्ति" इत्यादिवाक्ये देशलक्षणायामपि लक्षितदेशस्यैव सामिधेन्यनुवचनाधिकरणत्वमाश्रितं सप्तम्यश्रवणेऽपि। इह तु सप्तमीश्रुतिसमधिगतमधिकरणत्वं देशरूपस्यापि, स्रुग्दण्डस्य दुरपलपमिति भावः॥

स्रुग्दण्डस्य न तावद्ग्रहणेऽधिकरणत्वम् , हस्तादेरेव तदधिकरणत्वात् उपशब्दवैयर्थ्याच्च । नाप्युपशब्दार्थे सामीप्ये, स्रुग्दण्डस्य सामीप्यप्रतियोगित्वेनाधिकरणत्वानुपपत्तेः । अतस्सप्तमी सामीप्यप्रतियोगित्वलक्षणार्था । कथञ्चित्सामीप्याधिकरणत्वसम्भवेऽपि[1] वा समिदधिकरणत्वस्याप्राप्तत्वान्नोपरिभावानुवादः । अतो हिशब्दपरित्यागेनैकवाक्यतामपि भङ्क्त्वा दैवाग्निहोत्रे उपरिभावनियमविधिः[2] ।

वस्तुतस्तु[3]—अनियतप्राप्त्याऽप्येकवाक्यत्वसम्भवे हविरुभयत्वादिव[4] द्वाक्यभेदाङ्गाकारस्यायुक्तत्वादस्यार्थवादत्वमेवाङ्गीकृत्य

---

[1] समिधः स्रुग्दण्डप्रतियोगिकसामीप्यानुयोगित्वे समित्प्रतियोगिकसामीप्यानुयोगित्वमपि स्रुग्दण्डेऽक्षतमिति तद्विवक्षायां सामीप्याधिकरणत्वं स्रुग्दण्डस्याबाधितं अनुयोगित्वस्यैवाधिकरणतारूपत्वादिति भावः । मुख्यं तन्निरूपितमधिकरणत्वं तत्पतनप्रतिबन्धकत्वरूपमेव । अन्यविधं तु गौणम् । उपेत्युपसर्गेण च समभिव्याहृतपदार्थे सामीप्यप्रतियोगित्वमेव च प्रत्याय्यते इत्याशयेन कथञ्चिदिति ॥

[2] "स्रुग्दण्डे समिधमुपसङ्गृह्य" इत्यनेन स्रुग्दण्डस्य उपेत्युपसर्गार्थस्य समित्प्रतियोगिकसामीप्यनिरूपिताधिकरणत्वस्य प्राप्तत्वेऽपि स्रुग्दण्डसमीपे उपर्यधोभावरूपनियमालाभात् स्रुग्दण्डस्य समिन्निष्ठाधेयतानिरूपिताधिकरणत्वनियमोऽप्राप्तत्वात् "उपरि हि" इति वाक्येन विधीयते । हिशब्दे च यथाश्रुतप्रसिद्ध्यर्थकतां परित्यज्य अव्ययानामनेकार्थत्वेन चकारसमानार्थकत्वमप्याश्रयितव्यमिति भावः ॥

[3] हिशब्दयथाश्रुतार्थकत्वानुरोधेनाह—वस्तुतस्त्विति ॥

[4] कादाचित्कमुभयहविर्नाशमादायाप्युभयत्वानुवादो विशिष्टोद्देशप्रयुक्तवाक्यभेदपरिहारायाश्रितः ६-४-६ अधिकरणे ॥

**सिद्धवन्निर्देशान्यथानुपपत्त्या विध्यन्तरस्यैवाप्राप्तनियमफलकस्य कल्पनेति युक्तम् ॥**

**वस्तुतस्तु[1] "स्रुग्दण्डे निधाय सामिधमनुद्रवति" इति न्यायसुधाकृल्लिखितवचनेनोपरिभावस्यापि लक्षणातात्पर्यग्राहकप्रमाणाभावेन प्राप्तत्वादेतद्वचनाभावं कृत्वा चिन्तयेदमधिकरणमिति ध्येयम् ॥ ५ ॥**

---:0:---

## (६)-दिग्विभागश्च तद्वत्सम्बन्धस्यार्थहेतुत्वात्॥

सोमप्रकरणाम्नातस्य "प्राचीनवंशं करोति देवमनुष्या दिशो व्यभजन्त प्राचीं देवा दक्षिणा पितरः प्रतीचीं मनुष्या उदीचीं रुद्राः"* इत्यस्य वाक्यस्यैकदेशभूतो **दिग्विभागश्च** "प्रतीचीं मनुष्याः"* इति दिग्विभागवाक्यमपि **तद्वत्** निवीतवाक्यवत् न विधिः किन्तु प्राचीनवंशविधेरर्थवादः **सम्बन्धस्य** मनुष्यप्रतीचीसम्बन्धस्य याद्दच्छिकस्यैव **अर्थहेतुत्वात्** अर्थवादार्थभूतस्तुतावालम्बनतया हेतुत्वोपपत्तेः । "पानव्यापच्च तद्वत्" (३-४-३८) इत्यादाविव अत्र उत्तराधिकरणे च तत्पदं व्यवहितेऽपि निवीताधिकरणे प्रक्रान्तस्यार्थस्य परामर्शकं बोध्यमिति वार्तिकानुसारिणः । भाष्ये तु निवीताधिकरणानन्तर "उपवीतम्" इत्यादि सूत्रषट्कमुज्झित्वैव दिग्विभागाधिकरणमारब्धम् ॥१६॥

**सोमे "प्राचीनवंशं[3] करोति"* इत्येतद्विधिशेषः "अभजन्त प्राचीं देवा दक्षिणा पितरः प्रतीचीं मनुष्या उदीचीं रुद्राः"* इत्य-**

---

[1] भाष्यकारकृततदधिकरणोपेक्षामूलमुद्घाटयति—वस्तुतस्त्विति ॥

[2] प्रयोजनं त्वेतदधिकरणे--सिद्धान्ते उपरिधारणभ्रेषे श्रौतप्रायश्चित्तम् । पूर्वपक्षेतु तदभाव इति बोध्यम् ॥ ** तै. सं ६-१-१.

[3] प्राचीनाः प्रागग्राः उपरिवंशाः यस्यासौ प्राचीनवंशः पत्नीशालामण्डपः ॥

यं श्रुतः । तत्र मनुष्यसंयुक्ते [1] निवीताधिकरण[2]वदौदुम्बराधिकरणवच्च[3] विधित्वं निरस्तमपि[4] पूर्वाधिकरण[5]वन्मनुष्यकर्तव्यवैदिककर्मणि तावद्दिगन्तरस्यैव सामान्यविशेषादि[6] वचनेन प्राप्ततया प्रतीच्या अप्राप्तेर्लौकिके च कर्मणि प्रतीच्या नित्यप्राप्त्यभावात् विधित्वं विधिकल्पकत्वं वेति प्राप्ते—

इह प्रतीच्या मनुष्यसम्बन्धमात्रोपादानेऽपि कर्मविशेषानुपादानात्सर्वत्र[7] विधानस्य त्वयैव निरस्तत्वाद्यस्यामेव क्रियाव्यक्तौ प्रतीचीदिगभिमुखत्वं लोके यदृच्छया[8] सिद्धम् तादृशक्रियागतमेव मनुष्यप्रतीचीसम्बन्धं[9] गृहीत्वा स्तुत्युपपत्तेर्नातिरिक्तः विध्यन्तरकल्पनं प्रमाणवत् । 'उपरि हि' इत्यत्र तु दैवाग्निहोत्र-

---

[1] देवपितृरुद्राणां मनुष्यातिरिक्ततया कर्मानधिकारित्वात्तत्संयुक्तवाक्येषु विधित्वशङ्काया असम्भवात् मनुष्यसंयुक्ते इत्युक्तम् ॥

[2] ३-४-१ [3] १-२-२.

[4] 'विधित्वं निरस्तं । अथापि' इत्यर्थमङ्गीकृत्य वाक्यभेदेन योजना कार्या । एकवाक्यत्वे तु विधित्वे निरस्तेऽपि इत्येवं भाव्यम् ।

[5] पूर्वाधिकरणवदित्यस्य "विधित्वं विधिकल्पकत्वं वा" इत्यनेनान्वयः ॥

[6] "यत्र दिङ्नियमो न स्याज्जपहोमादिकर्मसु । तिस्रस्तत्र दिशः प्रोक्ता- ऐन्द्री सौम्याऽपराजिता" इति सामान्यवचनम् । "प्रागपवर्गाण्युदगपवर्गाणि वा" इत्यादिकं विशेषवचनम् ॥

[7] सर्वत्र वैदिककर्मसामान्ये ॥

[8] पूर्वाह्णे हि प्राणिनः पृष्ठत आदित्यं कृत्वा व्याप्रियमाणाः आतपेन न बाध्यन्ते इति यदृच्छा विधिनिरपेक्षेच्छा । उपलक्षणमिदं सायंकालीनाद्यर्थादेः विध्यन्तरप्राप्तस्यापि मनुष्यप्रतीचीसम्बन्धस्य ॥

[9] सम्बन्धपदेन सूत्रगतं सम्बन्धपदादिकं विवृतम् ॥

त्वावच्छेदेनोपरिभावश्रवणात्तस्य चाप्राप्तत्वेन विध्यन्तरकल्पनया दैवाग्निहोत्राङ्गसमिद्धारणानुवादेनोपरिभावविधिः । अनुमित[1] वाक्यत्वाच्च न विशिष्टोद्देश इति वैषम्यम् ॥ ६ ॥

--:०:--

## (७)—परुषिदितपूर्णघृतविदग्धं च तद्वत् ॥१७॥

परुषिदितादिपदमत्र स्वरूपपरम् । परुषिदितं च पूर्णं च घृतं च विदग्धं चैषां समाहारः **परुषिदितपूर्णघृतविदग्धं च** तत्तद्व्यक्तिवाक्यान्यपि **तद्वत्** दिग्विभागवाक्यवत् न विधिः किन्तु अर्थवाद एव "यत्परुषि दि (तम्) नम् । तद्देवानाम् । यदन्तरा । तन्मनुष्याणाम् । यत्समूलम् । नत्पितृणाम्"* इति वाक्यं यादृच्छिकं अन्तरालवनक्रियायां मनुष्यसम्बन्धं प्रतिपादयत् "पर्व प्रति लुनाति" इति विधेस्स्तावकतया, "यत्पूर्णं तन्मनुष्याणां यदुपर्य धस्तद्देवानां अधः पितृणाम्" इति वाक्यमपि "उपरि बिलाद्गृह्णाति" इति विधेस्स्तावकतया, "घृतं देवानां मस्तु पितृणां निष्पक्वं मनुष्याणम्" † इत्येतदपि "नवनीतेनाभ्यङ्क्ते" † इति विधेस्स्तावकतया, "यो विदग्धस्स नैर्ऋतः" ‡ इत्येतदपि "अविदहता (श्रपयितव्यः) शृतंकृत्यः" ‡ इति विधेस्स्तावकतया शेषः । बर्हिषः पर्वमूलान्तरालदेशलवनं अमूलग्रहणं च पात्रसमामितं पात्राधोभागमितं च घृतमस्तुनी च हविर्विदाहादिकं चान्यत्रोचितं प्रकृते तु पर्वलवनं मानपात्राधिकग्रहणं नवनीतं हविरविदाहनं चोचितमिति तत्र तत्र स्तुतिबोध्या । दिग्विभागवाक्ये विधिशक्तिप्रतिबन्धकभूतलकारः पुराकल्परूपता च स्तः । अत्र तु तदभावादधिकाशङ्का दिग्विभागाधिकरणातिदेशबीजमवसेयम् ॥१७॥

---

1 "श्रूयमाणस्य वाक्यस्य न्यूनाधिकविकल्पने । लक्षणा वाक्यभेदादिदोषो नानुमिते ह्यसौ" इति वार्तिकादिति भावः ॥

* तै. ब्रा. १-६-८. † तै. सं. ६-१-१. ‡ तै. सं. २-६-३.

दर्शपूर्णमासयोः "पर्व प्रति लुनाति[1]" इत्यादिविधेः "यत्परुषि (दि)तं(नम्) । तद्देवानाम् । यदन्तरा[2] । तन्मनुष्याणाम् । यत्समूलम् । तत्पितृणाम्"* इति शेषः तथा सोमे "यत्पूर्णं तन्मनुष्याणां यदुपर्यधस्तद्देवानाम्"[3] इति "उपरि बिलाद्धृणाति" इत्यस्य विधेः । तथा तत्रैव "नवनीतेनाभ्यङ्क्ते"† इत्यस्य "घृतं देवानां मस्तु पितृणां निष्पक्वं[5] मनुष्याणाम्"† इति । तथा दर्शपूर्णमासयोः 'अविदहता (श्रपयितव्यः) शृतंकृत्यः' ‡ इति विधेः "यो विदग्धस्स नैर्ऋतः"[6] ‡ इति । तत्रमनुष्यसंयुक्ते[7] क्रियाविशेषस्य लवनादेरुपादानात्[8] तत्र च

---

[1] बर्हिर्लवनकाले पर्वस्थाने लवनं कार्यमित्यर्थः ॥

[2] परुषि पर्वणि दितं लूनं बर्हिरादि । अन्तरा मूलपर्वणोर्मध्ये ॥

[3] पूर्ण प्रस्थादिभिर्मानदशायां मानपात्रादधिकीभूयवर्तमानं व्रीहियवघृतादिकं मनुष्याणाम् । उपर्यधः मानपात्रस्य समतया वर्तमानं देवानाम् । देवानामित्येतदनन्तरं "अधः पितृणाम्" इत्येतद्वाक्यं श्रूयते । यत्तु मानपात्रस्याध एव वर्तते तद्द्रव्यं पितृणाम् । मनुष्यादिसम्बन्धि द्रव्यं मानदशायां तथातथा मानपात्रमौतव्यमिति भावः ॥

[4] यदा व्रीहियवादिकं प्रस्थादिभिर्निमाय ऋत्विग्भ्यो दक्षिणात्वेन दीयते तदा प्रस्थादिमानपात्रस्य बिलादुपर्यप्यधिकतया यथा व्रीह्यादिकमवतिष्ठेत् तथा निमाय ग्राह्यमित्यर्थ इति कमलाकरादयः ॥

[5] मस्तु दधिभवं मण्डम् । निष्पक्वं ईषद्विलीनं नवनीतम ॥

[6] "यो विदग्धस्स नैर्ऋतो योऽशृतस्स रौद्रो यश्शृतस्स सदेवस्तस्मादविदहता शृतंकृत्य (श्रपयितव्य) स्सदेवत्वाय" (तै. सं. २-६-३.) इत्याम्नायते । विदग्धः अत्यन्तपक्वः । अशृत अपक्वः । शृतः पक्वः ॥

[7] मनुष्यसंयुक्ते इत्यस्य तात्पर्यं पूर्वाधिकरणं टिप्पण्यां द्रष्टव्यम् ॥

[8] उपादानात् अनुषञ्जनात् ॥

* तै. ब्रा. १-६-८. † तै. सं. ६-१-१. ‡ तै. सं. २-६-३.

**लवनत्वाद्यवच्छेदेनान्तरात्वादिगुणानां नित्यप्राप्त्यभावा[1]द्विध्यन्तरकल्पनया तत्र तद्विधानं। न च फलकल्पना। "तद्यथैवादोमनुष्यराज आगते[2]" इत्यादौ "नयनं दक्षिणं दीक्षितः पूर्वमाङ्क्ते[3]" इत्यादौ च शतशस्तस्या अङ्गीकारात्। अन्यथा तत्तत्स्मृतीनां[4] तत्तदर्थवादोन्नीतविधिमूलकत्वानुपपत्तेः[5]। "यो विदग्धः" * इत्यत्र तु[6] विदग्धनिर्ऋतिदेवतोभयसम्बन्धस्याप्राप्तत्वाद्विध्यन्तरकल्पनायां नैव किञ्चिद्बाधकमिति प्राप्ते—**

---

[1] अनेन उपरिधारणाधिकरण [३-४ ५] सिद्धान्तयुक्तिः प्रदर्शिता॥

[2] "अन्यस्मिन्नुक्षाणं वेहतं वा क्षदन्ते" इति वाक्यमस्य शेषः। अत्र च विशिष्टवाक्ये सिद्धवदनुवादान्यथानुपपत्त्या विशिष्टपुरुषागमे मधुपर्कविधिः पुरुषार्थः कल्प्यते॥

[3] "सव्यं हि पूर्वं मनुष्या आऽञ्जते" (तै. सं. ६-१-१.) इति वाक्यमस्य शेषः। अत्र शेषभूते वाक्ये सिद्धवदनुवादान्यथानुपपत्त्या दीक्षाबहिर्भूतमनुष्यकर्तृकाञ्जने सव्यपूर्वकत्वविधिः पुरुषार्थः कल्प्यते॥

[4] "महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत्" इत्यादीनां मधुपर्कसव्यपूर्वाञ्जनस्मृतीनाम्॥

[5] तथा च एतादृशस्मृतीनां प्रत्यक्षश्रुतिविधिमूलकत्वं नास्त्येव तादृशविधीनामनुपलम्भात्। उपदर्शितार्थवादोन्नीतविधिमूलकत्वस्याप्यभावे स्मृतीनां सर्वासां श्रुतिमूलकत्वसिद्धान्तः स्मृत्यधिकरण (१-३-१) सिद्धो भज्येतेति भावः॥

[6] तुशब्देनाग्नेयादिवाक्यतुल्यत्वमस्य वाक्यस्य पूर्वोदाहृतवाक्यापेक्षया विशेषो दर्शितः॥

* तै. सं. २-६-३.

"पराषि दि तं) नम्"[1] इत्यत्र दितपदस्य वैदिकलवनपरस्य[2] 'अन्तरा'[1] इत्यत्रानुषङ्गेण तदर्थपरत्वे विकल्प[3]प्रसङ्गात् अर्थान्तर[4]परत्वे वैरूप्यापत्तेरनुषङ्गायोगेन[5] अध्याहारा[6]वश्यंभावात्, "यदन्तरां"[1] इति यच्छब्दयोगेन च लोकप्रसिद्धयादृच्छिकान्तरालवनव्यक्तिमुद्दिश्यैव मनुष्यसम्बन्धस्य स्तुत्यर्थमुपदेशप्रतीतेर्लौकिकलवनत्वावच्छिन्ने अन्तरात्वस्याप्रतीतेस्तस्य च तद्व्यक्तौ नित्यप्राप्त्या न विध्यन्तरकल्पनम्[7] । "नयनं दक्षिणं दीक्षितः पूर्वमाऽङ्क्ते सव्यं हि मनुष्या आऽञ्जते"[8] इत्यत्र तु मनुष्यनेत्राञ्जनत्वावच्छेदेनैव सव्यपूर्वकत्वस्य स्तुत्यर्थमुपादानात्तादृशस्य च नित्यप्राप्त्यभावेन विधिकल्पकत्वमिति विशेषः । यादृशस्य हि स्तुत्यर्थमुपादानं तादृशस्य नित्यवदप्राप्तौ विधिकल्पनं नान्यत्र[9] ।

---

[1] तै. ब्रा. १-६-८.

[2] देवानामिति वाक्यशेषे देवानां कर्तृत्वाभावेन याद‍ृच्छिकदेवकर्तृकलवनानुवादासम्भवादगत्या देवप्रधानककर्मपरत्वावगतेस्तदनुरोधेन दितपदस्य तत्रत्यस्य वैदिकलवनपरत्वमावश्यकमिति भावः ॥

[3] पर्वान्तरादेशयोः वैदिकलवने विकल्पः प्रसज्येत ॥

[4] अर्थान्तरं वैदिकातिरिक्तं लौकिकलवनम् ॥

[5] श्रुतानुषक्तयोरेकार्थकत्वरूपमवैरूप्यं अनुषङ्गाधिकरण (२-१-१७) सिद्धम् ॥

[6] लौकिकलवनमात्रपरस्य लौकिकस्याध्याहारः ॥

[7] इदमुपलक्षणं पूर्णनिष्पक्ववाक्ययोरध्याहारयच्छब्दद्वयाभावेऽपि सौकर्यान्माने पूर्णत्वस्य शिरसि निहितनिष्पक्कस्य सुखकरत्वाच्च स्वतस्सिद्धयादृच्छिकप्राप्तिमादायैवानुवादत्वं वक्तव्यमिति ॥

[8] तै. सं. ६-१-१.

[9] अन्तरावाक्ये यत्तच्छब्दयोरुपादानात् यच्छब्दस्य तच्छब्दावधिप्रसिद्धार्थकत्वद्योतनेन यदन्तरा प्रसिद्धं सौकर्येण लवनं तन्मनुष्याणां

अत एव—"यो विदग्धः"[1] इत्यादौ विदग्धत्वनिन्दार्थं तस्य कर्मानर्हत्वफलकानिर्ऋतिसम्बन्धमात्रस्योत्प्रेक्षाविधया[2] सङ्कीर्तनात् निर्ऋतिसम्बन्धस्य "तं यज्ञं निर्ऋतिर्गृह्णाति" इत्यादौ[3] कर्मानर्हत्वप्रयोजनकत्वावगतेरुत्प्रेक्षायां चोत्प्रेक्षितार्थस्य प्राप्त्यभावेऽपि क्षतिविरहात् निर्ऋते रक्षोधिपतित्वेन देवानर्हभक्षकत्वस्य प्रमाणान्तरप्राप्तत्वाच्च न विधिकल्पकत्वम्। न ह्ययं देवतातद्धितः। येन तस्या[4] अप्राप्तत्वाद्विधिः कल्प्येत। निन्दायै सम्बन्धसामान्येनापि तदुपपत्तेः[5]। अतो नैते विध्यन्तरकल्पकाः[6] ॥ ७ ॥

---

मलिनानामित्येवं निन्दोन्नीतव्यतिरेकेण पर्वल्वनस्तुत्यर्थं मनुष्यसम्बन्धोऽनूद्यते। तद्व्यक्तौ चान्तरात्वं नित्यप्राप्तमेव भवति इह तु यत्सव्यमञ्जते तन्मनुष्या इत्येवं यत्तच्छब्दयोरभावाद्दीक्षितस्यापि मनुष्यत्वेन व्यतिरेकविधया मनुष्यसम्बन्धस्तुत्यर्थत्वेनोपादानायोगात् मनुष्यनेत्राञ्जनं लोके यतस्सव्यपूर्वं प्रसिद्धमतो दीक्षितस्य नेत्राञ्जनं वैदिककर्मकर्तृत्वाद्दक्षिणपूर्वकमेवेत्येवं व्यतिरेकविधयैव वामाभिधेयसव्यपूर्वकत्वस्य स्तुत्यर्थमुपादानान्मनुष्यनेत्राञ्जनमात्रे सव्यपूर्वकत्वस्य नित्यप्राप्त्यभाव इत्यर्थः ॥

[1] तै. सं २-६-३.

[2] अविद्यमानस्यैवाहार्यारोपणेत्यर्थ इति न युक्तं वेदे आरोपकपुरुषाभावात्। तस्मात् उत्प्रेक्षाविधया इत्यस्य गौण्या वृत्त्या इत्यर्थः ॥

[3] "यस्य पुरोडाशः क्षायति तं यज्ञं निर्ऋतिर्गृह्णाति तत्संस्थाप्यान्यद्वितस्तंद्देवत्यं निर्वपेत्" इत्यादिसामान्यवचने ॥

[4] तस्याः देवतायाः ॥ [5] तद्धितस्योपपत्तेः ॥

[6] अत्राधिकारे प्रयोजनं कृत्वा चिन्तात्वात् न वाच्यमिति व्याख्यातारः ॥

## (८)–अकर्म क्रतुसंयुक्तं संयोगान्नित्यानुवादस्स्यात् ॥ १८ ॥ विधिर्वा संयोगान्तरात् ॥ १९ ॥

**क्रतुसंयुक्तं** दर्शपूर्णमासप्रकरणाम्नातं **अकर्म** " नानृतं वदेत् "[1] इति निषेधः पुरुषार्थः **संयोगात्** पुरुषरूपकर्तृवाचकाख्यातसमभिव्याहारात् । कर्तुश्श्रुत्या उपस्थितौ तत्फलजनकताया एव कल्पयितुं युक्तत्वात् । यदि तु " नानृतं वदेत् "[1] इति स्मृत्यैव पुरुषार्थतया अनृतवदननिषेधस्य प्राप्तिराशङ्क्येत तदा श्रौतो निषेधोऽयं नित्यानुवादस्स्यात् ॥ १८

एवं पूर्वपक्षे सिद्धान्तमाह—श्रौतोऽयं निषेधः **विधिर्वा** विधिरेव नानुवादः **संयोगान्तरात्** विनियोगान्तररूपत्वात् । पुरुषार्थसंयोगपरात् स्मार्तनिषेधात् अन्य एव हि क्रत्वर्थसंयोगपरोऽयं निषेधः । अस्ति च पुरुषार्थमपि निषेधमतिक्रम्यानृतवदनेनापि क्रतुं साधयितुं प्रवृत्तस्य क्रतुमध्येऽप्यनृतप्रसक्तिः । तस्मात् प्रकरणात् क्रत्वर्थ एवायं निषेध इति ॥ १९ ॥

**तत्तत्क्रतुप्रकरणस्था विधिप्रतिषेधविशेषाः[2] " समिधो यजति "[3] " नानृतं वदेत "[1] इत्यादयः किं शुद्धपुरुषधर्माः उत क्रतुयुक्तपुरुषधर्माः उत शुद्धक्रतुधर्मा इति विचारः ।**

---

[1] तै. सं २-५-५.

[2] भाष्ये प्राकरणिकं प्रतिषेधमात्रमुदाहरणतयोपात्तम् । अर्वाचीनैस्तु कैश्चित् प्राकरणिकानां प्रतिषेधानां प्राधान्येन चिन्ताविषयत्वं प्राकरणिकानां विधीनां तु तदर्थचिन्ताविषयत्वमित्याहुः । तदिदं कटाक्षयन्, विधीनामप्यत्र प्राधान्येन चिन्ताविषयत्वमाविप्रतिपन्नं प्रतिषेधानामेव त्विहोदाहरणत्वं " यद्यपि " इत्यादिनाऽनुपदमाक्षिप्य समाधेयमित्याशयेन विधीन् प्रथम प्रतिषेधाननन्तरं चोदाहरति—विधीति । प्रकरणश्रुतिविरोधाविरोधाविचारत्वेन सङ्गत्युपपत्तये तत्तत्क्रतुप्रकरणस्था इति विशेषणम् ।

[3] तै. सं. २-६-१,

यद्यपि च प्रतिषेधस्य परोद्देशप्रवृत्तकृतिकारकत्वेन विधेयत्वरूपमङ्गत्वमेव दुर्वचम्[1]। प्रतिषेधपदार्थस्य निवर्तनाथा वदनानुकूलकृत्यभावस्य वा सम्बन्धान्तरेण कृत्यन्वयित्वेऽपि निमित्तादिवत्[2] कृतिकारकत्वाभावात्। उपकारकत्वव्याप्यस्याङ्गत्वस्य[3]व्यापकाभावेऽसम्भवाच्च। [4]प्रतिषेध्यवदनादेस्तु क्रत्वङ्गत्वपुरुषाङ्गत्वेऽविहितत्वादेव कृष्यादिवत् दूरापास्ते। अतोऽङ्गत्वासम्भवादेव तद्विशेषविचारासम्भवः।

तथाऽपि प्रतिषेधस्य पुरुषार्थत्वं [5]नाम पुरुषनिष्ठप्रत्यवायजनकक्रियाविषयत्वम्। क्रतुसम्बन्धिपुरुषगतायोग्यतासम्पादकक्रियाविषयत्वं च क्रतुयुक्तपुरुषधर्मत्वम्। क्रतुगतवैगुण्यापादकक्रियाविषयत्वं शुद्धक्रतुधर्मत्वम्, इदं च यत्र न प्रतिषेध्याक्रिया विशिष्य शास्त्रेण विहिता, यथा प्रकृतोदाहरणे। यत्र तु सा विशिष्य विहिता यथा षोडशिग्रहणादौ तत्र प्रतिषेध्यषोडशिग्रहणाभावेऽपि क्रतोः फल-

---

[1] स्वविषयकज्ञानजन्यानुमितिप्रयोज्याभावप्रतियोगित्वसंबन्धेन। (१-२-१) अधिकरणे स्पष्टमिदम्।

[2] निमित्तस्य कृतिनिरूपितमनुष्ठापकत्वमेव। आदिपदेन क्त्वाप्रत्ययायार्थस्य सङ्ग्रहः।

[3] (३-१-२) अधिकरणे स्पष्टमिदम्।

[4] यदर्था प्रतिषेध्यक्रिया तदर्थः प्रतिषेध इति वादं निरस्यति—प्रतिषेध्येति।

[5] चतुर्थाद्यद्वितीये वक्ष्यमाणं "स्वयंप्रार्थितवस्तुद्देश्यतानिरूपितविधेयताकत्वं पुरुषार्थत्वम्। स्वयंप्रार्थितभिन्नवस्तुद्देश्यतानिरूपितविधेयताकत्वं क्रत्वर्थत्वम्" इति लक्षणं तु नेहोक्ते। इह निषेध्यक्रियागतपुरुषार्थत्वद्वाराऽपि समर्थनीये निषेधगतपुरुषार्थत्वादौ तयोरनुपयोगात्।

जमकत्वमित्यस्यैव निषेधेनाक्षेपा[1] दुक्तविधार्थानुमापकत्वेनैव प्रतिषेधस्य क्रत्वङ्गतेति ध्येयम्[2] अत एव—गौणमुख्यसाधारण्येनाङ्गत्वमेवाध्यायार्थ इति न लक्षणासङ्गतिः।

तत्र सत्यपि भावार्थाधिकरणोक्तन्यायेन[3] भावनावाचित्वे आख्यातस्य कर्ताऽपि वाच्यः; एकत्वादिवत् ततस्तस्यापि प्रतीतेः, "कर्तरि कृत्" इत्येतत्सूत्रस्थकर्तरीत्येतदनुकर्षणार्थचकारयुक्तेन "लः कर्मणि च भावे चाकर्मकेभ्यः" इत्यनेन[4] कर्तृकर्मभावानामप्याख्यातार्थत्वस्मृतेश्च। चैत्रः पचतीति चैत्रादिपदसामानाधिकरण्या[5] च्चैवम्। स च "भावप्रधानमाख्यातम्" इति

---

[1] स्पष्टमिदं चतुर्थाद्वितीयेऽधिकरणे।

[2] तथा च षोडशिग्रहणानिषेधेन क्रत्वर्थत्वस्य क्रतूपकारजनकस्वाभावसहितेतराङ्गकक्रियाविषयत्वरूपस्य सम्भवेऽपि तस्य क्रत्वङ्गताऽनिश्चयादिहोदाहरणत्वासम्भवेऽपि अनृतवदननिषेधादीनां क्रतुगतवैगुण्यापादकक्रियाविषयत्वरूपस्य क्रत्वङ्गत्वस्य गौणस्य निश्चितत्वाद्भवत्येव तेषामिहोदाहरणतेति भावः।

[3] २-१-२.

[4] लकाराः सकर्मकेभ्यः कर्मणि कर्तरि च स्युः। अकर्मकेभ्यो भावे कर्तरि च इति तत्सूत्रार्थः।

[5] "युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः। अस्मद्युत्तमः। शेषे प्रथमः" । इत्यनेनाख्यातस्य उपपदसामानाधिकरण्यं बोध्यते। तत्पदसामानाधिकरण्यं च अभेदसम्बन्धेन तत्पदार्थान्वितस्वार्थबोधकत्वरूपं नीलो घट इत्यादौ दृष्टमिति सिद्धमाख्यातस्य कर्तृवाचकत्वमिति भावः।

स्मृत्या[1] एकत्वादिवदेव यद्यपि भावनां प्रति विशेषणत्वेनान्वीयते, तथाऽप्युपस्थितत्वात्तद्वाचकपदान्तरमात्रकल्पनया[2] तदुपकारस्यैव भावनायां भाव्यत्वेनान्वयो न तु कर्मणः विलम्बितप्रतीतिकत्वात् । इष्यते च गुणत्वेन प्रतीतस्यापि प्रयोजनाकाङ्क्षायां प्राधान्यं, यथा पशुपुरोडाशादौ देवतादेः[3] । विधिनिषेधाभ्यामपि स्वविषये तद्गतेष्टानिष्टसाधनत्वाक्षेपाच्चैवमेव युक्तम् । अतश्च विधिस्थले स्वर्गो निषेधस्थले च प्रत्यवाय एव क्रियाफलं समानाभिधानविधिश्रुतिभ्याम् । न तु क्रतूपकारः प्रकरणात्[4] । एवं च[5] यद्यप्याख्यातेन कर्ता नाभिधीयते तथाऽपि भावनयाऽऽक्षिप्तस्याख्यातेन लक्षितस्य च तस्यैवोपस्थितत्वात्तदर्थत्वकल्पनं न दोषः । अतश्च वैमृधवत्[6] प्रकरणबाधेन शुद्धपुरुषधर्मत्वावगतेः । तदा च अनृतवदनप्रतिषेधस्योपनयनप्रभृति[7] प्रवृत्तेस्स्मार्तानृतवदनप्रतिषेधस्या[8] पीदमेव मूलमिति प्रथमः पक्षः ।

---

[1] भावो भावना प्रधानं प्राधान्येन मुख्यविशेष्यतया प्रतिपाद्यं यस्य तादृशमाख्यातमिति यास्कवचनस्यार्थः ।

[2] वैमृधाधिकरणे उपस्थितत्वात्पदान्तरकल्पनं स्थितम् ।

[3] १०-१-९ अधिकरणे स्पष्टमिदम् ।

[4] श्रुतितः प्रकरणस्य दौर्बल्यं ३-३-७ अधिकरणे स्थितम् ।

[5] कर्तुराख्यातवाच्यत्वपक्षेऽपि उपस्थितकर्तृवाचकपदकल्पनालाघवस्यैव पुरुषार्थतासाधकमूलयुक्तित्वे चेत्यर्थः ।

[6] ४-३-११. अधिकरणे स्पष्टमिदम् ।

[7] "प्रागुपनयनात्कामचारकामवादकामभक्षाः" इति स्मृतेः सर्वेषां श्रौतस्मार्तनिषेधानामुपनयनप्रभृत्येव प्रवृत्तेः न प्रवृत्तिकालवैषम्यमूलिका मूलमूलिभावानुपपत्तिश्शङ्क्या ।

[8] "नानृतं वदेत्" इत्यादिस्मार्तोऽपि निषेधः ।

[1]द्वितीयस्तु—सत्यपि पुरुषप्राधान्यावगमे स्वर्गप्रत्यवायादिकल्पनापेक्षया क्रतुगतफलाधानयोग्यत्वायोग्यत्वरूपसंस्कारस्यैव प्रकरणावगतस्य श्रुत्यपेक्षितस्य कल्पनं युक्तम् । अतश्च अञ्जभ्यंमानमन्त्रवत्[2] एषां क्रतुयुक्तपुरुषधर्मत्वम् । तदा च

"प्रियं च नानृतं ब्रूयादेष धर्मस्सनातनः"

इति स्मृते[3] स्सनातनग्रहणेन सार्व[4]कालिकविषयत्वावगतेरेतन्मूलकत्वासम्भवेन मूलान्तरस्यावश्यकत्वात्सर्वदा चानृतं वर्जयतः क्रतावनृतप्रसक्त्यभावादनुवाद एवायम् । अस्तु वा—पुरुषार्थप्रतिषेधेन पुरुषस्यानृतवदने प्रत्यवायबोधनेऽपि क्रतुवैगुण्याद्यापत्तौ प्रमाणाभावात् यः प्रत्यवायं सोढ्वाऽपि क्रतुं सगुणं कर्तुमिच्छेत् तस्य 'व्रीहिभिर्यक्ष्ये' इत्युक्त्वा सम्भवत्येव यवैर्यागेऽनृतप्रसक्तिरिति क्रतुप्रकरणगतस्यापि निषेधस्य विधायकत्वम्[5] । अतश्चैतदतिक्रमे श्रौतप्रायश्चित्तप्राप्तिश्च[6] फलमिति प्राप्ते—

सत्यं नानुवादः । क्रतुयुक्तपुरुषधर्मत्वे तु न किञ्चित्प्रमाणमस्ति । यद्यपि तावत्क्रतौ वाच्यस्सत्यात् तथाऽपि तस्य

---

[1] सूत्रस्थनित्यानुवादपदानुरोधेन पक्षान्तरमाह।

[2] अग्निमाधिकरण एवेदं स्पष्टम् ।

[3] "सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम्" । इत्यस्याः पूर्वार्धम् ।

[4] सर्वपदेनोपनयनपूर्वकालोपि गृहीतः । एतत्स्मृत्युदाहरणं च "न संशयं प्रपद्येत नाकस्मादप्रियं वदेत् । नाहितं नानृतं चैव न स्तेनस्स्यान्न वार्धुषिः" इत्यादिस्मृतीनामप्युपलक्षणम् ।

[5] इदं च क्रतुयुक्तपुरुषधर्मत्वपक्षमाश्रित्य । शुद्धपुरुषधर्मत्वे विधित्वस्य प्रथममेवोक्तत्वात् ।

[6] ३-४-३. अधिकरणे टिप्पण्यामिदं द्रष्टव्यम् ।

वक्ष्यमाणरीत्या गुणत्वेनैवोपात्तानाम्न तावच्छब्दत एव प्राधान्यम्। नापि पदान्तरकल्पनया वैमृधादिवत्[1] । कर्तुः प्रयोजनवत्त्वसिद्ध्यर्थमवश्यं प्रकरणालोचने क्रियमाणे क्रतोरुपस्थितत्वेन तत्साद्गुण्यवैगुण्यपरिहारयोरेव प्रवर्ग्यन्यायेन[2] कल्पयितुं युक्तत्वात्। अत एव—यत्र पशुपुरोडाशादौ उद्देशांशस्य दृष्टविधया देवतासंस्कारकत्वान्नादृष्टोपकारकल्पना तत्र सन्निपत्योपकारकत्वलाभाय परम्पराङ्गीकरणमप्यदोषः[3] । जञ्जभ्यमानमन्त्रे तु वक्ष्यते[4] । प्रकृते तु समिदादेः प्रकृतापूर्वसाधनीभूतपुरुषोद्देशेन प्रकृतक्रतुफलाधानयोग्यतासम्पादकतया विधाने गौरवापत्तेर्लाघवा[5]त्प्रकृतापूर्वसाधनक्रतुगतसाद्गुण्यसम्पादकत्वमेव समिदादीनाम् । अनृतवचनस्य च तद्गतवैगुण्यसम्पादकत्वम् । अतः शुद्धक्रतुधर्मत्वमेव कर्तुर्वाच्यत्वपक्षेऽपि युक्तम् ।

वस्तुतस्तु—न तस्य वाच्यत्वम् । प्रतीतेरन्यथाऽप्युपपत्तेः । तथाहि—आख्यातात्तावत् कर्ता कृतिरेकत्वादिकं प्रतीयत इत्यविवादम् । तत्रानेकार्थबोधकपदे सर्वत्रैव एकत्र शक्तिरपरत्राक्षेपादीत्यपि तथैव । इतरथाऽनेकशक्तिकल्पनापत्तेः । तत्र च नियामकापेक्षायां प्रधानेन गुणभूतस्य लोके आक्षेपदर्शनात् प्रा-

[1] ४-३-११.

[2] ३-३-१२. "पुरस्तादुपसदां प्रवर्ग्येण प्रवृणक्ति" (तै. आ ८-६०) इत्यत्र उपसदां स्ववक्ये श्रुतत्वेऽपि तासां फलवत्त्वाय प्रकरणपर्यालोचनेनोपस्थितक्रत्वर्थत्वमेव प्रवर्ग्यस्येति स्थितम् ।

[3] १०-१-९.

[4] ३-४-९.

[5] प्रकृतापूर्वसाधनीभूतपुरुषगतप्रकृतक्रतुफलाधानयोग्यतापेक्षया प्रकृतक्रतूपकारस्य लघुशरीरत्वादस्यैव फलत्वमिति भावः ।

धान्यं तावन्नियामकम् । तच्च[1] यथा "सत्त्वप्रधानानि नामानि[2]" इत्यनया स्मृत्या कृदन्तादिनामसु सत्त्वरूपस्य कर्तुरेव प्राधान्यावगमाद्वाच्यत्वं; न कृतेः लक्षणादिनाऽपि तत्प्रतीत्युपपत्तेः, एव[3]माख्याते, "भावप्रधानमाख्यातम्" इति स्मृत्या भावनाया एव प्राधान्याद्वाच्यत्वं; नाश्रयस्य कर्तृकर्मादेः लक्षणयाऽपि तत्प्रतीतेः । अत एव यत्र न किञ्चित्प्राधान्यनियामकं तत्रैव घटत्वादौ नागृहीतविशेषणान्याय इत्यादि कौस्तुभे[4] स्पष्टम् । यत्र तु नैकत्वादौ व्यभिचारा[5]दाक्षेपः तत्रातिरिक्तैव शक्तिः, न तु कर्त्रादौ[6] ।

या तु स्मृतिस्तत्र प्राञ्चः[7]—"द्व्येकयोर्द्विवचनैकवचने, बहुषु बहुवचनम्" इति सङ्ख्याशास्त्रेण "लः कर्मणि" इत्यादेरेकवाक्यता । अत्र हि "द्व्येकयोः" इत्यत्र भावप्रधानो निर्देशः, द्वित्वैकत्वयोरित्यर्थः । अन्यथा द्व्येकेष्विति बहुवचनापत्तेः । तथा च कर्त्रादौ वर्तमानेषु एकत्वादिषु लकारादेशभूतातिबाद्येकवचनादीनि भवन्तीति सूत्रद्वयार्थः ; न तु कर्त्रादौ लकारश्शक्त इति । न चैवं कर्त्रादेरनभिहितत्वात्तत्र तृतीयाद्यापत्तिः ; शक्त्याऽनभिधानेऽपि लक्षणयाऽभिधानादिति ।

---

[1] तच्च तश्चेत्यर्थः । प्राधान्यस्यैव वाच्यतानियामकत्वादिति यावत् ।

[2] सत्त्वं द्रव्यं प्रधानं विशेष्यतया प्रतिपाद्यं येषां तानि सत्त्वप्रधानानि ।

[3] एवं तथेत्यर्थः । "तच्च यथा" इत्युपक्रमानुसारात् ।

[4] भावार्थाधिकरणे २-१-२.

[5] भावनाया एकद्विबहुकर्तृसाधारण्यादिति भावः ।

[6] तथा च लक्ष्यं कर्तृकर्मादिकमादायैवाख्यातसामानाधिकरण्योपपत्तिरिति न सामानाधिकरण्यस्य कर्तृवाचकतायां साधकत्वम् ।

[7] प्राञ्चः भाष्यकारप्रभृतयः पार्थसारथिमिश्रपर्यन्ताः ।

[1]अत्रानभिहितत्वं अभिहितत्वाभावः । तच्चाभिहितत्वं न तिङादिवाच्यत्वं तत्प्रतिपाद्यत्वमात्रं वा—तथात्वे "पाचकेन गम्यते" "चैत्रेण भुक्त्वा गम्यते" इत्यादौ तृतीयाद्यनापत्तेः; कृत्प्रत्ययेन[2] कर्तुरुपात्तत्वात्, क्त्वाप्रत्ययेन समानकर्तृकत्वोक्त्या कर्तुरुपादानाच्च । नाप्यभिहितसङ्ख्याकत्वम्—चैत्रेण पक्व इतिवत् चैत्रेण पाचक इति प्रयोगापत्तेः[3] । सूत्रे लक्षणापत्तेश्च[4] ।

विषवृक्षोपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम् ।

इति निपातेन युज्यत इति क्रियाभिधायकेन सङ्ख्यानभिधानात् वृक्षमिति द्वितीयापत्तेश्च । अपि तु—यद्वृत्तिकारकत्वं स्वान्वयिक्रियाप्रतिपादकेन पदेन वृत्त्या प्रतिपाद्यते तत्त्वम् । अस्ति चेदं "चैत्रः पचति" "ओदनः पच्यते" इत्यादौ[5], चैत्रादिवृत्तिकर्तृत्वकर्मत्वादेर्निरुक्तपदेन प्रतिपादनात् । "पाचकेन गम्यते" इत्यादौ च कृदुपात्तस्य पुरुषस्य गमनक्रियैवान्वयिनी, न तु पाकक्रिया, तस्या एव तस्मिन्नन्वयात्, तद्वृत्ति च कारकत्वं न कर्माख्यातेनाभिहितमिति युक्तैव तत्र तृतीया । एवं चैत्रेणेत्यस्य भुजिक्रियायामनन्वयात् गमनक्रियायामेवान्वयाङ्गीकारात्तृतीयोपपत्तिः । "मयैव पक्त्वा मयैव भुज्यते" इत्यत्र तु पक्त्वा

---

[1] एवं प्राचां मतमनुपन्यस्य तत्र प्रसक्तमनभिहितत्वं स्वयं निष्कर्षयति ॥

[2] पाचकपदगतेन ण्वुला ।

[3] कृतां सङ्ख्याऽनभिधायकत्वादिति भावः ।

[4] "कर्तृकरणयोस्तृतीया" इत्यादावनभिहितायां कर्तृसङ्ख्यायामित्याद्यर्थाङ्गीकारे कर्त्रादिपदस्य कर्तृगतसङ्ख्यादिपरत्वं लक्षणयैव वाच्यमिति भावः ।

[5] कर्तृकर्मणोः चैत्रौदनयोरिति शेषः ।

इत्यनेन कर्तुरुपात्तत्वान्न कर्तरि "मया" इत्यादितृतीया । अपि तु "आत्मानमात्मना वेत्सि" "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इत्यादिवत् करणे इति न काचिदनुपपत्तिः । पक्त्वौदनो भुज्यत इत्यादौ तु पचधातोः कर्माकांक्षायां द्वितीयान्तौदनपदाध्याहारेण वाक्यपूरणम्[1] । न हि प्रधानक्रियायामुक्तस्य कारकस्य गुणभूतक्रियायामप्युक्तिरिति नियमे प्रमाणमस्ति, येनाध्याहारं विनाऽपि वाक्यं[2] समर्थ्येत । तथात्वे "ओदनं भुक्त्वा शास्त्रं पठ्यते."

[3]श्रुत्वाऽप्यर्थं नानुमतस्तेन सोऽर्थः कुबुद्धिना ।

इत्यादिद्वितीयाप्रयोगानुपपत्तेः । यदि तु—उक्तप्रयोगेष्वनाश्वासः । "मयैव पक्त्वा मयैव भुज्यते" इत्यत्र च कर्तर्येवाधा तृतीया । पक्त्वौदनो भुज्यत इत्यत्र नाध्याहाराङ्गीकरणम् । तथा—उक्तनियममङ्गीकृत्य क्त्वाप्रत्ययस्यापि च भाव एव शक्तिमङ्गीकृत्य तदर्थस्य भावस्य पूर्वकालत्वसमानकर्तृकत्वसंसर्गेणोत्तरक्रियायामन्वयोऽङ्गीक्रियते । तदाऽस्तु यद्वृत्तिकारकत्वं स्वान्वयिप्रधानक्रियाप्रतिपादकेन पदेन वृत्त्या प्रतिपाद्यते तत्त्वमभिहितत्वं तदभावोऽनभिहितत्वं, तत्र तृतीया इति संक्षेपः ॥

---

[1] तथाचाध्याहृतौदनपदार्थस्यैव पक्त्वेत्यत्रान्वयात्प्रथमान्तौदनपदप्रतिपाद्यौदनवृत्तिकर्मत्वस्य भुजिक्रियायामेवान्वयान्न पचिक्रिया स्वान्वयिनीत्याशयः ।

[2] पक्त्वौदन इत्यादिकम् ।

[3] प्रधानगुणनिरूपितक्रिययोरेकवस्तुगतत्व एवोक्तनियम इत्युक्तावप्युदाहरणान्तरेऽनुपपत्तिमाह—श्रुत्वेति ।

अत्र[1]वदन्ति—एवं सति ल इति षष्ठ्यन्तं तिबाद्यन्वितं वाच्यं प्रथमान्तस्यानन्वयात् । अतश्च "लस्य" इति सूत्रवैयर्थ्योपपत्तिः । लादेशभूतशानजादेः कर्त्रादिवाचित्वानुपपत्तिश्च । न च "कर्तरि कृत्" इत्यनेन तद्वाचित्वम् । तथात्वेऽपि कर्मणि भावे चाकर्मकेभ्यस्तत्प्राप्तेस्सूत्रान्तराविषयत्वात् । अत एवं परिहर्तव्यम्—ल इति प्रथमान्तं कर्त्रादावेवान्वेति । न त्वेतावता तस्य वाच्यत्वम् । लाघवेन वृत्त्या तद्गम्यत्वस्यैव शास्त्रतात्पर्यविषयत्वेन शक्त्यंशे तद्व्यापाराकल्पनात् । सा तु प्राधान्यं विनैव सिद्ध्यतीति सिद्धमाख्याते कर्त्रादेरवाच्यत्वम्, शानजादौ च वाच्यत्वमिति, 'लस्य' इति सूत्रस्य च तिबादीनां लादेशत्वविधायकस्य न वैयर्थ्यम् ।

अतः कर्तुरवाच्यत्वाद्वाच्यत्वेऽपि वा प्राधान्यस्य दूरभ्रष्टत्वान्न क्रतुयुक्तपुरुषधर्मत्वम् । एतेन लक्षणया तस्योपस्थितत्वादेव तत्कल्पनेति निरस्तम् ॥

प्रयोजनं त्वाद्यपक्षे स्मार्ते प्रायश्चित्तम् । क्रतुयुक्तपुरुषधर्मत्वे फलिसंस्कारकत्वाद्यजमानेनैव[2] विधिप्रतिषेधार्थसम्पादनं ; न तु समाख्ययाऽध्वर्युनियमः । शुद्धक्रतुधर्मत्वे तु विधिषु सति सम्भवे[3] तया नियमः । निषेधेषु तु तस्या नियामकत्वासम्भवात्कर्तृमात्रेण वर्जयितव्यमिति[4] ॥ ८ ॥

---

[1] एवं प्राचीनमीमांसकोक्ते "लः कर्मणि" इति सूत्रार्थे मनोरमाकारादिनवीनवैयाकरणोक्तदूषणमुपन्यस्य स्वयं प्रकारान्तरेण तत्सूत्रार्थमाह—अत्र वदन्तीत्यादिना ।

[2] फलिसंस्काराणां याजमानत्वं ३-८-२. अधिकरणे द्रष्टव्यम् ।

[3] तत्तद्यजमानादिप्रापकसमाख्यादिप्रमाणान्तरसत्त्वे तु सत्यप्याध्वर्यवकाण्डपठितत्वे नाध्वर्युनियमः । तदभावे तु तया समाख्ययाऽध्वर्युनियम इत्यर्थः ।

[4] निषेधस्यानुष्ठेयत्वाभावात् गुणभूतत्वेन कर्त्रनपेक्षणात् समाख्याया निया-

## (९)–अहीनवत्पुरुषधर्मस्तदर्थत्वात् ॥ २० ॥ प्रकरणविशेषाद्वा तद्युक्तस्य संस्कारो द्रव्यवत् ॥ २१ ॥ व्यपदेशादपकृष्येत ॥ २२

"जञ्जभ्यमानोऽनुब्रूयान्मयि दक्षक्रतू इति"[1] इति वाक्ये दर्शपूर्णमासप्रकरणाम्नाते विधीयमानो मन्त्रपाठः **पुरुषधर्मः** पुरुषार्थः जञ्जभ्यमान इति शानचः **तदर्थत्वात्** पुरुषवाचकत्वात् । **अहीनवत्** यथा "द्वादशाहीनस्य"[2] इति वाक्ये विधीयमानं द्वादशोपसत्त्वं अहीनवाचिपदश्रवणात् प्रकरणमपि बाधित्वा अहीनार्थमित्यवगम्यते तथा इहापि पुरुषवाचकशानचश्श्रवणात् प्रकरणं बाधित्वा पुरुषार्थ एव मन्त्रपाठ इति युक्तमाश्रयितुमिति ॥ २० ॥ एवं पूर्वपक्षे सिद्धान्तमाह—**तद्युक्तस्य वा** प्रकृतदर्शपूर्णमासरूपक्रतुयुक्तस्य पुरुषस्य **संस्कार** एव स मन्त्रपाठः न तु केवलपुरुषधर्मः कुतः **प्रकरणविशेषात्** प्रकरणविशेषानुग्रहात् । **द्रव्यवत्** यथा "व्रीहीन् प्रोक्षति" इत्यत्र प्रकृतक्रतुसम्बन्धिव्रीहीणामेव ग्रहणं न पुनर्व्रीहिसामान्यस्य प्रकरणानुग्रहानुरोधात् तद्वत् । अन्यथा हि प्रकरणबाधस्स्यात् । न चैतद्युक्तं अबाधे सम्भवति बाधकल्पनायोगात् ॥ २१॥ यत्र तु प्रकरणस्य अबाधोऽसम्भवी तत्र तस्य बाधोऽप्यगत्याऽङ्गीक्रियत इत्याह—**व्यपदेशात्** "तिस्र एव साह्नस्योपसदो द्वादशाहीनस्य"[2] इत्यत्र अप्रकृतस्य अहीनक्रतोः अहीनशब्देनोपादानात् द्वादशोपसत्त्वं ज्योतिष्टोमप्रकरणात् **अपकृष्येत** विच्छिद्य अहीने अप्रकृते निवेश्येत । अहीनशब्दस्य प्रकृतज्योतिष्टोमपरत्वाङ्गीकारे गौणत्वापत्तिः । अतोऽत्र प्रकरणस्याबाधायोगात् बाध एवागत्या स्वीक्रियते । प्रकृते तु न तथेति ॥ २२॥

---

मकत्वानुपपत्तेर्यत्रैव प्राप्तिः क्रतावनृतस्य तत्रैव निषेधकरणाद्यजमानस्य र्त्विजां च तत्प्राप्तेस्सर्वैः क्रतुसंबन्धिभिः कर्तृभिर्निषेधपरिपालनं कर्तव्यमित्याशयः । [1]तै. सं. २-५-२. [2]तै. सं. ६-२-५.

ज्योतिष्टोमे "तीर्थे स्नाति तीर्थमेव समाना(जाता)नां भवति"[1] इत्यत्र तीर्थस्नानस्य प्रकरणादेव पूर्ववदारादुपकारकत्वं प्राप्तं पशुपुरोडाशन्यायेन[2] दृष्टरूपमलापाकरणार्थत्वालिङ्गेन बाधित्वा क्रतुयुक्तपुरुषधर्मत्वम् । "अप्सु दीक्षातपसी प्रावेशयन्"[1] इत्यर्थवादे अप्सु दीक्षावत्त्वसङ्कीर्तनात् दीक्षायाश्च यमनियमपरिग्रहरूपायाः पुरुषसंस्कारकत्वस्य "गृहपतिं दीक्षयंति" इत्यादिना स्पष्टत्वादपि स्नानस्य क्रतुयुक्तपुरुषधर्मत्वम् । अत एव—कर्तृत्वांशे वैयर्थ्यादनुपयोगेऽपि फलाधानांशे उपयोगकल्पनादस्य याजमानत्वमिति । स्पष्टत्वादेवेदं मूले उदाहृतमपि न विचार्यते ।

दर्शपूर्णमासयोस्तु "जञ्जभ्यमानो(ऽनु)ब्रूयात् मयि दक्षक्रतू इति प्राणापानावेवात्मन्धत्ते"[4] इति श्रुतो मन्त्रपाठः किं शुद्धक्रतुधर्मः? उत शुद्धपुरुषधर्मः? आहोस्वित् क्रतुयुक्तपुरुषधर्म इति चिन्तायां—पूर्ववत्पुरुषस्य शानजुपात्तस्यापि सर्वप्रधानभूतायां भावनायां चैत्रादिवद्विशेषणत्वेनोपादानात्प्रवर्ग्यन्यायेन[5] प्राधान्यकल्पनाऽनुपपत्तेः "लक्षणहेत्वोः क्रियायाः" इत्यनेनानुवचनक्रियायां लक्षणत्वेनावगतस्य जृम्भणस्य भाव्यत्वादिना लक्षणत्वायोगान्निमित्तत्वप्रतीतेर्जृम्भायां निमित्तेऽनुवचनं भेदनहोमवदारादुपकारकम् । शानजुपात्तकर्ता तु अर्थप्राप्तत्वादनुवादः । वस्तुतस्तु—अनुवचनस्यारादुपकारकत्वे समाख्यया आध्वर्यवत्वापत्तेर्यजमानान्यपुरुषजृम्भायामपि तत्कर्तृकमन्त्रपाठापत्तेः शानजुक्तजृम्भाकर्तृकर्तृकत्वानुवादानुपपत्तेरवश्यं जृम्भायाः पुरुषविशेषणत्वमङ्गीकृत्य जञ्जभ्यमानकर्तृविशिष्टमनुवचनमेवाध्वर्यवं विधीयते आरादुपका-

---

[1] तै. सं. ६-१-१. [2] (३-४-८) अधिकरणे स्पष्टम्.
[3] (१०-१-९) अधिकरणे स्पष्टम्. [4] तै. सं. २-५-२.
[5] (३-३-१२) अधिकरणे स्पष्टम्.

रकत्वेन। ततश्च जृम्भायाः क्रियां प्रति निमित्तत्वेनान्वयायोगादार्थिकमेवास्याः वषट्कारादिवन्निमित्तत्वमिति प्रथमः पक्षः॥

द्वितीयस्तु–जञ्जभ्यमानस्य कर्तृत्वेनानुवचनं प्रति गुणत्वाङ्गीकारे गुणानुरोधेन प्रधानभूतानुवचनस्य क्रतौ पाक्षिकत्वापत्तेः जञ्जभ्यमानस्य क्रियां प्रति शब्दतो विशेषणस्यापि स्वर्गादिवदेव प्राधान्यम्। तदा हि–प्रधानानुरोधेन पाक्षिकत्वेऽपि न दोषः। यद्यपि च तिङभिहितकारकत्वमेव प्रथमार्थः न तु संस्कार्यत्वम्। तथाऽपि कर्तृत्वस्य फलसमानाधिकरणत्वतद्व्यधिकरणत्ववैशिष्ट्यभेदेन भिन्नत्वात् उक्तयुक्त्येह फलसमानाधिकरणकर्तृत्वस्यैव प्रथमार्थत्वात् फलभोक्तृत्वरूपसंस्कार्यत्वसिद्धिरविकलैव। एतदभिप्रायेणैव कौस्तुभे अधिकारित्वस्य प्रथमार्थत्वोक्तिरिति ध्येयम्। अतो जञ्जभ्यमानोद्देशेनानुवचनाविधानात्प्रकरणानुरोधेन च वाक्यसङ्कोचे प्रमाणाभावाच्छुद्धपुरुषधर्मत्वम्। न च फलकल्पना। प्राणापानधारणरूपस्य फलस्य स्ववाक्य एव क्लृप्तत्वेन तदभावात्। यद्यपि चायमर्थवादस्सन्नात्। तथाऽपि प्रकरणावगतक्रतूपकारापेक्षयाऽस्यैव स्ववाक्योपस्थितस्य तद्वाचकपदान्तरकल्पनया फलत्वस्यौचित्याच्च। अतश्शुद्धपुरुषधर्मत्वमिति प्राप्ते—

न तावत् फलं क्लृप्तम्। धत्त इति वर्तमानत्वनिर्देशेन योग्यानुपलब्धिबाधितत्वात्। अतोऽस्य स्तुत्यर्थत्वेनैवान्वयमङ्गीकृत्य फलापेक्षायां कामपदयुक्तपदान्तरकल्पनयाऽस्यैव वा भविष्यदर्थकत्वकल्पनया फलपरत्वं परिकल्प्य तस्य कथञ्चिज्जञ्जभ्यमानकर्तृभोग्यत्वं वाच्यं, तथा सति फलं तज्जनकत्वं तद्व्यापाररूपापूर्वकल्पनं चेत्यनेककल्पनातो वरं प्रकरणानुरोधेन क्लृप्तक्रतुफलाधानयोग्यताजनकत्वमात्रं क्रत्वपेक्षितत्वात्कल्पयितुमुचितमिति क्रतुयुक्तपुरुषधर्म एवायम्।

फलाधानयोग्यतासम्पादकत्वाच्च याजमान इति प्रयोजनम्॥९

## (१०)—शंयौ च सर्वपरिदानात् ॥ २३ ॥

अत्र "अहीनवत्" इति पूर्वसूत्राध्याहृतस्य अपकृष्येतेति पदस्यानुषङ्गः । मण्डूकप्लुत्या च व्यवहितस्यापि कर्त्रधिकरणपूर्वपक्षसूत्रस्थस्य अकर्मपदस्यानुषङ्गः । तथा च **शंयौ च** "देवा वै शंयुं बार्हस्पत्यमब्रुवन् हव्यं नो वहेति सोऽब्रवीत् वरं वृणै किं मे प्रजाया इति तेऽब्रुवन् यो ब्राह्मणायावगुरेत् तं शतेन यातयात्तस्मान्न ब्राह्मणायावगुरेत्"[1] इत्यस्मिन् शंयूपक्रमे दर्शपूर्णमासप्रकरणाम्नाते वाक्ये यत् अकर्म निषेधकं दण्डोद्यमनादिरूपावगूरणादिप्रतिषेधात्मकं तत्तु शुद्धपुरुषधर्मः प्रकरणादपकृष्येत कुतः **सर्वपरिदानात्** सर्वावस्थस्य दर्शपूर्णमासकर्तृत्वावस्थानपेक्षस्य पुंसो नरकपरिहारार्थं ब्राह्मणावगूरणादीनां दानात् खण्डनात् प्रतिषेधबोधनात् । अथवा—प्रजात्वेन सङ्कीर्तितब्राह्मणमात्रस्यैव परिपालनं यच्छंयुना प्रार्थितं तस्यैव देवैर्दानात् सर्वब्राह्मणविषयकावगोरणनिषेधस्य प्रकरणेन सङ्कोचायोगादिति ॥ २३ ॥

**अत एव[2] दर्शपूर्णमासयोः "देवा वै शंयुं बार्हस्पत्यमब्रुवन् हव्यं नो वहेति सोऽब्रवीत् वरं वृणै किं मे प्रजाया इति तेऽब्रुवन् यो ब्राह्मणायावगुरेत् तं शतेन यातयात् तस्मान्न ब्राह्मणायावगुरेत्"[1] इति श्रुतो दण्डोद्यमनादिरूपावगोरणप्रतिषेधोपि शुद्धपुरुषार्थ एव यातनारूपस्य फलस्य क्लृप्तत्वेन प्रकरणेन वाक्यसङ्कोचायोगात् । अत्र ह्याशिषिलिङ् प्रवर्तनाया बाधात् । आख्यातार्थोऽपि लक्षणया भोगरूपानुभवो निस्तारो वा । तमिति द्वितीयार्थो विषयत्वम् । तथाचावगोरणकर्तृविषये शतगुणं यातनानुभवः शतसंवत्सरेण वा तन्निस्तारो भवत्वित्यर्थः ।**

---

[1] तै. सं. २-६-१०.

[2] पूर्वाधिकरणप्रत्युदाहरणत्वमस्याधिकरणस्य स्पष्टयितुं पूर्वपक्षमनुपन्यस्यैव सिद्धान्तमाह—अत एवेति फलश्रवणस्य क्लृप्तत्वादेवेत्यर्थः ॥

वस्तुतस्तु — आख्यातार्थोऽनुभावनादि,[1] लिङर्थोऽनुकूलव्यापार एव। तथा च तं प्रति भवान् शंयुरनुभावयेदित्यर्थः । अत्र च लिङुपादानेन पूर्ववद्वर्तमानत्वाप्रतीतेर्यातनायास्साध्यत्वावगमान्निषेध्यफलं कामपदाद्यभावेऽपि क्लृप्तम् । अतश्शुद्धपुरुषधर्म इति प्रत्युदाहरणमात्रम् । अत एव[2] सामान्येन शंयोर्वरदानमपि सङ्गच्छते । पुरुषधर्मत्वं च पुरुषनिष्ठफलजनकक्रियाविषयत्वमात्रं; न तु पुरुषस्य संस्कार्यतया शेषित्वं प्रमाणाभावादिति ध्येयम् । न च क्रतावपगोरणप्राप्त्यभावादेवास्योत्कर्षासिद्धेर्न प्रत्युदाहरणत्वमिति वाच्यं, अन्वाहार्येणानत्यसम्भवे तस्यापि तदर्थं प्राप्तेः। क्रतूपकारकतया प्राप्त्यभावेऽपि "न स्त्रियमुपेयात्"* इतिवत् क्रतुमध्यप्रसक्तप्रतिषेधस्यापि क्रत्वङ्गत्वोपपत्तेश्च । अतश्च फलस्य क्लृप्तत्वादेव पुरुषधर्मत्वम् । अत्र चार्थवादोन्नीतस्य पदान्तरस्य फलपरत्वं अस्यैव स्वर्गादिवद्वा तत्परत्वमित्यादि तु स्वयमूह्यम्[3] ॥ १० ॥

---

[1] यातनानुभवजनकं यातनासंयोगादिरूपमनुभावनमवगोरणकर्तृनिष्ठं आख्यातार्थः तदनुकूलव्यापारश्शंयुनिष्ठो लिङर्थ इत्यर्थः ॥

[2] क्रतुयुक्तपुरुषापेक्षितभोक्तृत्वयोग्यताधानाख्यफलनिरासेन पुरुषमात्रापेक्षितनरकपरिहाराख्यफलोक्त्यर्थत्वादित्यर्थः ॥ * तै. सं. २-६-६.

[3] सम्पूर्णस्य पूर्वतनभागस्यावगोरणादिनिन्दार्थत्वेन फलप्रतिपादनाशक्तेरुपस्थितस्य यो यातनामनुभवितुमिच्छेत्स ब्राह्मणमवगुरेत हन्याद्वा इत्येवंरूपपदान्तरकल्पनया तस्यास्तत्फलत्वम् । अथवा – आशीरर्थलिङाश्रयणेनाव्यवधानादेवैतदेव वाक्यं निषेध्यफलयातनाबोधकं अन्यत्तु तदुपष्टम्भकमिति । आदिपदेन प्राप्तं प्रयोजनं च स्वयमूह्यमित्यर्थः । प्रयोजनं च तत् पूर्वपक्षे ऋत्विजः अनृत्विजो वा ब्राह्मणमात्रस्य

## (११)—प्रागपरोधान्मलवद्वाससः ॥ २४ ॥

## अन्नप्रतिषेधाच्च ॥ २५ ॥

**मलवद्वाससः** "मलवद्वाससा न संवदेत"* इत्यत्र दर्शपूर्णमासप्रकरणे श्रुतः मलवद्वाससा रजस्वलया सह संवादस्य प्रतिषेधः पुरुषार्थ एव न क्रत्वर्थः । कुतः रजस्वलायाः **प्रागपरोधात्** "यस्य व्रत्येऽहन्पत्न्यनालम्भुका स्यात्तामपरुध्य यजेत"† इत्यनेन क्रतुप्रयोगात्प्रागेव क्रतुप्रयोगबहिष्करणरूपस्यापरोधस्य विधानात् । क्रतुप्रयोगमध्ये तया सह संवादस्याप्रसक्ततया तन्निषेधस्य क्रत्वर्थत्वायोगात् ॥ २४ ॥ **अन्नप्रतिषेधाच्च** "नास्या अन्नमद्यात्, अभ्यञ्जनं वाव स्त्रिया अन्नम्"* इत्यनेन तत्प्रकरणस्थेन वाक्येन रजस्वलाया मिथुनीभावापरपर्यायस्यान्नस्य निषेधादपि संवादप्रतिषेधोऽयं पुरुषार्थः । लाटानां हि अभ्यञ्जनापरपर्यायान्तरवाच्यलक्षणं मिथुनभवनं प्रसिद्धम् । तच्च न कदाचिच्छब्दादर्थाद्वा क्रत्वर्थे प्रसक्तम् । पुरुषार्थे तु सर्वप्राणिसिद्धम् । अतस्तन्निषेधोऽपि पुरुषार्थ इति तत्साहचर्यात् संवादप्रतिषेधोप्ययं पुरुषार्थः ॥ २५ ॥

**दर्शपूर्णमासयोरेव "मलवद्वाससा न संवदेत" *इति श्रुतम् । मलवद्वासाः रजस्वला । अस्य प्रतिषेधस्य फलाश्रवणात् क्रत्वङ्गत्वे नानुपपत्तिः । न च "यस्य व्रत्येऽहन्पत्न्यनालम्भुका स्यात्तामपरुध्य यजेत"† इति वचनेनैवानालम्भुकापदवाच्यरजस्वलाऽपरोधोत्तरं क्त्वाप्रत्ययेन यागप्रयोगकर्तव्यताविधानात्क्रत्वङ्गभूतस्य लौकिकस्य च याजमानस्यार्त्विज्यस्य वा रजस्वलासंवा-**

---

क्रतुमध्येऽवगोरणे सति 'यदि यजुष्टो भवः' इति श्रौतं निषेधातिक्रमप्रायश्चित्तं स्मार्तमपि तदन्ते । सिद्धान्ते तु स्मार्तावगोरणादिनिषेधस्यैतच्छ्रुतिमूलकत्वाभ्युपगमन स्वयज्ञाङ्गत्वाभावान्न श्रौतम्, अपि तु "विप्रदण्डोद्यमे कृच्छ्रः" इति स्मृत्युक्तमेव क्रत्वन्ते इति ज्ञेयम् ॥

* तै. सं. २-५-१. † तै. ब्रा. ३-७-१.

दस्याप्रसक्तेः कथं प्रतिषेध इति वाच्यं अन्यस्याप्रसक्तावपि साधारणद्रव्यतया व्रीह्याद्यंशेऽनुमतिरूपस्य तस्य प्रसक्तेः। अनुमतेरपि परंपरया ज्ञातुं शक्यत्वेन संवादाप्रसक्तौ तु पत्न्यातिरिक्तरजस्वलान्तरसंवादस्य क्रतुमध्ये[1]रागतः प्राप्तस्यापरोधवाक्याविषयस्य स्मृतौ निषिद्धस्यापि क्रत्वर्थतया प्रतिषेधो ऽनृतवदनप्रतिषेधवदिति प्राप्ते—

मनुना "रजस्वला च षण्डश्च" इत्यादि प्रक्रम्य

होमे प्रदाने भोज्ये च यदेभिरभिवीक्ष्यते।
दैवे हविषि पित्र्ये वा तद्गच्छत्ययथायथम्॥

इत्युक्त्वा "तानप्यपनयेत्ततः" इत्यनेन रजस्वलामात्रस्य दैवकर्ममात्रे वाक्येन श्राद्धप्रकरणं बाधित्वाऽपनयविधानात्तया सह संवादाप्रसक्तेर्न क्रत्वर्थत्वम्। न चेयमेव श्रुतिस्तस्या मूलम्। स्मृतेर्दैवकर्ममात्रविषयत्वेन सामान्यरूपत्वात्। न च रजस्वलामात्रस्यापनयेऽपरोधवाक्यवैयर्थ्यं अपरोधवाक्यस्य पत्न्या सहैव पत्युरधिकारात् रजस्वलायाश्चानधिकारेण तां विना यागाकरणप्रसक्तौ दर्शपूर्णमासकरणविध्यर्थत्वात्(2)। अत एव(3) तत्रत्यमपरुध्येत्यनुवादः। अतश्चाप्रसक्तत्वात्पुरुषार्थ एवायं(4) निषेधः (5)॥११

[1]क्रतूपकारकत्वेन तदनुपकारकत्वेन वा कथंचित्प्रसक्तस्यापि निषेधः क्रत्वर्थो भवितुमर्हतीति सूचयितुं क्रतुमध्ये इत्युक्तम्।

(2) 'यस्य व्रत्येऽहन्' (तै. ब्रा. ३-५-१.) इति वाक्यं कर्मदिने पत्न्यां रजस्वलायां तदपरोधविशिष्टयागप्रयोगविधायकमिति तात्पर्यम्॥

(3) यस्मात् स्मार्तवाक्येन दैवहविर्निरीक्षणादिनिषेधपूर्वापनयविधानद्वारा क्रत्वङ्गत्वेनापरोधः प्राप्तोऽत एवेत्यर्थः॥

(4) अतश्च "नोदक्ययाऽभिभाषेत" इति स्मृतेरियमेव श्रुतिर्मूलमिति भावः॥

(5)कलिकातामुद्रितकोशे "श्रौतप्रायश्चित्तप्राप्त्यर्थं इति तु शक्यते वक्तु-

**(१२)–अप्रकरणे तु तद्धर्मस्ततो विशेषात् ॥ अद्रव्यत्वात्तु शेषस्स्यात् ॥ २७ ॥ वेदसंयोगात् ॥ २८ ॥ द्रव्यसंयोगाच्च ॥ २९ ॥ स्याद्वा संयोगवत्फलेन सम्बन्धस्तस्मात्कर्मैतिशायनः ॥ ३० ॥**

**अप्रकरणे तु** किञ्चित्क्रतुप्रकरणरहिते सन्दर्भे "सुवर्णं हिरण्यं भार्यम् । दुर्वर्णोऽस्य भ्रातृव्यो भवति" * इत्यादौ श्रुतः सुवर्णधारणादिस्तु **तद्धर्मः** पुरुषार्थः न तु क्रतुप्रकरणाम्नातवत् क्रत्वर्थः । कुतः **ततः** क्रतुप्रकरणाम्नातात् अस्य अनारभ्याधीतस्य **विशेषात्** वैलक्षण्यात् । अन्यथा केषांचित्क्रतुप्रकरणे आम्नानं केषाञ्चिदनारभ्य म्नानमिति वैलक्षण्यमेव न स्यात् ॥ २६ ॥ अस्मिन् सिद्धान्ते शङ्कते – पुरुषार्थत्वपक्ष हि सुवर्णत्वविशिष्टस्य हिरण्यरूपद्रव्यस्य स्वर्गादिफलार्थं विधिरास्थेयः । स च न युज्यते विशिष्टविधिगौरवात् । अतः **अद्रव्यत्वात्** पुरुषगतफलार्थं द्रव्यविधेरसम्भवात् क्रतोः **शेषः स्यात्** तथा च सति क्रतुगतहिरण्यानुवादेन सुवर्णत्वरूपगुणमात्रविधानाल्लाघवमिति ॥२७॥ इतश्च क्रत्वर्थ एवायं **वेदसंयोगात्** तादृशवेदवाक्यगतायाः आध्वर्यवमिति वैदिकसमाख्याया विनियोजकतया समन्वयात् । क्रत्वर्थो हि समाख्यावशादध्वर्युणाऽनुष्ठीयेत ॥ २८ ॥ इतश्च क्रत्वर्थ एवायं – **द्रव्यसंयोगाच्च** सुवर्णं भार्यमिति द्रव्यप्राधान्यपदसमभिव्याहारात् भार्यमिति कृत्प्रत्ययबोधितं कर्मत्वं

---

मिति ध्येयम् " इत्यधिकं दृश्यते ॥ प्रयोजनं तु दर्शपूर्णमासयोस्तन्निषेधातिक्रमे याजुर्वेदिकं प्रायश्चित्तं पूर्वपक्षे । सिद्धान्ते तु मनुवाक्येन क्रत्वङ्गस्यापि निषेधबोधनात् 'दर्शपूर्णमासग्निहोत्रादिसर्वकर्मसु अविज्ञातप्रायश्चित्तमेवेतीदं स्पष्टम् ॥ * तै. ब्रा. २-२-४-

हि द्रव्यस्य क्रतुगतस्य हिरण्यस्य संस्कार्यत्वे युज्यते, न तु हिरण्यस्य वा तद्धारणस्य वा पुरुषार्थत्वे, तदानीं हिरण्यस्य गुणभूतत्वप्रसङ्गादिति ॥२९॥ एवं शङ्कायां समाधत्ते - **संयोगवत्** प्रजापतिव्रतादीनां "एतावता हैनसा विमुक्तो भवति" * इत्याद्यर्थवादिकफलसम्बन्धवत् हिरण्यधारणादेरस्यापि "दुर्वर्णोऽस्य भ्रातृव्यो भवति" † इत्याद्यर्थवादिकेन **फलेन सम्बन्धः स्याद्वा** स्यादेव। हिरण्योद्देशेन विधिस्तु नात्र सम्भवति, हिरण्यस्वरूपे आनर्थक्यात्। क्रतुगताहिरण्यस्य चोपस्थापकं न विद्यते। तस्मात् सुवर्णहिरण्यधारणादिकं **कर्म** पुरुषार्थकर्म इति **ऐतिशायनः** सिद्धान्तयतीति ॥ ३० ॥

**अनारभ्य "सुवर्णं हिरण्यं भार्यम्[1]। दुर्वर्णोऽस्य भ्रातृव्यो भवति" † इति श्रुते न तावत् क्रतुगताहिरण्योद्देशेन सुवर्णत्वविधिः धारणप्राप्त्यभावेनानुवादानुपपत्तेः। नापि "हिरण्यं हस्ते सम्प्रदाय षोडशिनस्स्तोत्रमुपाकरोति" इति विहितक्रतुहिरण्यधारणानुवादेन[2] सुवर्णत्वविधिः। विशिष्टोद्देशापत्तेः। अतो भार्यमिति कृत्प्रत्ययेन सुवर्णस्य कर्मत्वाभिधानात्तदुद्देशेनैव धारणाख्यसंस्कारविधिः। हिरण्यपदस्य तु सुवर्णरजतसाधारणवाचिनोऽनुवादत्वम्। न चैवमपि क्रतुगतसुवर्णोपस्थितावेव प्रमाणाभावः। सुवर्णस्वरूपे आनर्थक्याल्लौकिकक्रियासाधनीभूतग्रहणेऽपि च तत्तादवस्थ्यात्। सुवर्णस्यैव श्रुतकर्मत्वान्यथाऽनुपपत्त्या स्वर्गार्थवादिकफलकल्पनस्य च आश्रयाभावा-**

[1] भार्यमित्येतदनन्तरं "सुवर्ण एव भवति" (तै. ब्रा. २-२-४) इत्येतदधिकं जैमिनीयन्यायमालायाम् ॥

[2] हस्तपदवैयर्थ्यानुपपत्त्या संप्रदायेति क्त्वाप्रत्ययोपात्तसमानकर्तृकत्वस्य प्रयोजककर्तृतया नेयत्वेऽपि दानस्य दानपूर्वकधारणपर्यन्तत्वावगतेर्धारणप्राप्तिरिति भावः ॥ *तै. सं. २-६-१०, † तै. ब्रा. २-२-४,

दनुपपत्तेः परिशेषादेव क्रतुगतसुवर्णोपस्थितिलाभोपपत्तेरिति प्राप्ते—

न तावत् प्रकरणात्क्रतुसम्बन्धोपस्थितिः, अनारभ्याधीतत्वात् । नापि जुह्वादिवदव्यभिचरितत्वात्, लोकेऽपि सुवर्णसत्त्वेन व्यभिचारात् । न वा पारिशेष्यात्, श्रुतकर्मत्वान्यथानुपपत्त्या सुवर्णस्यार्थवादिकफलसाधनत्वकल्पनाया एव प्रसक्तेः परिशेषाभावात् । धारणस्य संस्कारकस्याप्याश्रयापेक्षायां तत्त्वेनाप्यर्थादन्वये बाधकाभावात् । न चेष्टापत्तिः । तथात्वे धारणसुवर्णोभयकरणकयोर्द्वयोर्भावनयोरपूर्वयोस्तत्पदयोश्च कल्पने गौरवापत्तेः, सुवर्णांशेऽप्यपूर्वविधित्वप्रसङ्गाच्च । "अध्वर्युं वृणीते" "स्वाध्यायोऽध्येतव्यः"[1] इत्यादौ तूभयोरपि दृष्टार्थत्वादुक्तगौरवाभावेन संस्कारविध्यन्यथानुपपत्त्या विनियोगकल्पनेऽपि न दोषः । प्रकृते तु धारणेन सुवर्णं संस्कुर्यात् तेन च तदाश्रितेन फलं भावयेदिति कल्पने गौरवम् । अतः कृत्यप्रत्ययलक्ष्या एकैवात्र भावना । तस्यां चावश्यकत्वादार्थवादिकस्य फलस्यैव भाव्यत्वं न तु सुवर्णस्य, उद्देश्यानेकत्वप्रसङ्गात् । अतस्सक्तुन्यायेन(²)विनियोगभङ्गात्सुवर्णहिरण्यावशिष्टधारणमेवार्थकर्मतया विधीयते । किञ्च—सुवर्णस्वरूपे आनर्थक्यात् यथैव तत्कार्ये क्रतुः एवं लौकिक्यापि क्रिया । तस्यामपि नैवानर्थक्यं क्षेत्रकर्मणि बलिहरणादिवत् निर्विघ्नपरिसमाप्त्यर्थत्वेन धारणाख्यसंस्कारोपपत्तेः । अतः परिशेषाभावात् न क्रत्वर्थत्वम् । न चोभयार्थत्वम्, एकस्यैव विधेः अंशे प्रयोजकत्वमंशान्तरे च प्रधानप्रयुक्तत्वादप्रयोजकतेति वैरूप्यापत्तेः। अतस्सक्तुवद्विनियोगभङ्गमङ्गीकृत्य धारणस्यार्थकर्मतैव युक्ता । न च तस्यापि वैदिकक्रियात्वसामान्यात् क्रत्वङ्गत्वं, सादृश्येन क्रतूप-

---

[1] तै. आ. २-१९. [2] २-१-५. अधिकरणेऽयं न्यायो द्रष्टव्यः.

स्थितौ धर्मातिदेशस्येवाङ्गत्वेऽपि बाधकाभावादिति वाच्यं; विधिबलेनोपस्थितेषु अनियमेन सर्वेष्विष्टेषु तद्गतनिरतिशयत्वस्यापि सर्वपुरुषाभिलषितत्वेन शीघ्रोपस्थितिकतया स्वर्गस्यैव कल्पनीयत्वात्, आर्थवादिकफलस्य स्ववाक्योपात्तत्वेन ततोपि शीघ्रोपस्थितिकत्वाच्च । क्रत्वर्थत्वे तु स्वगतेन वैदिकक्रियात्वेन क्रतुगतस्य तस्योपस्थितौ क्रतोरुपस्थित्या तदङ्गत्वकल्पने गौरवम् । अत एव विश्वजिद्रात्रिसत्रादौ न तत्कल्पनम् । प्रकृते तु विशिष्टधारणस्यार्थवादिकमेव फलमिति पुरुषार्थता ।

तत्त्वं तु—सुवर्णस्य कर्मत्वमेव [1]तस्यैव त्वार्थवादिकं फलम्। तेनोत पदाध्याहारस्य स्तुतिपक्षेऽपि समानत्वात् । न चात्राश्रयापेक्षा, विधिवैयर्थ्यस्य संस्कारविधिनैव परिहारात् । "दुर्वर्णोऽस्य भ्रातृव्यो भवति" * इत्यत्र भविष्यदर्थकत्वमात्रलक्षणा तु प्राचीनमतेऽप्यविशिष्टा। स्तुतिलक्षणा सुवर्णपदे अपूर्वसाधनत्वलक्षणा च तवाधिकेति ममैव लाघवमिति ॥१२॥

## (१३)—शेषोऽप्रकरणेऽविशेषात्सर्वकर्मणाम्।३१ होमास्तु व्यवतिष्ठेरन्नाहवनीयसंयोगात्।३२ शेषश्च समाख्यानात् ॥ ३३ ॥

अप्रकरणे प्रकरणविशेषरहिते अनारभ्याधीताः "येन कर्मणेर्त्सेत्तत्र जयान्जुहुयात्" † इति जयहोमादयः सर्वकर्मणां शेषः तात्कालिकानां कृष्यादीनामपि अविशेषात् वैदिकस्यैव कर्मणः इमे शेषभूताः नान्यस्येति

[1] भृधातुस्सकर्मकत्वात् ईप्सिततकर्मत्वमेव कृत्प्रत्ययार्थः । तथा च प्रथमवाक्ये सुवर्णसंस्कारकधारणविधिः । उत्तरवाक्ये च सुवर्णं परामृश्य तस्य भ्रातृव्यदुर्वर्णभवने विनियोगः क्रियते । इति भावः ॥

* तै. ब्रा. २ २-४. † तै. सं. ३-४ ६.

विशेषनियामकाभावात् ॥ ३१ ॥ अस्मिन् पूर्वपक्षे सिद्धान्तमाह — एते जयहोमादयः **होमास्तु** होमात्मानः वैदिकेष्वेव कर्मसु **व्यवतिष्ठेरन्** शेषतया सम्बध्येरन् कुतः होमानां सर्वेषां "यदाहवनीये जुह्वति । तेन सास्याभीष्टः प्रीतो भवति" * इति **आहवनीयसंयोगात्** आहवनीयाधिकरणकत्वात् । कृष्यादिकर्मसु च आहवनीयाग्न्यभावात् । जयादिहोमानां च लाघवात्परप्रयुक्ताग्न्युपजीवित्वात् । अतः यत्राहवनीयः तत्रैव वैदिककर्मसु जयादयः ॥ ३२ ॥ जयादिहोमानां **समाख्यानाच्च** आध्वर्यवमित्यादिसमाख्याबलादपि वैदिककर्मणामेव ते शेषाः । कृष्यादिलौकिककर्मार्थत्वे तु तत्र अध्वर्य्वादेरभावेन सा समाख्या बाध्येत ॥ ३३ ॥

**अनारभ्यैवाधीतं "येन कर्मणेर्त्सेत्तत्र जयान् जुहुयात्"† इति । कर्मणा ऋद्धिं स्वफलाधिक्यं प्राप्तुमिच्छेदित्यर्थः । अतश्च यथावस्थितफलार्थं विनैव जयादीन् कर्माणि । कर्मभ्यः फलाधिक्येच्छायां तु जयादयः कर्माङ्गम् । तत्र च कर्मत्वस्य क्रतुव्यभिचरितत्वात् न तावज्जुह्वादिवत्तदुपस्थितिः । न च लौकिकस्य कर्मणः कृषिभोजनादेर्दृष्टार्थत्वेनादृष्टार्थजयादिग्राहकत्वायोगः । "रोहिण्यां कृषिकर्माणि कारयेत्" "पुरस्तात्कृषिकर्मणां प्राच्यां क्षेत्रमर्यादायां द्यावापृथिवीयं बलिं हरेत्" इत्यादिवदस्यापि निर्विघ्नपरिसमाप्त्यर्थत्वेन फलोपचयार्थत्वेन वा ग्रहणोपपत्तेः । न च तथाऽपि जयादेराहवनीयसाध्यत्वात्कृष्यादौ तदभावादनङ्गत्वं जयादेरेव होमत्वेनाहवनीयप्रणयनप्रयोजकत्वोपपत्तेः । न च प्रधानसादेश्यासम्भवादनङ्गत्वं अङ्गगुणविरोधन्यायेन[1] तदसम्भवेऽप्यङ्गत्वोपपत्तेः । कृषिदेशेऽग्निनयनेन समानदेशसम्भवाच्च । वस्तुतस्तु—कृष्यादेर्दृष्टार्थतया विधेयत्वाभावेन प्रयोगविध्यभावादङ्गप्रधानयोरेकदेशत्व एव प्रमाणाभावः । अस्तु वा**

* तै. ब्रा. १-१-१०. † तै. सं. ३-४-६. [1] १२-२-९.

तत्। तथाऽपि तस्य लिङ्गादिरूपप्रमाणत्वाभावेन वाक्यसङ्कोचकत्वानुपपत्तेर्लौकिकवैदिकसाधारणसर्वकर्मार्थत्वमेव जयादीनामिति प्राप्ते—

अग्निमद्वैदिककर्मांशे तस्य परप्रयुक्ताग्नितत्प्रणयनोपजीवित्वं तदन्यकर्मांशे च तत्प्रयोजकत्वकल्पनमिति गौरववैरूप्यादिभिया कामश्रुतीनामाहिताग्न्यादिमात्र[1] विषयत्ववत् जयादिविधिनैव स्वलाघवार्थमाग्निमत्कर्मार्थतयैव जयादिविधानान्नेतरकर्मार्थत्वम् ॥१३॥

## (१४)-दोषात्त्विष्टिर्लौकिके स्याच्छास्त्राद्धि वैदिके न दोषस्स्यात् ॥ ३४ ॥ अर्थवादो वाऽनुपपातात्तस्माद्यज्ञे प्रतीयेत ॥ ३५ ॥

"यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणाश्चतुष्कपालान्निर्वपेत्"[2] इत्यत्र अश्वकर्मके प्रतिगृह्णातिशब्दिते दाने निमित्ते विधीयमाना **इष्टिः लौकिके** अविहिते मित्रादिसम्प्रदानके स्वेच्छया क्रियमाणे **स्यात् दोषात्** तत्रैव लौकिके अश्वदाने "वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाति"[2] इति पूर्वप्रस्तुतार्थवादोक्तस्य दोषस्य प्रसरात् । **वैदिके** पौण्डरीकाङ्गभूते "अश्वसहस्रं ददाति" "गौश्चाश्वश्च" इत्यादिके शास्त्रविहिते पौण्डरीकज्योतिष्टोमाद्यङ्गभूते अश्वदाने **हि दोषः** उपदर्शितार्थवादोक्तः **शास्त्रात्** उपदर्शिततत्तदश्वदानविधानपरशास्त्रबलादेव **न स्यात्** ॥ ३४ ॥ "वरुणो वा एतम्"[2] इत्यादिः **अर्थवादो वा** अर्थवाद एव **अनुपपातात्** मुख्यस्योपपातस्य वरुणग्रहग्रहणादिरूपस्यासम्भवात् । न खलु वैद्यके लौकिके वा अश्वप्रतिग्रहेण रोगनिदानादि श्रूयते, नापि प्रत्यक्षानुमानाभ्यां तथाऽवगम्यते । तथा च वरुणग्रहव्याधिगृहीतेनैव तेन

---

[1] ६-१-७. [2] तै. सं. २-३-१२.

तद्विमोचनार्थमवश्यं कर्तव्येष्टिरित्येतावानेवार्थो विवक्षितः । तथा च वाक्योपात्तफलाभावादध्याहारेण वा स्वर्गः कल्पयितव्यः कर्माङ्गभावो वा । तत्र स्वर्गसान्निधिकारणाभावात् वैदिकक्रियात्वसामान्येनाश्वप्रतिग्रहेण च सान्निधापनात् क्रतुसम्बन्धस्सुकल्पः । वैदिको ह्यश्वप्रतिग्रहः क्रर्मान्तःपातीति निमित्तत्वेन प्रतीयमानस्तद्देशवार्तिकथंभावापन्नमाङ्गिनमुपनयन्नुभयोस्साकाङ्क्षत्वादङ्गाङ्गिसम्बन्धं कल्पयति । **तस्मात् यज्ञे** शास्त्रीयकर्माङ्गे शास्त्रविहिते अश्वप्रतिग्रह एव वारुणेष्टिरियं स्यात् ॥ ३५ ॥

अनारभ्य "प्रजापतिर्वरुणायाश्वमनयत्स स्वां देवतामार्छत्स पर्यदीर्यत स एतं वारुणं चतुष्कपालमपश्यत्तं निरवपत्ततो वै सवरुणपाशादमुच्यत वरुणो वा एतं गृह्णाति योऽश्वं प्रतिगृह्णाति यावतोऽश्वान् प्रतिगृह्णीयात्तावतो वारुणाश्चतुष्कपालान्निर्वपेत्" *इति श्रुतम्। प्रतिग्रहशब्दोऽत्र दानपर इत्युत्तराधिकरणे वक्ष्यते । ततश्च यान्मित्रदायादादिभ्यो लौकिकं दानं तत्सम्बन्धिनीयमिष्टिः किं वा ऽश्वदानमात्रसम्बन्धिनी किं वाऽग्निमत्कर्माङ्गभूताश्वदानसम्बन्धिनीति चिन्तायां--अर्थवादानुरोधेन दानविषयत्ववदस्या इष्टेर्दोषनिर्घातार्थत्वस्याप्यवगमात् दोषस्य च "न केसरिणो ददाति" इत्यनेनाविहितलौकिकविषयत्वात् तदनुरोधेनास्या अपि लौकिकदानविषयत्वम् । इदं हि वचनं यत्रानियमेन सामान्यतो विहितेऽश्वविषये इच्छया प्रवृत्तिः यत्र वा नैव विहितं यथा मित्रदायादादिभ्यस्तद्विषयम् । अत एव यत्र विश्वजिदादौ सर्वस्वदानेऽश्वदानं नियतं तत्र तत्प्रकरणस्थेन वाक्यान्तरेणैव तस्य पर्युदासेऽप्यस्य शाखान्तरीयवचनस्योक्तविषये निषेधत्वमेव । अतस्तत्र निषेधबलेन दोषावगतेस्तन्निर्घातार्थाया इष्टेरपि तद्विषयत्वं भेदनहोमस्येव भेदनवद्दर्शपूर्णमासविषयत्वम् । अत एव दोषनिर्घातः फलं, अश्वदानं च

---

* तै. सं. २-३-१२.

निमित्तं, न तु शेषि । तथात्वे उक्तफलत्वानुपपत्तेः अव्यभिचरितक्रतुसम्बन्धाभावाच्च । यदि त्वस्या दोषनिर्घातार्थत्वं नाभ्युपगम्यते ततो यावच्छब्दसमभिव्याहारेणाश्वदानस्योद्देश्यत्वावगतेस्तावच्छब्दसमभिव्याहृताप्राप्तेष्टेस्तदङ्गत्वापातान्निमित्तत्वानुपपत्तिः । न हि यावच्छब्दो निमित्तत्ववाची, अपि तु साकल्यवाची । न च यावत्तावच्छब्दाभ्यां क्रियाद्वयस्य सम्बन्धमात्रावगतौ शेषित्वपक्षे आरादुपकारकत्वेन तन्त्रत्वापत्तेस्तावच्छब्दार्थप्राप्त्यभावेन विधेयत्वप्रसङ्गात् निमित्तत्वपक्षे च प्रतिनिमित्तं नैमित्तिकावृत्तिन्यायेन तावच्छब्दार्थस्य प्राप्तत्वेनाविधेयत्वाद्विधिलाघवानुरोधेन निमित्तत्वावगतिस्सिद्धान्तेऽपि सुलभेति वाच्यं पक्षद्वयेऽपि निमित्तानुरोधेन प्रधानानुरोधेन वाऽऽवृत्तिप्रसक्तौ कालैक्येन तन्त्रत्वप्राप्तेस्तावच्छब्दस्य प्रतिप्रसवविधित्वावश्यंभावात् । अत एव "गृह्णीयात्"[1] इति लिङः प्रयोजकत्वापरपर्यायहेतुत्वार्थकत्वेऽपि तदुपपत्तेर्निमित्तत्वनिश्चयो दुर्लभः । प्रत्युतापेक्षितत्वाच्छेषित्वमेव सिद्धान्ते स्यात् । मम तु दोषनिर्घातार्थत्वात्तन्निश्चय इति वैषम्यम् । अतश्च तद्बलेन लौकिक एवाश्वदाने आहिताग्नेस्स्यादिति प्रथमः पक्षः ॥

द्वितीयस्तु–यस्तावदर्थवादे जलोदरापरपर्यायो वरुणग्रहाख्यो दोषः स नैव प्रत्यक्षादिना वैद्यकसंहिताभिर्वाऽश्वदानजन्यतयाऽवगम्यते । अथ – मुख्यार्थबाधेऽपि पापमेव वृणोतीति व्युत्पत्त्याऽवयवयोगेन वरुणग्रहशब्देनोच्येत ततो वैदिकदानेऽपि कथञ्चित्त्यागाद्दुःखदर्शनात्तदेव वरुणग्रहशब्देनोच्यताम् । इष्ट्याडम्बराविनोदेन च तद्दुःखशमनात् "स एवैनम्"[1] इत्यस्याप्युपपत्तेरस्या दोषनिर्घातार्थत्वे प्रमाणाभावाल्लौकिकमात्रविषयत्वानुपपत्तेर्वाक्यसङ्कोचायो-

[1] तै. सं. २-३-१२.

गेन सर्वविषयत्वम् । न च गृह्णीयादिति लिङ्गा विहितत्वेनोक्तत्वा-ग्निहितस्योपस्थितिः । उद्देश्यस्य विहितत्वेन विशेषणायोगात्। अतस्सर्वविषयत्वमिति प्राप्ते—

जयादिन्याये[1] नैव लौकिके फलकल्पना वैदिके नेत्येवं, ग्निहि-तेऽप्यग्निरहिते तत्प्रणयनादिप्रयोजकत्वमितरत्र नेत्येवं च वैरू-प्यापत्तेर्विधिलाघवानुरोधेनैव स्वसङ्कोचं कामश्रुतिवदेवानुमन्यते। अतश्चाग्निमत्कर्मसम्बन्ध्यश्वदानमेवोद्देश्यम् । तदपि च न शेषितया प्रवर्ग्यन्याये[2] नाश्वदानगतप्रयोजनवत्त्वाजिज्ञासायामवश्योपस्थितक्र-तोरेव शेषित्वकल्पनौचित्यात् । अतश्चोपसद्वदेव नाश्वदानस्य हेतुत्वं शेषितया । अपि तु निमित्ततयैव । अस्तु वा तत् । तथा-ऽप्यग्निमत्कर्मसम्बन्ध्यश्वदान एवेयमिष्टिः ॥ १४ ॥

---

## (१५)—अचोदितं च कर्मभेदात् ॥ ३६ ॥ सा लिङ्गादार्त्विजे स्यात् ॥ ३७॥

इयमिष्टिः दातुः प्रतिग्रहीतुर्वेतिसंशये पूर्वपक्षमाह—**अचोदितमिति**॥ कर्मणोः ददातिप्रतिगृह्णात्यर्थयोः **भेदात्** प्रकृते प्रतिगृह्णीयादिति श्रवणेन दाने निमित्ते **अचोदितं** अविहितमिदं कर्म अतः प्रतिगृहीतुरिष्टिरिति भावः ॥ ३६ ॥ सिद्धान्तमाह— सेति । **सा** इष्ट्यधिकृतिः **आर्त्विजे** ऋत्विक्प्रेरके यजमाने दातरीति फलितं **स्यात्** । **लिङ्गात्** "प्रजापति-र्वरुणायाश्वमनयत्"[3] इत्युपक्रमे दातुः पीडाश्रवणलिङ्गात् । उपक्रमानुसा-रेण "यावतोऽश्वान् प्रतिगृह्णीयात्"[3] इत्यस्य प्रतिग्राहयेदित्यर्थकरणमावश्य-कमिति भावः ॥ ३७ ॥

सेयमिष्टिर्न प्रतिग्रहीतुः अपि तु दातुरेव उपक्रमस्थार्थवादे प्रजापतेर्दातुरेव प्रधानभूतस्य स इत्यनेन परामर्शात् प्रजापति-

---

[1] ३-४-१३. [2] ३-३-१२. [3] तै. सं. २-३-१२.

रेव वरुणायाश्वं दत्वा स्वां देवतां सम्प्रदानरूपां वरुणं जलोदररूपेण प्राप्त इत्यर्थावगमात्तस्यैव तन्निर्मोकार्थमिष्टिकर्तृत्वावगतेरुच्चैस्त्वादिवदेवोपसंहारस्थप्रतिग्रहीतृपदस्य दातृलक्षणार्थत्वात्। अथवाऽऽख्यातेन साक्षात्प्रयोजकसाधारण्येन कर्तृमात्राक्षेपात्साक्षात्सम्भवे प्रयोजककर्त्रनाक्षेपेऽपि इहोपक्रमानुरोधेन तदाक्षेपात्प्रतिग्रहं यः कारयेदित्यर्थावगतेर्विनैव लक्षणां दातुरिष्टिः । न चैवं तेन गतार्थत्वं मैत्रायणीयशाखायां "स एषोऽश्वः प्रतिगृह्यते" इत्येवं प्रतिग्रहोपक्रमाया एवास्या आम्नानात् तद्दर्शनोपक्रमस्थेऽप्यर्थवाद एव लक्षणेत्यधिकाशङ्कायास्सत्त्वात् । तन्निवृत्तिस्तु—शाखान्तरे प्रतिग्रहीतुरिष्ट्यवगमेऽप्यस्यां शाखायां प्रबलोपक्रमे प्रमाणाभावेन लक्षणाऽनुपपत्तेरेतद्वचनेन दातुरिष्टौ बाधकाभावात् । दूरस्थकर्मानुवादेनोद्देश्यसम्बन्धानुपपत्तेरस्य कर्मान्तरविधायकत्वाच्च । नामादीनामुपस्थापकानामभावेन शाखान्तर[2]न्यायाभावाच्च । दातुरुपक्रमानुरोधेन वा मैत्रायणीयशाखास्थोपक्रमस्यापि प्रयोजककर्तृत्वाभिप्रायेण व्याख्यातुं शक्यत्वाच्च ॥ १५ ॥

## (१६)—पानव्यापच्च तद्वत् ॥ ३८ ॥ दोषात्तु वैदिके स्यादर्थाद्धि लौकिके न दोषस्स्यात् ॥ ३९ ॥

"यस्सोमं वमिति यस्सोमवामी स्यात् तस्मा एतं सोमेन्द्रं श्यामाकं चरुं निर्वपेत्"[1] इति । इयमिष्टिः वैदिकसोमपानोत्तरवमने उत लौकिकोत्तरे इति संशये पूर्वपक्षमाह—**पानेति** । पानस्य सोमपानस्य **व्यापत्** वमनं **तद्वत्** अश्वप्रतिग्रहेष्टिपूर्वपक्षवत् । लौकिकपानवमनमित्यर्थः । तस्माद्विशेषस्तु तत्र दानं लौकिकं वैदिकं च सम्भवति अत्र वमनं लौकिकमेव न वैदिकमिति ॥ ३८ ॥ सिद्धान्तमाह—**दोषादिति** ।

---

[1] तै. सं. २-३-२.  [2] २-४-२.

वैदिके वमने दोषात् दोषश्रवणात् "वि वा एष इन्द्रियेण वीर्येणर्ध्यते (सोमपीथेनर्ध्यते) यस्सोमं वमिति "[1] इति । अर्थात् वमने धातुसाम्यमिति वैद्यशास्त्रप्रसिद्धफलात् हि यतः लौकिके न दोषः स्यात् अतः इयमिष्टिर्वैदिकसोमपान एव ॥ ३९ ॥

अनारभ्यैव "वि वा एष इन्द्रियेण (सोमपीथेनर्ध्यते) वीर्येणर्ध्यते यस्सोमं वमिति यस्सोमवामी स्यात्तस्मा एतं सोमेन्द्रं श्यामाकं चरुं निर्वपेत् "[1] इति श्रुतेष्टिरपि वैदिकस्यैव सोमस्य वमने भवेत् न तु लौकिकस्य वैरूप्यगौरवादिभयेन जयादिहोमवदेवोभयार्थत्वस्य तावदनुपपत्तेः । न चाश्वप्रतिग्रहेष्टिवद्दोषनिर्घातार्थत्वकल्पनया लौकिकमात्रविषयत्वशङ्का वमनजन्यस्यार्थवादिकस्येन्द्रियवीर्यनाशाख्यव्यर्द्धिरूपस्य दोषस्य वैदिकसोमवमनेऽपि जायमानत्वात् । तन्निर्घातार्थत्वस्य प्रत्यक्षबाधितत्वाच्च । वैद्यके वमनार्थतयैव सोमपानविधानात्तस्येन्द्रियादिनाशकत्वानुपपत्तेश्च । अत इन्द्रियवीर्यव्यर्द्धिपदेन लक्षणया क्रतुवैगुण्यस्यैवोपादानात् तन्निर्घातार्थत्वमेवास्या इष्टेर्युक्तम् । जायते च "मा मेऽवाङ्नाभिमति गाः "[2] इत्यादिमन्त्रवर्णात्सम्यग्जरणान्तस्यैव भक्षणस्य शेषप्रतिपत्त्यर्थत्वावगतेर्वमने क्रतुवैगुण्यम् । अतश्चाश्वदानवत् वमनस्य वैधत्वाभावेऽपीष्टेरग्निमत्क्रतुविशेषाङ्गत्वमविरुद्धम् ॥ १६ ॥

---

## (१७)—तत्सर्वत्राविशेषात् ॥४०॥ स्वामिनो वा तदर्थत्वात् ॥४१॥ लिङ्गदर्शनाच्च ॥४२॥

पूर्वोदाहृतवाक्ये वमनकर्तृविशेषाश्रवणात् ऋत्विजां वमनेऽपि इयमिष्टिरिति पूर्वपक्षसूत्रमाह—तदिति । तत् वमनं, सर्वेषामृत्विजां

---

[1] तै. सं. २-३-२. [2] तै. सं. ३-२-५.

यजमानस्य च इष्टिनिमित्तं **अविशेषात्** ॥ ४० ॥ सिद्धान्तमाह—**स्वामिन इति** । स्वामिनो वमने इयमिष्टिः क्रतोः **तदर्थत्वात्** क्रतुजन्यफलभोक्तृत्वस्य यजमान एव सत्त्वात् । वमने क्रतुवैगुण्यं इष्ट्या तत्परिहार एव फलम् । यः वमति स स्वक्रतुवैगुण्यदोषपरिहारार्थं निर्वपेदिति वमनकर्तुः निर्वापकर्तुश्च ऐक्यं श्रूयते अतो यष्टुरेवेति ॥४१ सोमपानेनात्मनस्संस्कारो भवति स च यजमानस्यैव न ऋत्विजां क्रयक्रीतत्वात्तेषां संस्कारो वमने जाते न भवतीति कथ्यते "सोमपीथेनर्ध्यते यस्सोमं वमिति"[1] इति वाक्येन, इदं लिङ्गं यजमानवमन एवेत्याह—**लिङ्गेति** ॥ ४२ ॥

**सैव किं याजमान एव वमने स्यादुत ऋत्विजोऽपीति चिन्तायां—ऋत्विग्वमनेऽपि प्रतिपत्तिविलोपादिना वैगुण्यस्यावश्यकत्वात्तत्समाधानार्थामेयमिष्टिस्स्यादेवेति प्राप्ते—**

**इष्टिस्तावदियं क्रत्वङ्गत्वाद्यजमानेन कार्या ऋत्विग्भिर्यजमानद्रव्यस्य त्यक्तुमशक्यत्वात्, स्वद्रव्येण स्वाग्निषु करणे पुनः क्रत्वर्थत्वानुपपत्तेः, यजमानकर्तृकायां च न ऋत्विग्वमनस्य निमित्तता, "यस्सोमं वमिति"[1] इति यच्छब्दबलेनेष्टेः वमनसमानकर्तृकत्वावगतेः तस्य चोपादेयविशेषणत्वेन विवक्षितत्वात् । अतश्च समानकर्तृकत्वबलाद्यद्यपीयमिष्टिर्नैमित्तिकी क्रतूपकारिका, यदि वा नैमित्तिकयेवार्थवादवशात्क्रतुवैगुण्यसमाधानार्था सती आरादुपकारिका, यदि वा वमनस्य जृम्भावदेवार्थिकं निमित्तत्वमङ्गीकृत्य तद्वदेवेयमिष्टिष्षष्ठ्या क्रतुयुक्तपुरुषसंस्कारिका, सर्वथा यजमानवमन एव स्यात् । ऋत्विग्वमने तु सामान्यविहितं यजुर्भ्रेषनिमित्तम् ॥ १७ ॥**

——:O:——

[1] तै. सं. २-३-१.

**(१८)–सर्वप्रदानं हविषस्तदर्थत्वात् ॥ ४३ ॥ निरवदानात्तु शेषस्स्यात् ॥ ४४ ॥ उपायो वा तदर्थत्वात् ॥ ४५ ॥ कृतत्वात्तु कर्मणस्सकृत्स्याद्द्रव्यस्य गुणभूतत्वात् ॥ ४६ ॥ शेषदर्शनाच्च ॥ ४७ ॥**

'यदाग्नेयः'* इत्यनेन विहितः पुरोडाशः कृत्स्नः अग्नये देयः उतैकदेश इति संशये पूर्वपक्षमाह **सर्वेति** । सर्वस्य पुरोडाशस्य **प्रदानं** 'अग्नये जुष्टं निर्वपामि'† इति ग्रहणेन निखिलस्य **तदर्थत्वात्**॥ ४३॥ सिद्धान्तमाह–**निरिति** । निष्कृष्य अवदानं निरवदानं "द्विर्हविषोऽवद्यति" इति विधानात् न सर्वहोमः । किन्तु **शेषस्स्यात्** ॥ ४४ ॥ पूर्वपक्ष्याशङ्कते–**उपाय इति** । द्विरवदानं **उपायः** हविषस्संस्कारः कल्प्यते । तथा च कृत्स्नहोमः कृत्स्नस्य **तदर्थत्वात्** अग्न्यर्थत्वात् । अयं भावः अनेकवारं द्विर्द्विरवदाय होतव्यं कृत्स्नं, तावता न कस्यापि वाक्यस्य विरोध इति ॥ ४५ ॥ सिद्धान्ती स्वमतं व्यवस्थापयति– **कृतत्वादिति** । **कर्मणः** होमस्य **सकृत्** **कृतत्वात्** नावृत्तिः **स्यात्** । ननु द्रव्यस्य शिष्टत्वात् तदनुसारेण यागाभ्यास इत्यत्राह–**द्रव्यस्य** यागं प्रति **गुणभूतत्वात्** न गुणानुसारेण प्रधानावृत्तिरिति भावः ॥४६॥ साधकान्तरमाह – **शेषदर्शनादिति** । शेषकार्यस्य "शेषात्स्विष्टकृतेऽवद्यति" इति विधिदर्शनाच्छेष आवश्यकः ॥ ४७ ॥

**शेषभूतसोमवमनप्रसङ्गात् किमाग्नेयादौ कृत्स्नस्य पुरोडाशादेर्यागसाधनता होमश्च उत द्व्यवदानादेरेव, तत् पुरोडाशादिस्तु वत्प्रकृतिकः उत कृत्स्नः पुरोडाशादिर्यागसाधनं होमस्तु**

* तै. सं. २-६-३. † तै. सं. १-१-४.

द्व्यवदानस्यैवेति चिन्तायां—उत्पत्तिवाक्ये कृत्स्नस्यैव साधनत्वप्रतीतेर्न तावत् द्व्यवदानस्यैव यागसाधनत्वम् । न हि "चतुरवत्तं (भवति) जुहोति"[1] इत्येतदुत्पत्तिवाक्यं, तथात्वे आग्नेयादिवाक्ये द्रव्यदेवताद्यनेकगुणविधाने वाक्यभेदापत्तेः । अतश्चोत्पन्नशिष्टत्वेन पुरोडाशावरुद्धे यागे चतुरवत्तविधानानुपपत्तेश्चतुरवत्तवाक्ये जुहोतिना यागमनूद्य अवदानाख्यस्संस्कार एव "निर्मन्थ्येनेष्टकाः पचन्ति" इतिवत् विधीयते । न हि यागाद्धोमो भिद्यते येन जुहोतिना नानुवाद इत्याशङ्क्येत । जुहोतिचोदितानामपि "स एष यज्ञः पञ्चविधः" इत्यादौ यजिनाऽनुवादात् । यजतिचोदितानां च प्रयाजादीनां "अभिक्रामं जुहोति"[3] इति जुहोतिनाऽनुवादाच्च । यागहोमयोर्भेदे प्रयाजानूयाजगृहमेधीययागादौ प्रक्षेपे प्रमाणाभावाच्च । अतो यागहोमयोरभेदात् युक्तो जुहोतिना यागमनूद्य प्रदेयपुरोडाशसंस्कारकतया अवदानविधिः । अतश्च कृत्स्नस्यैव पुरोडाशस्यावदानेन संस्कार्यत्वात् पुनःपुनरवदाय याग इति ज्योतिष्टोमवद्यागाभ्यासेऽपि न दोषः । वस्तुतस्तु सर्वं पुरोडाशं पुनःपुनरवदाय सकृदेव हृदयादिवत् याग इत्यपि शक्यं वक्तुम् । शेषकार्याणि स्विष्टकृदादीनि तु प्रकृते विद्यमानशेषाभावाद्धविरन्तराक्षेपकाणि । तद्वाक्यस्थशेषशब्दस्तु अवशिष्टवचनत्वासम्भवात् 'आज्येन शेषं संस्थापयति' इतिवत् अन्यपरः । दृष्टश्च शेषशब्दोऽन्यत्रापि 'ततश्शेषेण विशिष्टदेशजात्यादिमन्तो जन्म प्रतिपद्यन्ते' इति गौतमस्मृतौ स्वर्गारम्भकसुकृतातिरिक्तसुकृतपरः । न हि स्वर्गारम्भकसुकृतशेषेण देहान्तरप्राप्तिः, अन्यत्रान्यस्य व्यापारायोगात् । अतस्तत्र शेषशब्दोऽन्यथाच्येवेति प्रकृतेऽपि हवि-

[1] तै. सं. २-६-८. [2] १-४-१०. [3] तै. सं. २-६-१.

रन्तरमेव पूर्वसदृशं शेषशब्दवाच्यं भवति । अस्तु वा शेषकार्यानुरोधात् यस्यकस्यचित्प्रकृतस्यैकस्य हविषश्शेषस्थापनं, इतरेषां तु सर्वहोम एव । तथा च तद्विषयमेव मध्यपूर्वार्धवाक्यमिति प्राप्ते—

न चतुरवत्तवाक्येनावदानविधिः "द्विर्हविषोऽवद्यति" इत्यनेनैव प्राप्तेः । अनेनैव विधानेऽपि वा निष्ठाप्रत्ययोपादानवैयर्थ्यप्रसङ्गेनावदानसंस्कृतस्यैव द्रव्यस्य विधेयत्वाच्च । अतश्च यागानुवादेनावत्तस्यैव हविष्ट्वेन विधेयत्वादुत्पत्तिवाक्येऽष्टाकपालपदं पशुसोमवत् प्रकृतिद्रव्यविधायकम् । अतश्च द्व्यवदानस्यैव यागसाधनत्वादवशिष्टस्यानुनिष्पन्नप्रतिपत्तिश्शेषकार्याणीति भाष्यकारः ।

वार्तिककारस्तु—न यागहोमयोरभेदः याज्ञिकानां देवतोद्देशपूर्वकद्रव्यत्यागे प्रक्षेपाङ्गके यजिपदप्रयोगात्, देवतोद्देशद्रव्यत्यागप्रक्षेपेषु समप्रधानेषु जुहोतिपदप्रयोगात्, प्रक्षेपाङ्गकक्रियाद्वयवृत्तिजातिर्यागत्वं क्रियात्रयवृत्तिजातिश्च होमत्वमिति तयोर्भेदात् । अत एव न यजिना अङ्गभूतोऽपि प्रक्षेपः शक्त्योच्यते । अपि तु प्रमाणान्तरलभ्य एव । तदत्राग्नेयादिवाक्ये यागमात्रानुमानेऽप्यङ्गभूतस्य प्रक्षेपस्याप्राप्तत्वाच्चतुरवत्तवाक्येनैवावत्तोद्देशेन तद्विधानम् । अत एव तत्र द्वितीयाऽप्युपपद्यते । यागे त्वष्टाकपालः कृत्स्न एव हविः, प्रक्षेपस्तु त्यागसमकालीनस्तदुत्तरकालीनो वा द्व्यवदानस्य प्रतिपत्तिः । अत एवात्रत्यजुहोतिना उद्देशत्यागयोरुत्पत्तिवाक्यादेव प्राप्तेर्लक्षणया प्रक्षेप एव प्रतिपाद्यते । एवं च यत्र प्रकृतौ विकृतौ वा प्रत्यक्षवचनेनातिदेशेन वा प्रक्षेपप्राप्तिस्तत्र नाक्षेपः प्रक्षेपस्य । अन्यत्र तु प्रयाजादौ प्रमाणान्तराभावाद्यत्र न प्राप्तिस्तत्र यजिनैवाक्षेपः, तदङ्गक एव शक्तिग्रहात् । पात्नीवतादौ

**तु देवतासम्बन्धेनोद्देशत्यागयोरेव कल्पनात् पर्यग्निकरणान्तताङ्गरीतिविधानेन च प्रक्षेपानतिदेशान्न प्रक्षेपः । गृहमेधीयादौ तु आज्यभागपुनश्श्रवणाद्याजिश्रवणाद्वा तत्करणमिति विशेषः । अतश्च कृत्स्नस्यैव पुरोडाशस्य देवतायै त्यागादुपयुक्तस्य च द्व्यवदानस्य प्रक्षेपेण[1] प्रतिपत्तिः । उत्तरार्धादेश्च स्विष्टकृदिडादिना । न च त्यक्तस्य स्विष्टकृते पुनस्त्यागानुपपत्तिः । वचनवशेन त्यक्तस्यापि पुनस्स्वीकारेण त्यागोपपत्तेः । अतोऽस्ति शेष इति सिद्धम् ॥ १८ ॥**

## (१९)–अप्रयोजकत्वादेकस्मात् क्रियेरन् शेषस्य गुणभूतत्वात् ॥ ४८ ॥ संस्कृतत्वाच्च ॥ ४९ ॥ सर्वेभ्यो वा कारणाविशेषात्संस्कारस्य तदर्थत्वात् ॥ ५० ॥ लिङ्गदर्शनाच्च ॥ ५१ ॥

दर्शपूर्णमासे शेषकार्याणि स्विष्टकृदिडाप्राशित्रावदानरूपाणि । तानि यावद्धविषः कार्याणि किं वैकस्मादिति संशये पूर्वपक्षमाह—**अप्रयोजकत्वादिति । अप्रयोजकत्वात्** शेषकार्यं प्रति हविषः अप्रयोजकत्वात् प्रधानयागप्रयुक्तत्वाद्धविषः "शेषात् स्विष्टकृतेऽवद्यति" इति शास्त्रमेकस्मादवदानेऽपि चरितार्थं, अत **एकस्मात्** अवदानम् । यदि शेषकार्याणां हविः प्रधानं स्यात् तदा प्रतिप्रधानमिति न्यायप्राप्तिः । तदेव न । शेषकार्यं प्रत्यङ्गं हविः । अतः एकस्मादवदानेऽपि कृतार्थमित्याह—**शेषस्य गुणभूतत्वात्** ॥ ४८ ॥ सकृच्चैवंजातीयकेन शेषकार्येण संस्कृतं प्रधानमिति नापरस्मादपि कर्तव्यमित्याह—**संस्कृतत्वादिति** ॥ ४९ ॥ स्विष्टकृदाद्यवदानं हविषः प्रतिपत्तिसंस्कार इति चतुर्थे वक्ष्यमाणमर्थं सिद्धवत्कृत्य सिद्धान्तमाह—**सर्वेभ्य इति । संस्कारस्य** संस्काररूपस्य स्विष्टकृदवदानस्य **तदर्थत्वात्** हविरर्थत्वात् । तथा च हविषः प्रधानत्वेन

---

[1] पेणैव इति पाठान्तरम्.

संस्काररूपकारणस्य अविशेषात् सर्वेभ्योऽवदानं प्रतिप्रधानमङ्गावृत्तिरिति न्यायात् ॥५०॥ 'सकृत्सकृदवद्यति'[1] इति वीप्सा सर्वेभ्यः अवदाने लिङ्गमित्याह— लिङ्गेति ॥ ५१ ॥

अत्र भाष्यकारेण शेषकार्याणामर्थकर्मत्वादेकस्मादेव हविषश्शेषकार्याणि कर्तव्यानीति पूर्वपक्षयित्वा प्रतिपत्तित्वं प्रसाध्यसर्वेभ्य इति सिद्धान्तितम्। तत् [2]चतुर्थ एव तादृग्विषये प्रतिपत्तित्वस्य साधयिष्यमाणत्वात्पुनरुक्तत्वापत्तेः पूर्वाधिकरणप्रयोजनकथनार्थान्येतानि सूत्राणीति वार्तिककारो व्याचख्यौ। यदि पूर्वाधिकरणे शेषकार्याणां हविरन्तराक्षेपकत्वं पूर्वपक्षे तदा स्पष्टमेव प्रयोजनम्। यदा तु शेषकार्यानुरोधेन शेषस्थापनं तदा तेषां परप्रयुक्तद्रव्योपजीवित्वेनाप्रयोजकत्वेऽप्यर्थकर्मत्वेन तुषोपवापकपालवच्छेषस्य गुणभूतत्वाद्गुणानुरोधेन प्रधानावृत्तेरन्याय्यत्वादुपादेयविशेषणत्वेन तद्गतसङ्ख्याया विवक्षितत्वाच्चैकस्मादेव करणं शेषकार्याणाम्। "सकृत्सकृत्"[1] इति विशेषश्र[3]वणं तु "चतुर्थे चतुर्थेऽहन्यहीनस्य" इतिवत् प्रयोगान्तरविषयम्। सिद्धान्ते तु विद्यमानशेषत्वात् चातुर्थिकन्यायेन प्रतिपत्तिकर्मत्वादविवक्षितसङ्ख्यशेषाख्यसंस्कार्यानुरोधेन सर्वेभ्यः करणम्। वीप्सा चोपपन्नतरा ॥ १९ ॥

## (२०)—एकस्माच्चेत् याथाकाम्यमविशेषात् ॥५२ मुख्याद्वा पूर्वकालत्वात् ॥ ५३ ॥

एकस्मादवदानमिति कृत्वाचिन्तयेदमधिकरणम्। एकस्मादवदानपक्षे इच्छैव नियामिका उत अन्यत्किञ्चन नियामकमस्तीति संशये पूर्वपक्ष-

[1] तै. सं. २-६-६. [2] ४-१-१३. [3] वीप्साश्र. इति पाठान्तरम्.

माह **एकस्मादिति** । स्पष्टम् ॥ ५२ ॥ सिद्धान्तमाह—**मुख्यादिति** । **मुख्यात्** प्रथमात् अवदानं प्रथमोपस्थितेः सर्वपूर्वकालत्वात् । प्रथमोपस्थितपरित्यागे मानाभावादिति भावः ॥ ५३ ॥

**परप्रयुक्तद्रव्योपजीविनोऽर्थकर्मणश्च तुषोपवापादेरर्थेऽनेकपुरोडाशीयकपालानां मध्ये एकस्मिन् कपाले गृह्यमाणेऽनियमप्राप्तावाग्नेयस्य मुख्यत्वेन प्रथमोपस्थितत्वात्तदतिक्रमकारणाभावेन तदीयकपालस्यैव ग्रहणम् । ग्राह्यतावच्छेदकं च प्रथमोपस्थितत्वं न त्वाग्नेयत्वम् । अतो विकृतावन्याविकारस्य तत्त्वेन तदीयमेव कपालं ग्राह्यम् । यत्त्वत्र मूले सङ्गतिलोभेन कृत्वाचिन्तया यदा शेषकार्यानुरोधेन यस्यकस्यचित्स्थापनं तदा कस्येत्यपेक्षायां मुख्यस्येति सिद्धान्तितम् । तदाग्नेयवेलायां शेषकार्याणामबुद्धिस्थत्वाच्छेषस्थापनाक्षेपानुपपत्तेश्शेषकार्यानुष्ठानवेलायां चान्त्यस्यैवोपस्थितत्वेन तस्यैव स्थापनापत्तेरुपेक्षितम् । तत्रत्यमुख्यपदं वा प्रथमोपस्थितपरं, ततश्च यस्यैव यत्र प्रथमोपस्थितिराद्यस्यान्त्यस्य वा तस्यैव तत्र ग्रहणमिति न्यायशरीरार्थः ॥ २० ॥**

## (२१)—भक्षाश्रवणाद्दानशब्दः परिक्रये ॥५४॥ तत्संस्तवाच्च ॥५५॥ भक्षार्थो वा द्रव्ये समत्वात् ॥५६॥ व्यादेशाद्दानसंस्तुतिः ॥५७॥

दर्शपूर्णमासयोः श्रूयते चतुर्धाकरणे "इदं ब्रह्मणः । इदं होतुः । इदमध्वर्योः । इदमग्नीधः"[1] इति । इदं दानमृत्विक्परिक्रयार्थं उत भक्षार्थमिति संशये पूर्वपक्षमाह—**भक्षेति** ॥ वाक्ये भक्षपदाश्रवणात् **दानशब्दः** चतुर्थ्यन्तदानशब्देन निर्देशः परिक्रयार्थः ॥ ५४ ॥ उक्तार्थे साधकान्तरमाह-

[1] तै. ब्रा. ३-३-८.

त्वादिति । तस्य चतुर्थीनिर्देशस्य **संस्तवात्** "एषा वै दर्शपूर्णमासयोर्दक्षिणा" इति दक्षिणात्वेन स्तुतेः दक्षिणायाः परिक्रयार्थत्वं सिद्धं, तथाऽस्यापीति भावः ॥ ५५ ॥ सिद्धान्तमाह—**भक्षेति** । भक्षार्थ एष विभागः, **द्रव्ये** इत्यनन्तरं स्वत्वाभावस्य द्वयोरिति शेषः, **समत्वात्** तुल्यत्वात् । अयं भावः । देवतार्थं परिगृहीतद्रव्यस्य देवतायै निवेदितत्वेन स्वत्वाभावस्य द्रव्ये ऋत्विग्यजमानयोस्तुल्यत्वात् । न च स्वत्वाभावे निर्देशोऽपि न सम्भवतीति शक्यते वक्तुम् । तुलापुरुषदानादौ त्यक्तस्यापि द्रव्यस्य परस्परं कलहनिवृत्त्यर्थं यजमानकर्तृकविभागस्य दृष्टत्वेन तथाऽत्रापि सम्भवादिति ॥ ५६ ॥ दक्षिणात्वेन संस्तवादिति हेतुं निरस्यति—**व्यादेशादिति** । **व्यादेशात्** चतुर्थ्या सम्प्रदाननिर्देशसाम्यात् निर्देशस्य दक्षिणात्वेन **स्तुतिः**, "एष वै दर्शपूर्णमासयोरवभृथः"[1] इतिवत् । नैतावता परिक्रयस्सिध्यतीति भावः ॥ ५७ ॥

इति श्रीमद्वाधूलकुलजलधिकौस्तुभश्रीशाचार्यवर्यतनयस्य सन्ततसमुपासितसदाचार्यस्य श्रीमतः पण्डितरत्नतर्कतीर्थकस्तूरिरङ्गाचार्यस्य कृतिषु जैमिनिसूत्रवृत्तौ सारबोधिन्यां तृतीयस्याध्यायस्य

चतुर्थः पादः.

---

**आग्नेयस्य पुरोडाशस्य चतुर्धाकृतस्य "इदं ब्रह्मण इदं होतुः"[2] इत्यादिमन्त्रवर्णकल्पितो विभागरूपो व्यादेशश्श्रुतः स किं दक्षिणारूपतया परिक्रयार्थस्सन् ऋत्विक्संस्कारार्थः उत भक्षणरूपतया प्रतिपत्त्यर्थस्सन् शेषसंस्कारार्थ इति चिन्तायां—भक्षस्याश्रवणात् 'ब्रह्मणः'[2] इत्यादिषष्ठीश्रुत्या च वासिष्ठादिवत् ब्रह्मादीनां स्वामित्वावगमात्तस्य च दानमन्तरेणानुपपत्तेस्तस्य च त्वत्पक्षेऽपि[3] पुरोडाशे स्विष्टकृद्वदेव स्वीकारकल्पकत्वोपपत्तेस्सोमच-**

---

[1] तै. सं. १-७-५. [2] तै. ब्रा. ३-३-८. [3] त्यक्तेऽपि इति पाठान्तरम्.

मस्त्वत् ऋत्विक्संस्कारार्थं दक्षिणादानविधिरेवात्र कल्पयते। अत एव "एषा वै दर्शपूर्णमासयोर्दक्षिणा" इत्यपि लिङ्गमुपपद्यते। अतः पारिक्रयार्थ इति प्राप्ते—

सकलस्यैव पुरोडाशस्याग्नये त्यक्तत्वादनीशो यजमानो न शक्नोत्यन्यांस्तेन परिक्रेतुम् अतस्तव मते पुनस्स्वीकारो दानमानतिश्चेत्यनेककल्पना। स्विष्टकृति तु यागस्य श्रुतत्वात् स्वीकारकल्पनेऽपि न दोषः। अतो वरं भक्षणकर्तृत्वमेव सम्बन्धसामान्यवाचिषष्ठ्यर्थं अर्थं परिकल्प्यापेक्षितशेषप्रतिपत्तिरूपं भक्षणमेव ब्रह्मादिकर्तृकं मान्त्रवर्णिकविधिना विधीयते। अवश्यं चानतिरप्यनेन भक्षणोपयोगित्वेनावर्जनीया न तु गृहसुवर्णादिवत्क्रियान्तरोपयोगिनी अयोग्यत्वात्। अतश्चावश्यकत्वाद्भक्षणमेव सम्बन्धघटकत्वेन कल्प्यते न क्रियान्तरं अर्पणादिगौरवात्। अतश्च ब्रह्मसम्बन्धिसमर्पणमेव शेषप्रतिपत्तिः। तेन तु गृहीत्वा स्वयमन्यद्वारा वा भक्षणं सम्पादनीयमित्यप्यपास्तम्। आवश्यकभक्षणस्यैव तत्कर्तृकस्य प्रतिपत्तित्वोपपत्तौ क्रियान्तरकल्पने गौरवात्। दक्षिणाश्रुतिस्त्वानुषङ्गिकानतिसाधनत्वादर्थवादः ॥२१॥

इति श्रीखण्डदेवविरचितायां भाट्टदीपिकायां तृतीयस्याध्यायस्य चतुर्थः पादः.

——※:o:※——